१० पुरतोवलोक्य । अये उदितभूयिष्ठ एष भगवानशेषभुवनदीपदीपस्तपनः । तदुपतिष्ठे ।

---

नाट्यस्य यदनुष्ठानं तत्सूत्रं स्यात्सबीजकम् ।
रङ्गदैवतपूजाकृत्सूत्रधार उदीरितः ॥ इति ।

ननु नान्द्यन्ते सूत्रधार इत्यसंगतम् । न हि नान्दीपाठानन्तरं सूत्रधारो रङ्गभूमिं प्रविशति । किं तु प्रविश्य पठति । नचान्येनैव पठनीया । सूत्रधारपठनीयत्वेनैव नान्द्या उक्तत्वात् ।

सूत्रधारः पठेन्नान्दीं मध्यमं स्वरमास्थितः ।

इति वचनात् । उच्यते । नान्दीं पठित्वा सूत्रधारः प्रविशति [प्रविश्य?] पठति वा । नान्द्यन्ते सूत्रधारस्यैव श्रुतत्वेनेयमपि तेनैव पठनीया । प्रथमं च सूत्रधारः प्रविशतीति नोक्तम् । मङ्गलार्थं देवतानमस्कारादेरेव विधानात् । यद्वा । नान्दी तावद्रङ्गप्रवेशानन्तरं सूत्रधारेणैव पठनीया । नान्द्यन्ते सूत्रधार इति सूत्रधारसाम्यात्स्थापके प्रयोगः । यदाह भरतः ।

नान्दीं प्रयुज्य निष्क्रामेत्सूत्रधारः सहानुगः ।
स्थापकः प्रविशेत्पश्चात्सूत्रधारगुणाकृतिः ॥
पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते ।
प्रविश्य तद्वदपरः काव्यमास्थापयेन्नटः ॥

अत एव केचिन्नान्द्यन्ते स्थापक इत्येवं पठन्ति । ननु प्रस्तावनायाः पूर्वं बहूनि नाट्याङ्गानि सन्ति तानि किमिति नोक्तानि । यदाह भरतः ।

रङ्गप्रसादमधुरैः श्लोकैः काव्यार्थसूचकैः ।
ऋतुं कंचिदुपादाय भारतीं वृत्तिमाश्रयेत् ॥

---

१०. प्राचीम् N. पुरो Bh. K1. for पुरतो ; समुदित for उदित N.; °भूयिष्ठः स भग° K1. ; एव for एष B. N. O.

११. दीपकः A. ; Bh. om. तपनः; तमुपतिष्ठे A. D. तदनु° B. ; अम्बरमणिः for अशेष—तपनः N.

प्रणम्य । कल्याणानां त्वमसि महसां भाजनं विश्वमूर्ते
धुर्यां लक्ष्मीमथ मयि भृशं धेहि देव प्रसीद ।
यद्यत्पापं प्रतिजहि जगन्नाथ नम्रस्य तन्मे
भद्रं भद्रं वितर भगवन्भूयसे मङ्गलाय ॥ १५

---

भेदैः प्ररोचनायुक्तैर्वीथीप्रहसनामुखैः ।
सूत्रधारो नटीं ब्रूते मारिषं वा विदूषकम् ॥
स्वकार्यं प्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखम् ॥

अत एवाहालमिति । अयमाशयः । पूर्वोक्तान्यङ्गानि न भवन्ति किं तु परिषदोभिमुखीकरणानि । सा चेत्स्वयमेव कृतावधाना नवनाटकविलोकनोत्का च तदन्यत्प्रयुज्यमानमपि रसभङ्गाय परं भवतीति कृतं तत्प्रणयनेन । अन्यथा सभाया रसविच्छेदो भवेदिति निष्फलतेति ।

अये इति निपातो व्यासङ्गादिनानाकलितस्याकलनेन संभ्रमवाचकः । अकस्मात्सूर्योदयाकलनात् ।

ततः श्लोकं पठेदेकं गम्भीरस्वरसंयुतम् ।
देवस्तोत्रं पुरस्कृत्य यस्य पूजा प्रवर्तते ॥

इति भरतमतमनुमत्य माङ्गलिकतया रङ्गद्वारपाठ्यं श्लोकमुत्थापयति । उदितेति । उदितं भूयिष्ठं बहु यस्य सः । अस्य बहुतरभाग उदितः किंचिदेवोदयायावशिष्यत इति भावः अत्र नेक्षेतादित्यमुद्यन्तमिति निषेधादुदितभूयिष्ठ इत्युक्तम् । भगं ज्ञानादिसंपत्तिस्तद्वान्भगवानित्यर्थः । उपतिष्ठे श्लोकेनेति शेषः ॥

१२–१५. तदेवाह । कल्याणानामित्यादि । भो विश्वमूर्ते सर्वमय देव । दीव्यतीति देवो द्युतिमांस्तादृश हे । कल्याणानां महसां माङ्गलिकानां तेजसां त्वं भाजनं पात्रमसि । अतः प्रसीद प्रसन्नो

---

१२. N. om, प्रणम्य; त्वमिह for त्वमसि Bh. Kl. O.; ईशिषे for भाजनं Bh. Kl. O.; त्वं विधत्से for विश्वमूर्ते Bh. C. Kl. O.

१३. धुर्यां B. Bh. O.; दृशं for भृशं Kl. O.; देहि for धेहि Bh. Kl. N. O.

नेपथ्याभिमुखमवलोक्य । मारिष सुविहितानि रङ्गमङ्गलानि संनिपतितश्च भगवतः कालप्रियनाथस्य यात्राप्रसङ्गेन नानादिगन्तवास्तव्यो महाजनसमाजः । आदिष्टश्चास्मि विद्वज्जनपरिषदा यथा केनचिदपूर्वप्रकरणेन वयं विनोदयितव्या इति ।
२० तत्किमित्युदासते भरताः ।

---

भव । मयि मद्विषये । धुर्यां नृत्यधुरंधरां लक्ष्मीं संपत्तिमपि भृशमतिशयेन धेह्यारोपय । अथ शब्दः समुच्चयार्थः । धेहीति स्थाने देहीति पाठे ददस्वेत्यर्थः । तथा हे जगन्नाथ भुवनपते यद्यत्पापमारब्धविरुद्धं नम्रस्य मेस्ति तत्प्रतिजहि नाशय । यद्यदिति वीप्सया कायिकवाचिकमानसिकरूपं पापत्रयमुक्तम् । वीप्सा तु न तच्छब्दे कृता वीप्सितस्यैव तच्छब्देन परामर्शात् । तथैव व्युत्पत्तेः । क्वचिद्यत्पद इव तत्पदेपि वीप्सा । यथा यां यां प्रियः प्रैक्षतेत्यादौ । भद्रमदोषं भद्रमभीष्टम् । वितर देहि । यद्वा । भद्रं भद्रमतिशयेनाभीष्टं देहीत्यर्थः । किमर्थम् । मङ्गलायाशंसनीयकर्मार्थम् ॥ तादर्थ्ये चतुर्थी ॥ मङ्गलाय मङ्गलं कर्तुमिति वा । कीदृशाय । भूयसे प्रचुराय । तदिह हरिहरादीनपास्य भानोरुपस्थानेन प्रकरणनायकस्य ब्राह्मण्यं सूचितम् । अत एव देहीति ब्राह्मणोचिता प्रार्थना । सर्वक्षुद्रसत्त्वक्षयहेतोः प्रभातस्यादरेण प्रकरणकथाबीजसूचनमपि । तथाहि । यद्यदिति वीप्सया शार्दूलाघो-

---

१७. देवस्य for नाथस्य O.; नानादेशागतो महाजन° O.

१८. अयं after वास्तव्यो N.; Bh. Kl. om. महा-; समूहः for समाजः B. Bh. C. Kl. तत्किमित्यु. as in l. 20, Bh. and तत्किं प्रतीक्षते N. after समाजः; O. has here after समाजः the passage, lines 49-52, probably by mistake; आज्ञप्तोस्मि for आदिष्टोस्मि O.; Bh. N. om. च; विदग्ध for जन N.; before जन Bh., and before विद्वज्ज Kl.

१९. °दपूर्वेण प्रयोगेण वयं विनोदनीया N.; O. om. इति.

२०. Bh. N. om. तत्किं—भरताः here.

प्रविश्य पारिपार्श्विकः । भाव परिषन्निर्दिष्टगुणं प्रबन्धं नावगच्छामः ।

---

रघण्टाविमर्दसूचनम् । पापप्रतिघातानन्तरं च भद्रं भद्रमिति वीप्सया स्वस्य मालतीलाभेन मकरन्दस्य च मदयन्तिकालाभेनेष्टसिद्धिः सूचिता । भूयो मङ्गलपदेन कपालकुण्डलापकृतमालतीलाभो विद्यालाभादिकं च सूचितम् ॥

१६–२०. नेपथ्यं रङ्गभूमिः ॥ नेपथ्यं रङ्गभूमौ स्यादिति विश्वः । मान्यो भावेति वक्तव्यः किंचिन्न्यूनस्तु मारिष इत्यमरः ॥ मारिष एव मर्षणान्मार्षः । सूत्रधारोक्तनिर्वाहसहिष्णुरित्यर्थः । सुविहितानि भक्तिश्रद्धाकृतानि । रङ्गो नृत्यं तदर्थं मङ्गलानि लोकपालपूजादीनि ॥ रङ्गो नृत्ये रणक्षिताविति विश्वः ॥ संनिपतितः सर्वत आगत्यैकत्र मिलितः । कालप्रियनाथस्य तद्देशदेवभेदस्य । यात्राप्रसङ्गेनेति नृत्यकालसूचनम् ।

इदं ध्वजमहः श्रीमन्महेन्द्रस्य प्रवर्तते ॥

इत्यभिधानात् । वास्तव्यो वासी । महाजनसमाजो विद्वद्गोष्ठी । उदासत उदासीना भवन्ति । भरता नटाः ।

२१–२४. पारिपार्श्विकलक्षणं भरते ।

सूत्रधारस्य पार्श्वे यः प्रवचन्कुरुतेर्थनाम् ।

काव्यार्थसूचनालापं स भवेत्पारिपार्श्विकः ॥ इति ।

भाव मान्य नट । परिषदा प्रेक्षकेन निर्दिष्टो गुणो यत्र तं प्रबन्धं प्रकरणम् । प्रेक्षकस्तु ।

यस्तुष्टे तुष्टिमायाति शोके शोकमुपैति च ।

क्रुद्धः क्रुद्धे भये भीतः स नाट्ये प्रेक्षकः स्मृतः ॥

---

२१. N. om. प्रविश्य—भाव; पारिपार्श्विकः A.; तत्पारिषाश्वि° Bh. N.

२२. नाधिगच्छामः A. D.; N. om. न.

सूत्र० । मारिष कतमे ते गुणास्तत्र यानुदाहरन्त्यार्यविदग्धमिश्रा भगवन्तो भूमिदेवाश्च ।

२५ नटः । भूम्ना रसानां गहनाः प्रयोगाः
सौहार्दहृद्यानि विचेष्टितानि ।

---

इति भरतोक्तः । पूजावाक्यगर्भं प्रश्नमाह । कतम इति ।

गोत्रं नाम च बध्नीयात्पूजावाक्यं च सर्वतः ॥

इति भरतः । कतमे कियन्त इत्यर्थः । आर्याः सुकुलादिसंपन्नाः । यदाह भरतः ।

कुलं शीलं दया दानं धर्मः सत्यं कृतज्ञता ।
अद्रोह इति येष्वेतत्तानार्यान्संप्रचक्षते ॥

विदग्धाश्चतुःषष्टिकलावेदिनः । मिश्रा वेदान्तवेदिनः । भगवन्तः स्मृतिधराः । यदाह ।

देवाश्च लिङ्गिनश्चैव नानास्मृतिधराश्च ये ।
भगवानिति ते वाच्याः पुरुषाः स्त्रिय एव च ॥ इति ।

यद्वा । आराद्याता दूरं गता माम्यत्वादिदोषेभ्य इत्यार्याः । विदग्धाः काव्यरसवशमनसः । मिश्राः पूज्याः । पूज्ये मिश्रपदं नित्यं बहुवचनान्तम् ॥ मरीचिमिश्रैर्दक्षेणेति विष्णुपुराणात् ॥ भगवन्तो ज्ञानादिसंपन्नाः । भूमिदेवा ब्राह्मणाः । इह तत्रोद्धातकरूपा प्रस्तावना । यदाह भरतः ।

अप्रतीतं विस्मृतं वा यत्र कार्यं प्रकाश्यते ।
तदुद्धातकमित्याहुः प्रश्नोत्तरमनोहरम् ॥ इति ।

२५–२०, प्रबन्धे गुणानाह । भूम्नेति । यत्र प्रबन्धे रसानां शृङ्गारादीनां भूम्ना प्राचुर्येण गहना गम्भीराः सहृदयहृदयमात्रग्राह्याः प्रयोगाः सन्ति । एतेनास्य रसमयत्वमुक्तम् । यत्र प्रबन्धे विचेष्टितानि माल-

---

२२. प्रविश्य नटः for सूत्र° N.; A. D. om. मारिष; भाव for मारिष N.; N. om. तत्र; याननुवर्तन्ते भगवन्त आर्यत्रिदग्ध N.; आर्या विदग्धा मिश्रा A.: आर्या विद्वद्विदग्ध Bh.

२४. N. om. भग—वाश्च.

२५ सूत्रधारः for नटः N.

औद्धत्यमायोजितकामसूत्रं
चित्रा कथा वाचि विदग्धता च ॥

सूत्र० । स्मृतं तर्हि ।

नटः । भाव क इव । १०

सूत्र० । अस्ति दक्षिणापथे विदर्भेषु पद्मनगरं नाम नगरम् ।

---

तीमाधवादेः परस्परव्यापाराः सौहार्देन प्रेम्णा हृद्यानि मनोज्ञानि । यत्रौद्धत्यं नायकनायिकासखीभृत्यादिगुणमाहात्म्यमस्ति । कीदृशम् । आयोजितं विहितं कामसूत्रमनङ्गप्रयोगो यत्र तत् । यद्वा । औद्धत्यं निजोत्कर्षपुरःसरमन्यावज्ञाविष्करणम् । तथायोजितस्य समन्तात्कार्याभिमुखीकृतस्य कामस्य मन्मथेच्छायाः सूत्रं सूचकम् । सूत्रं संभोगः पटारम्भकस्तन्तुर्वा । अनेनात्र कामोद्दीपकतयौद्धत्यं गुणाय । स्वाभाविकस्य तस्य भूषणत्वमिति दर्शितम् । यत्र चित्राश्चर्यजनिका कथा कल्पितकथत्वात् । रसमयत्वाच्चाश्चर्यम् । वाचि वचने विदग्धता परिपाको निर्दोषत्वं वक्रता च यत्र । एतेनान्यनाटकादस्याधिकगुणवत्त्वमुक्तम् । तं प्रबन्धं नर्तितुमादिशन्ति मिश्रा इति शेषः । किमिव [क इव] किं स्मृतमित्यर्थः ।

३१–३४. अधुना

रुणद्धि रोदसी चास्य यावत्कीर्तिरनश्वरी ।
तावत्किलायमध्यास्ते सुकृती वैबुधं पदम् ॥

इति निजनामादिकथनफलमनुरुध्य तदाचरति । अस्तीत्यादि । दक्षिणदेशस्य शृङ्गाररसवशतया [शृङ्गाररसर्वस्वतया] तद्देशजत्वेन स्वस्य

---

२८. चित्राः B. C. D. O.; विचित्रता for विदग्धता O.

२९. N. has before this line नटः । भाव कतमास्मिन्प्रकरणे; स्मृतिमभिनीय Bh. विचिन्त्य N. before स्मृतं; N. om. तर्हि.

३०. किमिव A. O.; N. omits नटः । भाव and tacks क इव to स्मृतं.

३१. दक्षिणपथे A. O.; N. om. विदर्भेषु; पद्मपुरं नाम B. C. D. पद्मनगरी O.

तत्र केचित्तैत्तिरीयिणः काश्यपाश्चरणगुरवः पङ्क्तिपावनाः पञ्चाग्नयो धृतव्रताः सोमपीथिन उदुम्बरनामानो ब्रह्मवादिनः प्रतिवसन्ति ।

---

तदुभयरसवर्णनशक्तिरुक्ता । विदर्भेष्वित्यनेन वैदर्भीरीतिपरिचयचातुरी दर्शिता । पद्मनगरं पद्मावती । नाम प्रसिद्धौ । न तु नामपदमभिधानार्थम् । तदा प्रकृत्यादित्वात्तृतीया स्यादित्यवधेयम् । तैत्तिरीयिणस्तैत्तिरीयकनामशाखाविशेषपाठिन इत्यर्थः । काश्यपाः काश्यपगोत्राः । चरणगुरव इति । चरणशब्दः शाखाविशेषाध्ययनपरैकतापन्नजनसंघवाची । तत्र समूहे ते गुरवः क्रियां कृत्वा वेदाध्यापयितारः ।

स गुरुर्यः क्रियां कृत्वा वेदमस्मै प्रयच्छति ॥

इति स्मृतेः । यद्वा । चरणैः कलापादिभिर्गुरवो महान्तः । पङ्क्तिपावनाः पङ्क्तौ भोजनादिगोष्ठ्यां पावना अग्रभोजिनः पवित्रा वेत्यर्थः । यद्वा ।

यजुषां पारगो यस्तु साम्नां यश्चापि पारगः ।
अथर्वशिरसोऽध्येता ब्राह्मणः पङ्क्तिपावनः ॥

इति लक्षिताः । पञ्चाग्नयो दक्षिणाग्निगार्हपत्याहवनीयसभ्यावसथ्यरूपाग्निपञ्चकोपासकाः । धृतव्रताश्चान्द्रायणादिव्रतयोगिनः । सोमपीथिनः सोमो लताविशेषो हुतशेषो वा तत्पायिनः । अनेन सोमयागयाजित्वमुक्तम् । डम्बरनामानो डम्बरमुत्कर्षसूचकं कुलनाम येषां ते । यद्वा । डम्बरं प्रसिद्धं नाम येषां ते ॥ प्रसिद्धौ डम्बरं विदुरिति विश्वः ॥ ब्रह्मवादिनो वेदज्ञा इत्यर्थः ।

---

२२. ब्राह्मणाः after तत्र N.; तैत्तिरीयाः N. तैत्तिरीयिणः K1.; यायावा [व ? ]रा before पञ्चाग्नयो N.

२३. °पातिनः Bh.; डम्बर A. औदुम्बर Bh. for उदुम्बर ; °पीथिनो ब्राह्मणा ब्रह्म° A. ; प्रतिनिवसन्ति K1.; A. B. C. D. add स्म after प्रतिवसन्ति.

ते श्रोत्रियास्तत्त्वविनिश्चयाय भूरि श्रुतं शाश्वतमाद्रियन्ते । ३९
इष्टाय पूर्ताय च कर्मणेर्थान्दारानपत्याय तपोर्थमायुः ॥
तदामुष्यायणस्य तत्रभवतः सुगृहीतनाम्नो भट्टगोपालस्य

३९–३६. त इत्यादि । ते कथितरूपाः । श्रोत्रियाश्छन्दोध्येतारः । जन्मादिसंपन्ना ब्राह्मणा वा । भूरि प्रचुरम् । शाश्वतं सार्वकालिकम् । श्रुतमध्ययनमाद्रियन्ते श्रद्दधति । यद्वा। शाश्वतं नित्यागमं वेदाख्यमाद्रियन्ते । कीदृशम् । भूरि श्रुतं बहुभ्यो बहुधा बहुभिः सहाभ्यस्तम् । किमर्थम् । धर्मस्य कर्तव्याकर्तव्यरूपस्य विनिश्चयाय निर्णयाय । वैदिककर्मणि निर्णयादेव प्रवृत्तेरिति भावः ॥ श्रोत्रियंश्छन्दोधीत इति पाणिनिसूत्रम् ॥

जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते ।

विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्यते ॥

इति स्मृतिः ॥ शाश्वतमित्यत्र कालाट्ठञं [ठञं?] बाधित्वा शाश्वते प्रतिषेध इति भाष्यवचनादण् ॥ तथा तेर्थान्धनान्याद्रियन्ते । इष्टाय कर्मणे यागादिकार्यार्थम् । पूर्ताय कर्मणे खातादिकार्यार्थम् । यागादीनां धनसाध्यतया तेषां तदादरो न तु भोगायेति भावः । दारान्पत्नीराद्रियन्ते । अपत्याय संतत्यर्थं न तु कामायेत्यर्थः । त आयुर्जीवनमाद्रियन्ते । तपोर्थं तपश्चरणार्थं न तु व्यसनार्थम् । क्लेशबहुलं धर्म्यं कर्म तपः । तदनेन तेषां सर्वगुणवत्त्वं दर्शितम् ॥ भूयिष्ठं [स्फारं?] भूयश्च भूरि चेत्यमरः ॥ अथ क्रतुकर्मेष्टं पूर्तं खातादिकर्मणि । दाराः पुं भूम्नि च ॥ विनिश्चयायेत्यादौ तादर्थ्ये चतुर्थी ॥

३७–४१. अत्र कुले जात आमुष्यायणः । तत्रभवतः पूज्यस्य । सुगृहीतं शोभनोच्चारणं बलिकर्णादिवन्मङ्गल्यं नाम यस्य । भट्टश्चतुःशास्त्राभिज्ञः । पवित्रा पुण्या कीर्तिर्यस्य । तस्यात्मसंभवः पुत्रः ।

३५. विनिर्णयाय for विनिश्चयाय N.
३७. तत्रामुष्यायणस्य D.; N. om. सुगृहीतनाम्नो.

पौत्रः पवित्रकीर्तेर्नीलकण्ठस्यात्मसंभवो भट्टश्रीकण्ठपदलाञ्छ-
नो भवभूतिनामा जातूकर्णीपुत्रः कविर्निसर्गसौहृदेन भरतेषु
४० स्वकृतिमेवंप्रायगुणभूयसीमस्माकमर्पितवान् । यत्र खल्वियं
वाचोयुक्तिः ।

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान्प्रति नैष यत्नः ।

---

श्रीः सरस्वती कण्ठे यस्य स श्रीकण्ठः । तद्वाचकं पदं लाञ्छनं चिह्नं यस्य सः । नाम्ना श्रीकण्ठः । प्रसिद्ध्या भवभूतिरित्यर्थः ॥ [श्रीर्वेशरचनाशोभाभारतीसरलद्रुष्विति मेदिनीकरः ॥] जतूकर्णगोत्र-प्रसूता जातूकर्णी तस्याः पुत्रः । निसर्गसौहृदेन साहजिकसौहार्देन ॥ [ननु हृद्भगसिन्ध्वन्ते पूर्वपदस्य चेत्युभयवृद्ध्या सौहार्दमिति स्यात् । उच्यते । हृदित्यादौ प्रतिपदोक्तस्य ग्रहणाद्धृदयस्य हृल्लेखेति हृदादे-शस्यादिवृद्धिः । यद्वा । संज्ञापूर्वको विधिरनित्य इति वचनादुभय-पदवृद्धेरनित्यत्वम् । यद्वा । सुहृद्दुर्हृदौ मित्रामित्रयोरिति निपातस्य सुहृच्छब्दस्यावयवो हृच्छब्दस्तदन्तोत्तरपदवृद्धिर्भवति ॥] एवंप्रायगुण-भूयसीं भूम्ना रसानामित्यादिप्रायैर्गुणैरुपचितामर्पितवान्प्रयोगतोर्थतश्च संक्रमितवान् । खलु प्रसिद्धौ वाक्यभूषायां वा । वाचोयुक्तिर्वचनर-चनम् ॥ [वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेष्विति षष्ठ्यलुक् ॥ ]

४२–४५. संप्रति स्वकौशलबलेन सगर्वमाह । ये नामेत्यादि । इह तावत्त्रिविधाः पुरुषाः । केचिदज्ञा एव । केचिदद्वैतमतमग्नमनसः काव्यरसविरसाः । इतरे सहृदयहृदयामोदिकाव्यभव्यरसभररसिकाः । तत्राद्यान्प्रत्याह । ये केचिदज्ञा नोस्माकम् । इह प्रबन्धे । अवज्ञा-

---

३८. पवित्रकीर्तिर्नील° O.; आत्मजः for आत्मसंभवः N.; Bh. N. om. भट्ट; पदवा-क्यप्रमाणज्ञो before भवभूति N.; भवभूतिर्नाम N. O.

३९. N. om. जातूकर्णीपुत्रः; सौहार्देन for सौहृदेन N.

४० वर्तमानः before स्वाकृतिम् K1. N. O.; प्रगुण for प्रायगुण N.; Bh. om. प्राय; तत्र for यत्र B.; तस्य कवेः for यत्र O.

उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥ ४५

मवधीरणम् । प्रथयन्ति ख्यापयन्ति । नाम संभावनायाम् । संभाव्यत इदं न तु वास्तवमित्यर्थः । ते किमपि किंचिदल्पं जानन्ति । तान्प्रति ताँल्लक्षीकृत्य मम नैष यत्नः । नहि बधिरे गीयते । यद्वा । किंशब्द आक्षेपे । ते किं जानन्ति किं तु न जानन्तीत्यर्थः । द्वितीयान्प्रत्याह । ये नाम निश्चये वैषयिकसुखविमुखा मुमुक्षव इहावधीरणामाचरन्ति ते किमपि वाङ्मनसागोचरं परं ब्रह्म जानन्ति । ते नमस्यास्तान्प्रति मम नैष यत्नः । न हि सम्राजमधिकृत्य कौपीनं सूत्र्यत इति भावः । अन्त्यान्प्रत्याह । मम समानधर्मा तुल्यगुणः कोऽपि जन उत्पत्स्यते जन्माप्स्यत्यस्ति विद्यते वा तं प्रत्येष यत्न इति भावः । इहाल्पज्ञत्वेन साधर्म्यमनौद्धत्याय । बहुज्ञत्वेन साधर्म्यं कदर्यदुर्जनविवर्जनायेत्युभयत्र विवक्षा । अथेदानीमनुत्पन्नस्य कथमुत्पादोऽत्रानुपलब्धस्य वा कथमुपलम्भ इत्युभययोग्यतामाह । काल इति । यतः कालोऽयं निरवधिर्विगतावसानः । विपुला महती च पृथ्वी भूमिः । तथा च तस्येदानीमनुत्पन्नस्य कालान्तर उत्पाद इहानुपलब्धस्य देशान्तर उपलम्भश्च स्यादिति भावः । इह प्रथमार्धे बहुत्वेन प्रयोगो द्वितीयार्ध एकत्वेन प्रयोगश्च न दोषः । भिन्नवाक्यार्थत्वात् । एकवाक्यार्थत्वे तादृक्प्रयोगस्यायोग्यतया दोषत्वात् । तथैव व्युत्पत्तेरित्यवधेयम् । [यद्वा । अवज्ञाप्रथमावसरेऽहंकारेणात्मनो गौरवाद्बहुत्वं निजसमतावसरे शान्त्यात्मन्येकत्वम् । यद्वा । जात्यभिप्रायमेकवचनम् ।]

४४. °त्स्यते मम च कोऽपि N.; समानजन्मा O.

४५. Between this stanza and the following, O. has कविवर्णनं च प्रति तेनैवमुक्तम् ।
गुणैः सतां न मम को गुणः प्रख्यापितो भवेत् ।
यथार्थनामा भगवान्यस्य ज्ञाननिधिर्गुरुः ॥

N. also has this, but it reads प्रति तु for च प्रति, एव for एवं, and मम न for न मम. K1. has this with मम यथा कोऽत्र for सतां न मम को. N. has also the following passage before कविवर्णनं &c.:—तदुच्यन्तां तत्प्रख्यापनाय सर्वे कुशीलवा यथा संगीतकप्रयोगे धनिकापरिग्रहे च वर्तेन्तामिति ।

अपिच । यद्वेदाध्ययनं तथोपनिषदां सांख्यस्य योगस्य च
ज्ञानं तत्कथनेन किं न हि ततः कश्चिद्गुणो नाटके ।
यत्प्रौढत्वमुदारता च वचसां यच्चार्थतो गौरवं
तच्चेदस्ति ततस्तदेव गमकं पाण्डित्यवैदग्ध्ययोः ॥

४६–४९. अधुना निजगुणगरिमोपदर्शनेन निजग्रन्थे विदग्धादरमाह । यद्वेदेत्यादि यत्र खल्वियं वाचोयुक्तिरित्यत्राप्यनुषज्यते । अद्वैतप्रतिपादको वेदभाग उपनिषत्तज्ज्ञानम् । योगः पातञ्जलशास्त्रम् । तयोरध्ययनज्ञानयोः कथनेन किम् । अपि तु न किमपीत्यर्थः । यतस्ततो वेदाध्ययनादेर्नाटके कश्चिद्गुणो नास्ति । तेषां नाटकेऽनुपयोगात् ॥ तत इति ल्यब्लोपे पञ्चमी ॥ तान्प्राप्य नाटके न कश्चिद्गुण इत्यर्थः । वयं सर्वमेव विज्ञोनङ्कतया पुनस्तदत्र न निबद्धमिति भावः । तर्ह्यत्र कवेर्वेदादिज्ञानज्ञापनं किमर्थमत आह । यदिति । वचसां यत्प्रौढत्वं वाक्यार्थे पदं पदार्थे वाक्यं तत्कृतिः । यथा न दैवीयं किं तु मानुषीत्यर्थे निमेषवती । चन्द्रवदित्यर्थे नयनसमुत्थं ज्योतिरत्रेरि[वे?]ति । यदाह दण्डी [वामनः?] ।

पदार्थे वाक्यवचनं वाक्यर्थे च पदाभिदा ।
प्रौढिर्व्याससमासौ च साभिप्रायत्वमस्य च ॥ इति ।

यच्च वचसामुदारता विकटत्वं यस्मिन्सति पदानि जनो नृत्यन्तीवेति मन्यते । यद्वा । उदारतालंकारादिदोषशून्यत्वम् । यद्वा । उदारता गुणभेदः । यदाह दण्डी ।

उत्कर्षवान्गुणः कश्चिदुक्ते यस्मिन्प्रतीयते ।
तदुदाराश्रयं तेन सनाथा काव्यपद्धतिः ॥ इति ।

यच्चार्थतो गौरवमनर्घ्यार्थता । यद्वा । स्वल्पं वचनमर्थसार्थप्रसरसमर्थमित्यर्थः । तद्यदि नाटकेस्ति ततस्तदेव पाण्डित्यवैदग्ध्ययोर्गमकं

४६. N. om. अपिच.

अतो यदस्माकमर्पितं प्रियसुहृदा तत्रभवता भवभूतिनाम्ना ५०
प्रकरणं स्वकृतिर्मालतीमाधवं नाम तदेव तत्रभवतः काल-
प्रियनाथस्य पुरतः प्रयोगेण प्रख्यापयितुमुद्यताः । तत्सर्वे कुशी-
लवाः संगीतप्रयोगेण मत्समीहितसंपादनाय प्रवर्तन्ताम् ।

नटः । स्मृत्वा । एवं क्रियते युष्मदादेशः किं तु या यस्य
युज्यते भूमिका तां खलु तथैव भावेन सर्वे वर्ग्याः पाठिताः । ५५

---

बोधकम् । पण्डितो वेदाध्ययनादिकुशलस्तस्य भावः पाण्डित्यम् ।
वैदग्ध्यं रसादियोगिप्रबन्धबन्धनकौशलम् । अनेन ग्रन्थे सर्वगुण-
वत्त्वमुक्तम् । तत्कर्तृत्वेनात्मनः सर्वपर्थीनमतिमत्त्वमप्युक्तम् । नाटक
इति । ननु नाटक इत्ययुक्तम् । अस्य प्रकरणत्वात् । प्रकरणनाट-
कयोर्भेदात् । मैवम् ॥ नट नृत्ताविल्यस्य घञि स्वार्थे कनि नाटक-
मिति ॥ तथा च नाटके नाट्य इत्यर्थात् ।

५४-५६. भूमिका व्याजप्रवेशः । यदाह भरतः ।

अन्यरूपैर्यदन्यस्य प्रवेशः स तु भूमिका ॥ इति ।

वर्गे भवा वर्ग्याः । नटमेलकस्था इत्यर्थः । सौगतस्य बौद्धस्य जरत्प-
रिव्राजिका वृद्धा भिक्षुकी । एतादृशी दौत्ये प्रशस्ता । यदाह भरतः ।

---

५०. ततो A. for अतो; यत्तदस्माक° Bh.; °दा तत्रभवता काश्यपेन भव० Bh. तत्रभवता भव° Kl.

५१. ब्राह्मणेन before प्रकरणं Bh.; कृत A. कृतं B. for कृतिः; तदेतदेव A. तदस्मि-न्नेव Bh. for तदेव; भगवतः for तत्रभवतः Bh.

५२. कालप्रियनाथस्य सकलजगदेकचक्षुषो विश्वात्मनः सूर्यस्य पुरतो यथाप्रयोगेण Bh.; अद्भुपगता Bh. Kl.; सर्वेकुशी° A. Bh.

५३. संगीतक Bh. C. D. Kl.; यथास्वं before संगीतक Bh.; °प्रयोगेन Kl.; भूमिकाकरणेन च before मत् Bh.

५०—५३. N. O. om. this passage.

५४. प्रविश्य before नटः O.; सहर्षं after स्मृत्वा Bh.; एष Kl. Bh. O. and स एष N. for एवं; तावद्भूमिकाः सर्वाः for किं तु—खलु. N.

५५. तदेव for तथैव Bh. Kl. O.; O. om सर्वे; Bh. om. भावेन.

सौगतजरत्प्रव्राजिकायास्तु कामन्दक्याः प्रथमां भूमिकां भात्र एवाधीते तदन्तेवासिन्यास्त्वहमवलोकितायाः ।

सूत्र० । ततः किम् ।

---

विधवेक्षणिका दासी भिक्षुकी शिल्पकारिका ।

प्रविश्य चाशु विश्वासं दूतीकार्यं च विन्दति ॥ इति ।

वृद्धत्वं चास्या रूपशून्यत्वसर्वदृश्यत्वप्रगल्भत्वसूचकम् । यदाह ।

लज्जितं नाथवन्तं वा रूपिणं वा तथातुरम् ।

दूतं वाप्यथ वा दूतीं न तु कुर्यात्कथंचन ॥

अन्तेवासिनी निकटशिष्या । अहं भूमिकामधीय इत्यन्वयः । ततः किमिति । एतावदुक्त्वा किमिति विरतोसीत्यर्थः । प्रकरणलक्षणं भरते ।

आत्मशक्त्या कविर्यत्र कथां नायकमेव च ।

औत्पात्तिकं प्रकुरुते तद्धि प्रकरणं विदुः ॥

इदं च शुद्धम् । यदाह भरतः ।

द्विधा प्रकरणं तत्तु शुद्धं संकीर्णमेव च ।

कुलस्त्रीरचितं शुद्धं संकीर्णं वेश्यया कृतम् ॥

अत्र नाटके यादृशो नियमस्तादृशः । नायकलक्षणं भरते ।

नेता विनीतो मधुरस्त्यागी दक्षः प्रियंवदः ।

रक्तलोकः शुचिर्वाग्मी रूढवंशः स्थिरो युवा ॥

धृत्युत्साहस्मृतिप्रज्ञाकलामानसमान्वितः ।

शूरो दृढश्च तेजस्वी शास्त्रचक्षुश्च धार्मिकः ॥

---

५६. परिव्राजिकायाः for प्रव्राजिकायाः A. N.; च for तु N.; A. om. भरत; प्रथमभूमिकां A. D.

५७. एको for एव Bh.; च for तु O.; इति at the end, Bh. K1. K2. O]

५८. Bh. om. the speech; ततः for किम् N.

नटः । ततः प्रकरणनायकस्य मालतीवल्लभस्य माधवस्य वर्णिकापरिग्रहः कथम् ।　६०

विनयः शीलसंपत्तिर्मधुरः प्रियदर्शनः ।
त्यागः सर्वस्वदानं स्याद्दक्षः क्षिप्रकरो मतः ॥
प्रियंवदोनुत्कटवाक्सस्नेहो लोकरञ्जकः ।
मितप्रस्तुतवाग्वाग्मी नित्यकर्मरतः शुचिः ॥
ख्यातवंशो रूढवंशः षोडशात्त्रिंशको युवा ।
वाङ्मनःकर्मभिर्यश्च न चलः स स्थिरो मतः ॥
धृतिः सर्वेषु या प्रीतिरुत्साहोग्लानिरेव च ।
स्मृतिः कालान्तरज्ञानं प्रज्ञा तीक्ष्णमातिर्मता ॥
कलाश्चात्र चतुःषष्टिर्मनश्चित्तसमुन्नतिः ।
शूरः संग्रामनिपुणो रूपवान्दृश्य उच्यते ॥
अतिप्रतापस्तेजस्वी शास्त्रचक्षुस्त्रयीपरः ।
आत्मवत्सर्वभूतानि यः पश्यति स धार्मिकः ॥ इति ।

ननु मालतीवल्लभत्वं माधवस्य न योग्यं माधवेन वसन्तेन समं वर्षाकालीनाया मालत्या जातेः संबंधाभावात् । मैवम् । अपूर्वमेव हि पदार्थसार्थं योगिनीप्रभावात्संपन्नमासाद्य सहृदयहृदयचमत्कारकारिणीं वैदग्धीमेव कविरयमुत्प्रेक्षितवानित्यदोषः । माधव इति नाम्ना शृङ्गारमयतोक्ता । वसन्तस्य शृङ्गारमयत्वात् । शृङ्गारमयत्वेन च विष्णुदेवतत्वमपि कटाक्षितम् । यदाह भरतः ।

शृङ्गारो विष्णुदेवतः । इति ।

अत एवास्य श्यामत्वमपि वक्ष्यति कुवलयदलश्यामोयमित्यादिना ।

श्यामो भवेत्तु शृङ्गारः । इत्यपि भरतः ।

५९. K1, K2. B. C. O. om. माल—भस्य.
६०. ग्रहः for परिग्रहः O.

सूत्र० । कलहंसमकरन्दप्रवेशावसरे तत्सुविहितम् ।

अयममात्यत्वाद्धीरोदात्तो नायकः । यदाह भरतः ।

सेनापतिरमात्यश्च धीरोदात्तौ प्रकीर्तितौ ॥ इति ।

मालती नायिका । तल्लक्षणं भरते ।

स्वान्यसाधारणस्त्रीति तद्गुणा नायिका त्रिधा ।
स्वकीया तत्र वक्तव्या मुग्धा मध्या प्रगल्भिका ॥
शीलार्जवादिसंयुक्ताकुटिला च पतिव्रता ।
लज्जावती चापरुषा निपुणा च प्रियंवदा ॥
साधारणस्त्री गणिका कलाप्रागल्भ्यधौर्त्ययुक् ।
रूपकेषु च रक्तैव कर्तव्या प्रहसं विना ॥
अन्यस्त्री द्विविधा प्रोक्ता कन्यकोढा तथापरा ।
रसे प्रधाने कर्तव्या नान्योढा नाट्यवेदिभिः ॥
कन्यानुरागमिच्छातः कुर्यादङ्गाङ्गिसंश्रयम् ॥ इति ।

अन्यदपि प्रसङ्गादुच्यते । तथा हि ।

नाटके वृत्तयः प्रोक्ताश्चतस्रो नाट्यवेदिभिः ।
भारती कैशिकी चैव सात्त्वत्यारभटी तथा ॥

तत्र शृङ्गारी कामकलावच्छिन्नो व्यापारः कैशिकी ।

विशोका सात्त्वती सत्त्वशौर्यत्यागार्जवादिभिः ।
मायेन्द्रजालसङ्ग्रामक्रोधोद्भ्रान्तादिचेष्टितैः ।
भवेदारभटी नाम नाट्ये तिस्रस्तु वृत्तयः ॥
भारती शब्दवृत्तिः स्याद्रसे रौद्रे च युज्यते ।
शृङ्गारे कैशिकी वीरे सात्त्वत्यारभटी पुनः ॥

---

६१. मकरन्दकलहंस A. कलहंसक for कलहंस K1.; प्रवेशानन्तरं O.; विहितम् after सुविहितम् K2.

नटः। तेन हि तत्प्रयोगादेवात्रभवतः सामाजिकानुपास्महे।

---

एवमङ्गानि कार्याणि प्रधानस्याविरोधतः।
आदौ विष्कम्भकं कुर्यादङ्कंवाक्यार्थयुक्तितः॥
अपेक्षितं परित्यज्य नीरसं वस्तुविस्तरम्।
यदा संदर्शयेच्छेषं कुर्याद्विष्कम्भकं तदा॥
यदा तु सरसं वस्तु मूलादेव प्रवर्तते।
आदावेव तदाङ्कः स्यादामुखाक्षेपसंश्रयः॥
प्रत्यक्षनेतृचरितो विश्वव्यापिपुरःसरः।
अङ्को नानाप्रकारार्थसंविधानरसाश्रयः॥
अनुभावविभावाभ्यां स्थायिनो व्यभिचारिभिः।
गृहीतमुक्तैः कर्तव्यमङ्गिनः परिपोषणम्॥
न चातिरसतो वस्तु दूरविच्छिन्नतां नयेत्।
रसं वा न तिरोदध्याद्वस्त्वलंकारलक्षणैः॥
एको रसोऽङ्गी कर्तव्यो वीरः शृङ्गार एव वा।
अङ्गमन्ये रसाः सर्वे कुर्यान्निर्वहणेऽद्भुतम्॥
शृङ्गारहास्यकरुणरौद्रवीरभयानकाः।
बीभत्सोऽद्भुत इत्येवमष्टौ नाट्ये रसाः स्मृताः॥

यद्यपि

अविकारस्थितिः शान्तः शान्तस्तु नवमो रसः।

इत्यस्ति तथापि स न सर्वसंमतो न वा नाट्यविषयश्चेति न पृथगुक्तः। स्थायिभावाभावात्तस्य नाट्यविषयता न संभवतीति दिक्। नायिका च मालत्युदात्तनिभृता। कुलस्त्रीत्वात्। यदाह भरतः।

---

६२. K2. om. नटः; तदेहि for तेन हि K2.; तर्हि तत्प्रसिद्धप्रयोगादेव A. तर्हि तद्बद्धप्रयोगादेव D.; प्रतिबन्ध (द्ध) Bh. प्रतिबद्धप्रबन्ध O. प्रबन्ध N. after तत्; °गादेव तत्रभवतः K1.

सूत्र० । बाढम् । एषोस्मि कामन्दकी संवृत्तः ।

नटः । अहमप्यवलोकिता । इति परिक्रम्य निष्क्रान्तौ ।

६९ प्रस्तावना ।

ततः परिवृत्य रक्तपट्टिकानेपथ्ये कामन्दक्यवलोकिते प्रविशतः ।

काम० । वत्से अवलोकिते ।

---

उदात्तनिभृता चैव भवेत्तु कुलजाङ्गना ॥ इति ।

वर्णिका मषी ।

६३–६६. बाढं दृढम् । कामन्दकी संवृत्तः कामन्दकीरूपः ।
एतेन सूत्रेणैव काव्यार्थसूचनं कार्यमिति मतमनुमत्य कामन्दकीसूचनमपि सूत्रसूचनमेव वृत्तमिति दर्शितम् । यद्वा । अग्रे मकरन्देन मालतीरूपं कर्तव्यमिति पुंसः स्त्रीत्वापत्त्यात्र सूचितम् । कामन्दको नीतिग्रन्थभेदस्तं वेत्तीति कामन्दकी ॥ तदधीत इत्यण्ङीप् च ॥ अनया नामव्युत्पत्त्या नीतिवेदिताबोधनेन प्रकृतसिद्धिहेतुतोक्ता । तदन्तेवासिन्यवलोकिता दृष्टिरिति कार्यसिद्धिदृष्टेरपि कार्यसिद्धिहेतुतोक्ता तदुत्तेजनिकेति । निष्क्रान्तौ सूत्रधारनटाविति शेषः । प्रस्तावनेति निवृत्तेति शेषः । एतल्लक्षणं भरते ।

नटी विदूषको वापि पारिपार्श्विक एव वा ।
सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥
आमुखं नाम तस्यैव सैव प्रस्तावना मता ॥ इति ।

परिवृत्य पुनरागत्य । रक्तपट्टिका लोहितपट्टिका नेपथ्यमलंकारो ययोस्ते ।

---

६३. Bh. N. om. बाढम्; एष एवास्मि Bh.

६४. K2. om. अपि; Bh. om. परिक्रम्य; निष्क्रान्ताः A.; for इति—प्रविशतः N. has रक्तपटिकानेपथ्ये उपविष्टे प्रविशतः । प्रस्तावना । ततः प्रविशति कामन्दकी ।

६६. प्रविश्य रक्तपटेन कृतनेपथ्या कामन्दक्यवलोकिता च B. ततः प्रविशति रक्तपटनेपथ्या &c. as in B., C. K1. K2.; रक्तपटिककृतनेपथ्ये उभे प्रविशतः Bh.; परिवृत्य रक्तपटिककृतनेपथ्यावुभावुपविष्टौ O. for ततः—प्रविशतः.

अव०। आणवेदु भअवदी। (क)

काम०। अपि नाम तयोः कल्याणिनोर्भूरिवसुदेवरातापत्ययोर्मालतीमाधवयोरभिमतः पाणिग्रहः स्यात्। वामाक्षिस्पन्दनं सूचयित्वा सहर्षम्। ७०

विवृण्वतेव कल्याणमान्तरङ्गेन चक्षुषा।
स्फुरता वामकेनापि दाक्षिण्यमवलम्ब्यते॥

---

(क) आज्ञापयतु भगवती।

---

६९-७१. अधुना कामन्दकी समस्तप्रकरणोपयुक्तमुपक्षेपमाह। अपीत्यादि। यदाह।

काव्यार्थस्य समुत्पत्तिरुपक्षेपः स्मृतो बुधैः।

इह तु मालतीमाधवयोर्विवाहनिर्वाहः काव्यार्थः। अपि नामेति। नाम संभावनायां तेन भवेदपीत्यर्थः। निश्चये वा नाम। तेन निश्चितमेव भवेदित्यर्थः। कल्याणिनोरित्यनेनाशंसनीयकुशलतयानुग्राह्यत्वमुक्तम्। भूरिवसुर्मालतीपिता। महाधनिककन्याया आवश्यकी वराकाङ्क्षेति नामतात्पर्यम्। देवरातो माधवपिता देववद्राति दत्ते॥ रा दाने कर्तरि क्तः॥ देवरातः। तथा च जनो दातरि विवाह्यत इति महाधनिकवद्वदान्यत्वप्रभुत्वादियोगिनोनुरूप एव प्रायः पुत्र इति वरे कन्याकाङ्क्ष सूचनं नामानुनयेन। एवं च योग्ययोर्योग्य एव संबन्ध इति भावः। पाणिग्रहो विवाहः।

७२-७३. विवृण्वतेति। अपिरवधारणे। तेन वामकेनैव वामेनैव चक्षुषा दाक्षिण्यमवलम्ब्यते। कीदृशेन। स्फुरता स्पन्दवता।

---

६८. भयवदी O.

६९. N. O. om. तयोः and have कल्याणिनोरनयोर्भू°, Bh. has both.

७०-७१. स्पन्दं for स्पन्दनं K1. K2. Bh.; अभिनीय for सूचयित्वा D.; N. om. वामा—यित्वा; Bh. om. सहर्षम्.

अव० । महन्तो क्खु भअवदीए एसो चित्तविक्खेवो । अच्च-
७५ रीअं अच्चरीअं जं दाणिं चीरचीवरपरिच्छदं पिण्डवादमेत्तपा-
णअत्तं भअवदिं ईदिसे आआसे अमच्चभूरिवसू णिओएदि ।
तहिं अ उक्खण्डिदसंसारावग्गहो अप्पा तुम्हेहिं पि णिउ-
ज्जीअदि । (क)

---

(क) महान्खलु भगवत्या एष चित्तविक्षेपः । आश्चर्यमाश्चर्यं यदिदानीं चीरचीवरपरिच्छदां पिण्डपातमात्रप्राणयात्रां भगवतीमीदृश आयासेमात्यभूरिवसुर्नियोजयति । तत्र चोत्खण्डितसंसारावग्रह आत्मा युष्माभिरपि नियुज्यते ।

---

अत एव कल्याणं विवृण्वता सूचयता । स्त्रीणां वामाङ्गस्फुरणस्य शुभसूचकत्वात् । आन्तरज्ञेनेव मदीयचित्तवृत्तिज्ञेनेव । इवोत्प्रेक्षायाम् ।

उत्प्रेक्षा व्यज्यते शब्दैरिव शब्दोपि तादृशः ॥

इति दण्डी । अथवापिर्विरोधे वामेनापि प्रतिकूलेनापि दाक्षिण्यमानुकूल्यमवलम्ब्यत इति विरुद्धमिदम् ॥ वामक इति स्वार्थे कन् ॥

७४–७८. अत्र खलु निश्चये । चित्तविक्षेपोसद्विषयाभिनिवेशः । चीरेण वस्त्रखण्डेन चीवरं सौगतपरिव्राजकवासस्तदेव

---

७४. महं खु N.; खु K1.; भयव० O.; B. om. भअ—एसो; एस K2.; °खेपो N.; अच्चरिअं K1. K2. अछरिअं Bh. O.

७५. अचरिअं K2.; अछरिअं Bh.; O. K1. om. अच्चरीअं; अ before जं K1.; B. om. दाणिं; चीउर K2.; मेत्त after चीवर Bh. N.; पाअ N. K2. पाय O. for वाद-

७६. पाणअन्तीं A. प्पाणवुत्तिं Bh.; प्पाणउत्तिं D. प्पाणउत्तिं N. प्पाणवुत्तिं O. भय० O. °वदीं all but Bh. K2. N.; ईरिसे Bh. C.; इदिसे O. आयासे Bh. आसे K1.; ईरिसेसु आयासेसु N.; णिउञ्जेदि B. णिओजेदि N. णिओजेदि K1.

७७. क्खु B. रख O. च Bh. for अ; A. C. D. om. अ; उक्खडिद Bh. उक्खडिद K2. अक्खण्डिद K1. उक्खिद O. for उक्खण्डिद; °वग्गेहहिं Bh. C. K1. K2. N. O.; वि after °ग्गहेहिं for पि Bh.; A. om. पि, णिरिक्खीअदि N. O. णिक्खिवीअदि K1. K2. णउञ्जीयदे B.

काम० । वत्से मा मैवं ब्रूहि ।

यन्मां विधेयविषये सभवान्नियुङ्क्ते
स्नेहस्य तत्फलमसौ प्रणयस्य सारः ।
प्राणैस्तपोभिरथ वाभिमतं मदीयैः
कृत्यं घटेत सुहृदो यदि तत्कृतं स्यात् ॥

अयि किं न वेत्सि यदेकत्र नो विद्यापरिग्रहाय नानादि-

---

परिच्छदः परिकरो यस्यास्ताम् । पिण्डपातो नाम बौद्धानां भिक्षाभ्रमणेन भोजनं तन्मात्रेण प्राणयात्रा जीवनं यस्यास्ताम् । ईदृशे विवाहकार्ये । इह पुरन्ध्रीणामेवाधिकारो न तु भवादृशीनामिति भावः । उत्खण्डित उन्मूलितः संसाररूपोवग्रहो मोक्षप्रतिबन्धो यत्र सः । यद्वा । उन्मूलितः संसाररूपोपकृष्टो ग्रहो यत्र सः ।

७९–८३. मामेति वीप्सात्यन्तनिषेधे । यन्मामित्यादि । सभवान्पूज्यो भूरिवसुर्यन्मां विधेयविषये नियोज्यगोचरे नियुङ्क्ते नियोजयति तत्स्नेहस्य प्रीतेः फलं स ह्यस्माकं प्रेमपात्रमिति भावः । असौ नियोगः प्रणयस्य प्रश्रयस्य सार उत्कर्षो निर्यासो वा । यदि मदीयैः प्राणैरथ वा मदीयैस्तपोभिः सुहृदो मित्रस्याभिमतं वाञ्छितं कृत्यं कार्यं घटेत तदा तत्कार्यं कृतं स्यान्मत्प्राणादिभिरपि भवेदित्यर्थः । यद्वा । सुहृदोभिमतमिदं यदि घटेत निष्पद्येत तदा मदीयैः प्राणैस्तपोभिर्वा तत्कृत्यं कृतं स्यात् । अघटने तु सर्वमिदं व्यर्थमित्यर्थः । एतेनावश्यकर्तव्यतोक्ता ॥ [प्रणयः प्रेम्णि विश्वासे याञ्चाप्रश्रययोरपीति विश्वः ॥ ]

८४–८९. भूरिवसोः स्वीकारबीजमेवंविधप्रश्रयोपपत्तिमाह । किं

---

७९. N. om. ब्रूहि.

८०. भगवान् for सभगवान् O.

८४. अपि for अयि, K1. K2. O.; Bh. N. om. अयि; यदेकत्र नो K1. K2. यदेकत्र नौ Bh. यदेव नो N. O.

८९ गन्तवासिनां साहचर्यमासीत् । तदैव चास्मत्सौदामिनीसमक्ष-
मनयोर्भूरिवसुदेवरातयोर्वृत्तेयं प्रतिज्ञावश्यमावाभ्यामपत्यसं-
बन्धः कर्तव्य इति । तदिदानीं विदर्भराजमन्त्रिणा सता देव-
रातेन माधवं पुत्रमान्वीक्षिकीश्रवणाय कुण्डिनपुरादिमां पद्मा-
वतीं प्रहिण्वता सु विहितम् ।

९० अपत्यसंबन्धविधिप्रतिज्ञा प्रियस्य नीता सुहृदः स्मृतिं च ।
अलोकसामान्यगुणस्तनूजः प्ररोचनार्थं प्रकटीकृतश्च ॥

---

नेत्यादि । न इति बहुवचनेन स्वभूरिवसुदेवरातानामुपादानम् । अस्म-
दिति । अस्माकं सौदामिन्याश्च प्रत्यक्षमित्यर्थः । अपत्यसंबन्धो विवाहः।
सौदामिनीसमक्षमित्यनेन तस्या देवरातबन्धुतया नवमाङ्के माधवप्रा-
णत्राणकारणत्वमस्या नाम च सूचितम् । युक्तं चेदम् ।

नासूचितं विशेत्पात्रम् ।

इति भरतः । एवमन्यत्रापि सूचितस्यैव प्रवेशः । आन्वीक्षिकी न्याय-
शास्त्रम् । तत्र तर्कच्छलादिनिष्टङ्कनेन तदभ्यासान्माधवस्य चोरिका-
विवाहे कौशलमुक्तम् । श्रवणं पाठः । कुण्डिनपुरं विदर्भनृपराज-
धानी । प्रहिण्वता प्रस्थापयता । सु विहितं शोभनं कृतम् ।

९०-९१. अपत्येत्यादि । देवरातेन पुत्रं प्रहिण्वतापत्यसंबन्ध-
विधिप्रतिज्ञा विवाहप्रतिज्ञा प्रियस्य सुहृदः प्रीतमित्रस्य भूरिवसोः ।
सुहृदः शोभनचित्तस्य वा । स्मृतिं स्मरणं नीता प्रापिता । अलोक-

---

८९. N. om. वासिनां, वासिनोः K1. वासिन्योः K2. वास्तव्य Bh. दिगन्तागतानां O.; तदैवास्म° N. O. Bh. K1. K2.; °स्मदन्तेवासिनीसौदा° K2.

८६. प्रवृत्तेयं Bh.

८७. °राजस्य मंत्रिणा N.

८९. पुरीं after पद्मावतीं O.; तत्सु° O.; सुविहितं विहितं B. C. D. Bh. K1. K2.

९०. कृतः before अपत्य N.; चिरस्य नीता O.

९१. अनन्यसामान्य K2.

अव० । तदो किंत्ति मालदिं अमच्चो माहवस्स अप्पणा ण पडिवादेदि जेण चोरिआविवाहे भअवदिं तुवरावेदि । ( क )

काम० । तां याचते नरपतेर्नर्मसुहृन्नन्दनो नृपमुखेन ।
तस्साक्षात्प्रतिषेधः कोपाय शिवस्त्वयमुपायः ॥ १९

अव० । अच्चरिअं अच्चरिअं ण हु अमच्चो माहवस्स णामं पि जाणादि त्ति णिरवेक्खदाए लक्खीअदि । ( ख )

---

(क) ततः किमिति मालतीममात्यो माधवस्यात्मना न प्रतिपादयति येन चोरिकाविवाहे भगवतीं त्वरयति ।

(ख) आश्चर्यमाश्चर्यं न खल्वमात्यो माधवस्य नामापि जानातीति निरपेक्षतया लक्ष्यते ।

---

सामान्यगुणो लोकाविलक्षणगुणः पुत्रः प्ररोचनार्थं प्रवृत्तिपाटवार्थं स्फुटीकृतश्च । प्ररोचनस्यैव सर्वकार्यसिद्ध्यङ्गत्वात्तत्करणम् ।

९२–९५. अत्रामात्यो भूरिवसुः । माधवस्य कृत इति शेषः । प्रतिपादयति ददाति । चोरिकेति । चोरिकया विवाहस्य धर्मशास्त्रे निषेधादिति भावः । तामित्यादि । नन्दननामा राज्ञोन्तःपुरसचिवो नृपद्वारा तां याचते । तत्र साक्षान्निषेधः कोपाय राज्ञः । अयं तु मद्द्वारा संयोजनात्मक उपायः शिवः परिणाममधुरस इत्यर्थः । आर्याच्छन्दः ।

स्यान्नर्मसचिवः सोयं कुपितस्त्रीप्रसाधकः ।

नन्दयतीति नन्दनः । एतेनानन्दजनकत्वादन्तःपुरसचिवता युक्तेति नामतात्पर्यम् ।

---

९२. किंत्ति Bh.; C. N. om. त्ति, त्ति O.; मालदीं A. D. मालई O., K2. om. अमच्चो .

९३. विआहे A. विवाहेण O.; भयवदिं O. भअवदीं A. D.; आरोवदि Bh. आरोएदी C. त्वरावेदि K1. K2. तुरावेदि O.

९५. प्रतिबन्धः B. D.

९६ अच्चरियं A. अच्छरियं २ Bh. अछरियं णहु O. क्खु A. खु N. for हु; णामं पि माहवस्स O.

९७. निरवेरक्खदाए O. णिरपेक्खदाए K1. K2. N.; लक्खीयादि O.

कामं० । संवरणं हि तत् ।

विशेषतस्तु बालत्वात्तयोर्विवृतभावयोः ।

१०० तेन माधवमालत्योः कार्यः स्वमतिनिह्नवः ॥

अपिच । अनुरागप्रवादस्तु वत्सयोः सार्वलौकिकः ।

श्रेयोप्यस्माकमेवं हि प्रतार्यौ राजनन्दनौ ॥

पश्य । बहिः सर्वाकारप्रगुणरमणीयं व्यवहर-

न्पराभ्यूहस्थानान्यपि तनुतराणि स्थगयति ।

---

९८–१००. संवरणं संगोपनम् । विशेषत इत्यादि । तेन भूरिवसुना तयोर्वत्सयोर्विशेषेण स्वमतिनिह्नवः कार्यो निजज्ञानगोपनं कर्तव्यम् । बालत्वाच्छिशुत्वेन प्रकाशिताभिप्राययोः । यथा तावपि प्रकृतं न जानीतस्तथा कृतं तेनेति भावः । युक्तं चादः ।

नादेशे नाकाले नापरिपक्वेन्द्रिये न गुणहीने ।

कथयति हि कथां स्वगतां न तथास्य कथा भवति वन्ध्या

इति नीतेः ।

१०१–१०२. अनुरागेत्यादि । तयोरनुरागप्रवादः सर्वलोकविदितः सन्नस्माकं [श्रेयानस्तीति वा पाठः ।] श्रेयो श्रेयोलम्भी । यत एवं सति राजा नन्दनश्चोभौ वञ्चनीयौ । तयोरन्योन्यानुरागादेव परिणयो वृत्तो न मया कारित इति वक्तव्यमेवेति भावः ॥ [सार्वलौकिक इत्यत्र सर्वलोकाट्ठञ् ॥] अन्योन्यानुरागेण गान्धर्वविवाहोपि सूचितः ।

१०३–१०६. बहिरित्यादि । विद्वान्सुबुद्धिरेकः श्रेष्ठोऽद्वितीयो वा सकलं जनं कपटैरभिसंधाय वञ्चयित्वा स्वानर्थान्स्वप्रयोजनानि संपादयति । मौनमभाषणं भजते च । विधिनिषेधपरं वचो न वदतीत्यर्थः ।

---

९८. N. om. हि.

१०१. K1. K2. O. om. अपिच; °प्रवादश्च K2.

१०२. श्रेयानस्मा° D. N. श्रेयो ह्यस्मा° K1. K2. O. श्रेयोस्त्व Bh.

१०४. लघुतराणि A.

जनं विद्वानेकः सकलमभिसंधाय कपटै- १०६
स्तटस्थः स्वानर्थान्घटयति च मौनं च भजते ॥

अव० । मए वि तुह्मवअणादो तेण तेण वअणोवण्णासेण भूरिवसुमन्दिरासण्णराअमग्गेण माहवो संचारीअदि । (क)

काम० । कथितमेव नो मालतीधात्रेय्या लवङ्गिकया ।

---

(क) मयापि युष्मद्वचनात्तेन तेन वचनोपन्यासेन भूरिवसुमन्दिरासन्नराजमार्गेण माधवः संचार्यते ।

---

अत एव तटस्थ उदासीन इवानभिव्यक्तव्यापार इत्यर्थः । कथम् । सर्वाकारेणेङ्गितादिना स्वभावसुन्दरं यथा भवति तथा बहिः प्रकटं व्यवहरन्नतिसूक्ष्माण्यपि पराभ्यूहस्थानानि परस्य तर्कस्थानानि स्थगयति पिदधाति । अपिर्भिन्नक्रमः ॥ अभिसंधिर्वञ्चनार्थ इति धातुसंग्रहः । केवलश्रेष्ठयोरेक इति धरणिः ॥

१०७–१०८. अत्रोपन्यासो व्याजेन कार्योद्भेदः । राजमार्गेणेत्यनेन सर्वसाधारण्यान्माधवस्यानौद्धत्यमद्वितीयवेद्यता च सूचिता । संचारणं च तद्दर्शनेन मालत्या अनुरागायेति भावः । अत्र कामन्दक्यावलोकितायामेवमनुक्तत्वात्कथं तव वचनादिति घटत इति न देश्यम् । प्राणैस्तपोभिरित्यादिना तदभिधानात् ।

१०९–११३. धात्रेय्युपमातृसुता । एतेन बाल्यात्प्रभृति सकलचेष्टावेदित्वं ध्वनितम् । तथा च लवङ्गिका मालतीगतं यत्कथयति तत्प्रमाणमेवेत्येवकारव्यङ्ग्यम् । अनेनास्याः सखीत्वमप्युक्तम् । यदाह भरतः ।

कारुर्दासी च धात्रेयी प्रतिवेश्याथ शिल्पिका ।
बाला प्रव्रजिता चेति नायिकानां सखीजनः ॥ इति ।

---

१०६. °मतिसंधाय N.

१०७. भअवदि मए वि Bh. मए वि K2.; वयणादो O.; K2. om. one तेण; B. om. वअण वयणोव° O. वअणोव K2.

१०८. रायमग्गेण O.; संचारीयदि Bh.

१०९. कथितमिव K1. K2.

११० भूयो भूयः सविधनगरीरथ्यया पर्यटन्तं
दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था ।

न इति बहुवचनेनात्मनि लवङ्गिकाहृदयजागरूकबहुमानेन वञ्चकतानिरासः सूचितः । भूय इत्यादि । मालत्यङ्गकैस्ताम्यति खिद्यत इति कथितमेव लवङ्गिकयेत्यन्वयः ॥ अङ्गकैरित्यत्राल्पार्थे कन् ॥ अल्पता मृदुत्वेन । बहुवचनात्सर्वाङ्गमुक्तम् । तथा च मृदुभिः सर्वाङ्गैरित्यर्थः । कीदृशैः । तं माधवं दृष्ट्वा दृष्ट्वा पुनः पुनरवलोक्य गाढोत्कण्ठया दृढकाङ्क्षया लुलितलुलितैरतिम्लानकान्तिभिः । ललितलुलितैरिति पाठे पूर्वं ललितै रम्यैरधुना लुलितैर्म्लानैरित्यर्थः । कीदृशम् । सविधनगरीरथ्यया मालतीगृहनिकटराजमार्गेण भूयो भूयः पुनः पुनः पर्यटन्तं गच्छन्तम् । इह राजमार्गोपन्यासेन माधवस्य निःशङ्कः संचारो मालत्याश्च तद्दर्शने परवितर्काभावः सूचितः । गमने पौनःपुन्येन दर्शनं प्रति दार्ढ्यमुक्तम् । दर्शने च पौनःपुन्येन तस्या उत्कण्ठातिशय उक्तः । यद्वा । प्रथमवीप्सया दर्शनं दृष्ट्वानुवृत्त्या प्रथमं रम्यवस्तुचमत्कारेण तत उद्भिद्यमानानुरागनवाङ्कुरेण नेत्रप्रीतिर्युज्यते । द्वितीयवीप्सया सहचरीभिरप्यज्ञाता नयनप्रीतिरुक्ता । नगरीपदेन रथ्याया अनेककौतुकाधारतोक्ता । तथा चेतस्ततोनेककौतुकदर्शनतरलितत्वेन माधवस्य सम्यग्दर्शनसंपादकनिकटार्थकसविधपदनिगर्व उक्तः । क्त्वाप्रत्ययेन चानन्तरभाविविह्वलताया विषयान्तरसंचारेणापि व्यवधानस्यापादानादत्यन्तानुरागोद्भेदः सूचितः । कथमन्तःपुरस्था सा ददर्शेत्यत आह । भवनेति । भवनस्य प्रासादादेर्या वलभ्युपरिकुटी तस्यां तुङ्गमुच्चं यद्वातायनं गवाक्षस्तत्रस्था । तुङ्गतया यथाकाङ्क्षं दर्शनमुक्तम् । वातायनेत्यनेन वातस्यायनं गमनं यत्रेति व्युत्पत्त्या घर्मादितापवती गर्भारसमीरपरिशीलनार्थं यातीति प्ररोहेण निरर्गलमस्या गमनं तत्रेति सूचितम् । यद्यपि सौधोपरिकुटीं वलभीं विदुरिति भवनपदमत्रगतार्थं तथाप्युक्तिपोषालं-

साक्षात्कामं नवमिव रतिर्मालती माधवं य-
द्गाढोत्कण्ठा ललितलुलितैरङ्गकैस्ताम्यतीति ॥

अव० । बाढं । ताए वि अत्तणो विणोदणिमित्तं माहवप-
डिच्छन्दअं आलिहिदं तं लवङ्गिआए अज्ज मन्दरिआए ११५
हत्थे णिहिदं दाव । (क)

(क) बाढम् । तयाप्यात्मनो विनोदनिमित्तं माधवप्रतिच्छन्दक-
मालिखितं तल्लवङ्गिकयाद्य मन्दारिकाया हस्ते निहितं तावत् ।

कारयोतनार्थं भवनपदम् । यद्वा । भवनरूपा वलभी मालतीवसतिःसौ-
धोपरिकुटीत्यर्थः । एतेनास्या निजगृहाद्वलभीगमनं किमर्थमित्यन्या-
शङ्कापरिहारो निरर्गलं च तद्दर्शनं भवतीति ध्वनितम् । यथा रतिः
कामकान्ता नवं दाहानन्तरमुत्पन्नं साक्षात्प्रत्यक्षं कामं दृष्ट्वाङ्गैस्ताम्य-
ति तथेत्यर्थः । मालती रतिर्माधवश्च काम इति तयोर्बहललोकसं-
कुलेपि पथि रागसागरोन्योन्यं ववृध इति भावः । यद्वा । कामोनङ्ग-
तयाप्रत्यक्षो वृद्धश्च । अत्रोत्प्रेक्षा विशिष्टस्यैव । साक्षात्प्रत्यक्षं नवं
काममिवेत्यर्थः । ताम्यतीत्यनेनोद्वेग उक्तः । यदाह भरतः ।

चिन्तानिःश्वासखेदेन हृद्दाहाभिनयेन च ।
अथाङ्गोपाङ्गचेष्टाभिरुद्वेगाभिनयो भवेत् ॥ इति ।

११४–११६. बाढमतितरामनुरक्ता मालतीत्यर्थः । विनोदः क्रीडा

११२. सा for यत् N.
११३. लुलितलुलितै° A. Bh. O. N. K2. (?)
११४. जदो D. जं A. तदो N. before बाढं; तए Bh. A. D.; बाढं अह य ताए O.; O. om. वि; बि for वि K2.; A. N. O. om. अत्तणो; A. B. N. add उक्कण्ठा O. उव्वेय before विणोद; विणोय O.; विणोदकालणं N.; माहवस्स K1.; पडिच्छंदयं N. पडिछंदयं O.
११५. आलिहिदं .. D. N. लिहिदं O.; N. om. तं; जं for तं O.; हत्थे णिहिदं तए वि before अज्ज Bh.; N. om. अज्ज. मन्दारिआ for मन्दारिआए K2. O. N.
११६. अत्थे for हत्थे K1. K2.; णिलिखित्तं N.

काम० । विचिन्त्य । सु विहितं लवङ्गिकया यतो माधवानुचरः कलहंसकस्तां विहारदासीं मन्दारिकां कामयते । तदनेन तीर्थेन घटेत तत्प्रतिच्छन्दकमुपोद्धाताय माधवान्तिकमुपेया-
१२० दित्यभिप्रायः ।

अव० । माहवो वि कोदूहलमुप्पादिअ मए पउत्तमअणमहूसवं मअरन्दुज्जाणं पभादे अणुप्पेसिदो तत्थ किल मालदी गमिस्सदि तदो अण्णोण्णदंसणं भोदु त्ति । ( ख )

---

( ख ) माधवोपि कौतूहलमुत्पाद्य मया प्रवृत्तमदनमहोत्सवं मकरन्दोद्यानं प्रभातेनुप्रेषितस्तत्र किल मालती गमिष्यति ततोन्योन्यदर्शनं भवत्विति ।

---

हर्षो वा । प्रतिछन्दकं प्रतिरूपकम् । तावत्पदेन मन्दारिकाहस्तनिधानस्य प्रकृतकार्योपक्रमः सूचितः । अत एव कामन्दक्या सु विहितमित्युक्तम् ।

११७–१२०. विहारः सौगतप्रव्राजिकानामालयः । तत्र व्यापृता दासी विहारदासी । एतेन प्रकरणबाह्यत्वमुक्तम् । यदाह दण्डी ।

शकारः कुट्टिनी दासी धर्मशास्त्रबहिष्कृता ।
विटचेष्टादयो नित्यं बाह्याः प्रकरणे मताः ॥

तीर्थेन द्वारा । उपायेन वा ॥ तीर्थमुपायद्वारमन्त्रिष्विति विश्वः ॥ उपोद्धातेन प्रसङ्गेन । अभिप्रायस्तावदिति वादिन्यास्तवेति शेषः ।

---

११७. N. om. विचिन्त्य; सुविहितं हि K2.; N. om. यतो.

११८. °हंसस्तां N.; N. om. मन्दारिकां; इत्यनेन for तदनेन A. D.

११९. A. D. N. om. घटेत; घट्टते Bh.; यत् for तत् B.; A. D. om. उपोद्धाताय; उपोद्धासेन K2. Com.; C. om. माध°—प्राय: O. puts it in and scores it out.

१२१. बि for वि K2.; उप्पायिय O.; मयण O.; मधूसवं Bh. महोसवं N.

१२२. मअरन्दोज्जाणं K2. मअणुज्जाणं A. C. K1. मयणुज्जाणं O.; अज्ज before पभादे D. K1.; प्पभादे O. पहादे N.; प्पेसिदो K1. पेसिदो K2.; तहिं for तत्थ A.; O. om. किल.

१२३. होदु B. O. होदि N.

काम० । साधु वत्से साधु । अनेन मत्प्रियाभियोगेन स्मारयसि मे पूर्वशिष्यां सौदामिनीम् ।　　१२५

अव० । भअवदि सा सोदामिणी अहुणा समासादिदअच्चरिअमन्तसिद्धिप्पहावा सिरीपव्वदे कावालिअव्वदं धारेदि । (क)

काम० । कुतः पुनरियं वार्ता ।

अव० । अत्थि एत्थ णअरीए महामसाणप्पदेसे करालाणाम चामुण्डा । (ख)　　१३०

---

(क) भगवति सा सौदामिन्यधुना समासादिताश्चर्यमन्त्रसिद्धिप्रभावा श्रीपर्वते कापालिकव्रतं धारयति ।

(ख) अस्त्यत्र नगर्यां महाश्मशानप्रदेशे करालानाम चामुण्डा ।

---

१२१-१२८ अत्र ॥ कौतुकं तु कुतूहलमित्यमरः ॥ मदनमहोत्सवेन वसन्तकालः सूचितः । तस्य च वैवाहिकत्वम् । यदाह ।

शरत्सङ्ग्रामविषये विवाहे ज्येष्ठमाधवौ । इति ।

किल प्रसिद्धौ । इति हेतौ । अनुप्रेषणे तत्र किलेत्यादेर्हेतुत्वम् । अन्योन्यदर्शनेनोभयानुरागे विवाहनिर्वाहः । प्रिये प्रीतिविषये कार्येभियोग आसङ्गः । अत्र कपालव्रतं महाव्रतम् । कुत इत्यादिना श्मशानाङ्कसूचनम् ।

---

१२४. वत्से साधु साधु B.

१२५. मत् for मे N.

१२६. D. adds क्खु, Bh. खु, O. दाणीं after सा; N. om. सोदामिणी अहुणा; सौदामिणी all but Bh. O.; णं for अहुणा O.; °सादिअच्चरि° N.; अच्छरीअ K1. K2. अच्छरिअ Bh. अच्चरीअ A. अचरिय O.

१२७. B. om. सिद्धि; प्पभावा Bh. K1, K2.; सिरिअपव्वदे A. सिरिपव्वदे O. K1. K2. Bh.; कावलिय O. काबालिआ K2.; कावालिआवदं N.

१२९. णयरीए O. णअरे A. C. K2.; कलाला O. कराली C.

१३०. नाम K2.

काम० । अस्ति या किल विविधजीवोपहारप्रियेति साहसिकानां प्रवादः ।

अव० । तहिं क्खु सिरीपव्वदादो आअदस्स रत्तिविहारिणो णादिदूरारण्णवासिणो साहअस्स मुण्डधारिणो अघोरघण्टणामधेअस्स अन्तेवासिणी महाप्पभावा कवालकुण्डला णाम अणुसंज्झं समाअच्छादि तदो इअं पउत्ती । (क)

१३५

---

(क) तत्र खलु श्रीपर्वतादागतस्य रात्रिविहारिणो*नातिदूरारण्यवासिनः साधकस्य मुण्डधारिणोघोरघण्टनामधेयस्यान्तेवासिनी महाप्रभावा कपालकुण्डला नामानुसंध्यं समागच्छति तत इयं प्रवृत्तिः ।

---

१३१-१३२ किल प्रसिद्धौ । विविधा नानारूपा जीवा मानुषादय उपहारा बलयः प्रिया यस्याः सा । अनेन मालत्युपहारः सूचितः । आत्मनिरपेक्षं कर्म साहसं तेन वर्तन्ते ते साहसिकाः । प्रवादः प्रसिद्धिः । इह प्रियेत्यस्यानन्तरमिति पदं देयमन्यथा पूर्वापरानन्वयात् । तथा च प्रियेत्यनेनाकारेण साहसिकानां प्रवाद इत्यर्थः । अत एव वाक्यार्थकर्मादावितेरध्याहारः ।

१३३-१४० इह खलु प्रसिद्धौ । तस्याश्चामुण्डाया नातिदूरेणात्यासन्ने वस्तुं शीलं यस्य तस्य । एतेन देवकुलस्य लोकसंकुलतया

---

१३१. सा for या B. Bh., C. om. या; साधकानां O.

१३३. तं B. O. तत्थ Bh. D. for तहिं; ख्खु O. खु K1. K2. for क्खु, Bh. om. क्खु; सिरि A. Bh. C. D. K1. K2. O.; आगदस्स Bh. O.; रत्ति for रत्ति K1.; अदो O. एत्थ N. for रत्तिविहारिणो; °रिणो तस्स K2.

१३४. साधअस्स B. Bh. C. साहकस्स K2. O. साहसिअस्स N. for साहअस्स; मुण्डमालाधारिणो O.

१३५. °धेयस्स O. हेअस्स D. N. for धेअस्स; अन्देवासिणि N.; महप्प° Bh.; °प्पहावा B. Bh. D. N. महाणुभावा O.

१३६. °संझं Bh. D. O.; C. adds णअरे before समाअ°; समागच्छादि O. आअच्छइ N. for समाअच्छदि; इयं Bh. O.; प्पउत्ती O.

*Com. inserts तस्या before नातिदूर°.

का० । सर्वं सौदामिन्यां संभाव्यते ।

अव० । अलं दाव एदिणा । भअवदि सो वि सहअरो माहवस्स बालमित्तं मअरन्दो णन्दणस्स बहिणिं मदअन्तिअं जइ समुव्वहदि तं पि माहवस्स दुदीअं पिअं किदं भोदि ।(क) १४०

काम० । नियुक्तैव तत्र मया तत्प्रियसखी बुद्धरक्षिता ।

---

(क) अलं तावदेतेन । भगवति सोपि सहचरो माधवस्य बालमित्रं मकरन्दो नन्दनस्य भगिनीं मदयन्तिकां यदि समुद्वहति तदपि माधवस्य द्वितीयं प्रियं कृतं भवति ।

---

किंचिद्विप्रकृष्टं साधकसंस्थानमुक्तम् । साधकस्य योगिनः । मुण्डधारिणः कापालिकस्य । अघोरघण्टेति ।

कापालिकास्तु घण्टान्तनामानः समुदाहृताः ॥

इति भरतः । अघोरोविमृश्यकारीति नामव्युत्पत्तिः । अनुसंध्यं संध्यायाम् । प्रवृत्तिर्वार्त्ता । सर्वमघोरघण्टनाशनमाधवरक्षणादिकम् । अत्रैतेन कापालिकादेः कथनेनालं निष्फलमधुनानुपयोगात् । बालमिति भावप्रधानं तेन बाल्यान्मित्रमित्यर्थः । समुद्वहति विवहति ।

१४१–१४७ बुद्धरक्षितेत्यनेन भिक्षुकीत्वं सूचितम् । अत एव

---

१३७. सर्वं हि B. Bh. C. N. O.; तत्सौदा° सर्वं D.; °न्याः Bh. C. D.

१३८. भयवदि O.; एसो A. D. K1. N. O.; एसो बि K2.; सहयरो O.

१३९. बाल Bh.; मित्तो A. D. K1. K2.; महरन्दो K2. मयरन्दो O.; A. adds णाम after मअरन्दो; °नस्स K1.; बहिणिअं K2. वहिणिआं Bh.; K1. णंदणभइणिं N.; मदयन्तियं O. °अन्तिआं A. B. Bh. C. D. K1.

१४०. जयि O.; जदि समूवहेदि N. समुदाहदि K1.; तं वि N.; A. K1. K2. add णाम after वि; दुदियं O. दुदिअं B. C. अहिअं N. for दुदीअं; प्पियं O.; कदं Bh.; C. D. N. O. om. किदं; होदि N.

१४१. हि तत्र D. हि सा N.; K1. K2. read तत्र after °सखी; मद्र B. D. तस्याः N. for तत्र; O. om. तत्.

अव० । सु विहिदं भअवदीए । (क)

काम० । विचिन्त्य । तदुत्तिष्ठ माधवप्रवृत्तिमुपलभ्य मालतीमेव पश्यावः ।

१४५ उभे उत्तिष्ठतः ।

काम० । विचिन्त्य । अत्युदारप्रकृतिर्मालती । तन्निपुणं निसृष्टार्थदूतीकल्पः सूत्रयितव्यः । सर्वथा

शरज्ज्योत्स्ना कान्तं कुमुदमिव तं नन्दयतु सा
सुजातं कल्याणी भवतु कृतकृत्यः स च युवा ।

---

(क) सु विहितं भगवत्या ।

---

दौत्ये नियुक्ता ॥ उत्तिष्ठेत्यत्रोर्ध्वकर्मत्वान्न तङ् । अत्युदात्ता गभीरा प्रतिपन्नार्थासंवादिनी प्रकृतिर्यस्याः सा तथा । निसृष्टार्थेति । नायिकाया नायकस्य वा मनोरथं ज्ञात्वा स्वमत्या कार्यं साधयति सा निसृष्टार्था दूती तस्याः कल्पो व्यापारः प्रस्तावनीय इत्यर्थः । दूती च त्रिविधा । यदाह ।

निसृष्टार्था मितार्था च तथा शासनहारिका ।
सामर्थ्योत्पादिताहीना दूती तु त्रिविधा मता ॥ इति ।

१४८—१५२ शरदित्यादि । सा मालती तं माधवं नन्दयतु प्रीणातु । यथा शरच्चन्द्रिका कुमुदं नन्दयति । यथा चन्द्रिकाकुमु-

---

१४२. भयवदीए O.; A. B. Bh. add किदं, K1. K2. कदं after भअवदीए.

१४३. B. Bh. N. om. विचिन्त्य; Leaf 6 of K2. containing काम° । विचिन्त्य (l. 143) to वयस्य माधव (l. 187) wanting.

१४४. पश्यामः B.

१४५. A. D. K1. insert इति after उभे; इति for उभे N. O.

१४६. अत्युदात्त Com.; N. om. तद्, इति for तद् O.; B. om. निपुणं.

१४७. तन्त्रयितव्यः A. K1. N. कल्पयितव्यः D., सूचयितव्यः Bh.

१४८. वन्दयतु K1.

वरीयानन्योन्यप्रगुणगुणनिर्माणनिपुणो १५०
विधातुर्व्यापारः फलतु च मनोज्ञश्च भवतु ॥

इति निष्क्रान्ते विष्कम्भकः ।

---

दयोर्नित्यं प्रीतिस्तस्था तयोरप्यस्त्विति भावः । कीदृशम् । कान्तं रम्यम् । सुजातं शोभनजन्मानम् । शोभनता च गुणवत्त्वेन । यद्वा । कान्तमन्यस्त्रीभोगचिह्नशून्यम् । यदाह भरतः ।

अन्यस्त्रीभोगसंभूतं चिह्नं यस्य न विद्यते ।
देहे वाप्यधरे वापि स कान्त इति कीर्तितः ॥

सा कीदृशी । कल्याणी निरवद्या । स च युवा कल्याणी विवाहकल्याणयोगी संस्तां प्राप्य कृतकृत्यः कृतार्थो भवतु । युवेत्यनेन कन्यायां मदनमदोद्दीपकतायोगित्वमुक्तम् । एवं सति विधातुः प्रयत्नः सफलो भवतु मनोहरश्च भूपनन्दनाविरोधेन सर्वावर्जकोस्त्वित्यर्थः । कीदृशः । अन्योन्यं कामिनोः प्रगुणा अनुरूपा ये गुणास्तेषां निर्माणे कुशलोत एव वरीयाञ्श्रेष्ठः गरीयान्गुर्वो । यद्वा । अन्योन्यं प्रगुणा उत्कृष्टा ये गुणास्तेषां निर्माणे कुशलः । निष्क्रान्ते कामन्दक्यवलोकिते । विष्कम्भक इति ।

कुतोपि स्वेच्छया प्राप्तः सबन्धेनोभयोरपि ।
विष्कम्भकः स विज्ञेयो यस्तु [ सम्यक् ] काव्यार्थसूचकः ॥
विष्कम्भस्तु द्विधा सोयं शुद्धः संकीर्ण एव च ।
शुद्धो मध्यमपात्रेण संकीर्णो मध्यमाधमैः ॥

इति भरतः ।

---

१५०. गरीयान् N.; °गुणिनिर्माण° K1.; निर्माणनविधौ B.
१५२. O. om.इति.; मिश्रविष्कम्भकः N.

ततः प्रविशति गृहीतचित्रोपकरणः कलहंसः ।

कल० । कहिं दाणिं तुलिदमअरद्धआवलेअरूअविब्भमाव-
१५५ क्खित्तमालदीहिअअमाहप्पं णाहमाहवं पेक्खिस्सं । परिक्रम्य । प-
रिस्सन्तोह्मि जाव इमस्सिं उज्जाणे मुहुत्तं विस्समिअ मअरन्द-
णन्दणं णाहमाहवं पेक्खिस्सं । ( क ) इति प्रविश्योपविशति ।

---

( क ) कुत्रेदानीं तुलितमकरध्वजावलेपरूपविभ्रमावक्षिप्तमाल-
तीहृदयमाहात्म्यं नाथमाधवं प्रेक्षिष्ये । परिश्रान्तोस्मि *यावदस्मिन्नु-
द्याने मुहूर्त्तं विश्रम्य मकरन्दनन्दनं नाथमाधवं प्रेक्षिष्ये ।

---

१५३-१५७ उपकरणमुपढौकनम् । अत्र तुलितो मकरध्व-
जस्य कामस्यावलेपो गर्वो येन रूपविभ्रमेण सौन्दर्यविलासेन तेना-
वक्षिप्तं तिरस्कृतं मालतीहृदयस्य माहात्म्यं गाम्भीर्यं येन तम् ॥ अव-
लेपः स्मृतो गर्व इति शाश्वतः ॥ मकरन्दस्य नन्दनं हर्षकम् । कल-
हंसो राजहंसः स च शरदि विराजमानोपि योगिनीप्रभावाद्वसन्ते
मिलित इति नामाभिप्रायः ।

---

१५३. O. om. ततः, °चित्रफलकहस्तः for गृहीत-णः O.; °चित्रफलकः C.; °हंसकः Bh.

१५४. कई Bh.; तुलिअ D. तुलिय O.; Kl. om. तुलिद in text but gives तुलित in छाया; मयरद्ध° O.; °द्धज B. O.; °द्धजावलेवं रूप° O.; °द्धअरूआव° A. B. D.; रूप Bh. रूव N.; C. om. रूअ; Kl. om. अवलेअ in text but reads °ध्वजावलेपरूप in छाया; °आवलेअं B. C. °लेवविं° A.; विब्भमा° O.

१५५. आक्खित्त B. N. O. °मावखित्त A. D.; हियय O.; C. om. णाह; पेक्खि-स्सं O.

१५६. °सन्तोह्मि Bh. °स्संतह्मि C.; जइव (छाया यावत्) Kl.; ता for जाव O.; इह for इमस्सिं A. D. Kl. N. O.; खणं N. मुहुत्तअं B. मुहुत्तयं O.; वेसमिअ Kl. वीसविय O. वीसामिअ Bh. विसमिअ B. C.; मकरन्द Bh. मयरन्द O.

१५७. सहयरं O. °सहअरं A. N. सहाअं Kl. नन्दनं Bh. for णन्दणं; B. Bh. C. Kl. O. om. णाह, N. om. णाहमाहवं; पेक्खि° N. प्पेक्खिस्सं O.; Bh. O. om. इति; N. om. इति-शति; परिक्रम्य for प्रविश्य B. Bh. D. O.

*तावद् Com.

: प्रविशति मकरन्दः ।

मक० । कथितमवलोकितया मदनोद्यानं गतो माधव इति। भवतु तत्रैव गच्छामि । परिक्रम्यावलोक्य च । दिष्ट्यायं वयस्य १६० इत एवाभिवर्त्तते । निरूप्य । अस्य तु

---

१६०—१६५ दिष्टयेत्यव्ययं हर्षे। माधवस्य वसन्तस्य मकरन्दः पुष्परसः सहचरो युज्यत एव । इत एवात्रैव । इह शृङ्गारो द्विविधः । यदाह भरतः ।

संभोगो विप्रलम्भश्च शृङ्गारो द्विविधो मतः ।

संभोगोपि विप्रलम्भपूर्वक एव स्वदते । यदाह ।

न विना विप्रलम्भेन संभोगः पुष्टिमर्हति ।
कषायिते हि वस्त्रादौ भूयान्रागोभिजायते ॥

स च दशारम्भः । यदाह भरतः ।

अप्राप्तरतिभोगस्य नवस्त्रीरागजन्मनः ।
दश स्थानानि कामस्य काममन्तर्विसर्पतः ॥
अभिलाषोत्र प्रथमे द्वितीये चिन्तनं तथा ।
अनुस्मृतिस्तृतीये च चतुर्थे गुणकीर्तनम् ॥
उद्वेगः पञ्चमे ज्ञेयो विलापः षष्ठ उच्यते ।
उन्मादः सप्तमे प्रोक्तो भवेद्व्याधिस्तथाष्टमे ॥
नवमे जडता प्रोक्ता दशमे मरणं भवेत् ॥ इति ।

---

१५९. कथितमेवाव° Kl. N. कथितं मेव° C. Bh.; B. Bh. C. D. Kl. insert यथा before मदनो°.

१६०. N. om. तत्रैव, B. om. एव; इति परि° N.; दृष्ट्वा for अवलोक्य A. Kl.; A. Kl. om. दिष्ट्या; D. om. अयं.

१६१. इति निरूप्य N.

गमनमलसं शून्या दृष्टिः शरीरमसौष्ठवं
श्वसितमधिकं किं न्वेतत्स्यात्किमन्यदितोथ वा ।

---

तदिहानुस्मृत्यवस्थो माधवो मकरन्देन कथ्यते । गमनमिति । अस्य गमनमलसं मन्दं न तु शरीरं हस्तादेराकुञ्चनप्रसारणात् । अन्तरान्तरा विलम्बस्यात्यन्तासक्तिवशाज्जायमानत्वाच्च । इदमनुस्मृतिचिह्नम् । यदाह

मुहुर्मुहुर्निःश्वसितैरधोमुखविचिन्तनैः ।
प्रद्वेषादन्यकार्याणां कथितानुस्मृतिर्यथा ॥

तथा यतो मामपि न पश्यति ततोन्तःकरणं क्वापि लग्नम् । तथा च चिन्तासंततिपरतया ध्यानावधानेन शून्या बाह्यार्थाग्राहिणी दृष्टिरस्य । यदाह ।

शून्या दृष्टिः स्मृता चिन्तासंमोहप्रणयादिषु ।

शून्यदृष्टिलक्षणमप्याह ।

निश्चला समतारा च ध्यानाद्बाह्यमगृह्णती ।
तथा समपुटोपेता शून्या दृष्टिरुदाहृता ॥

तथा मनस्तापवतो ग्लानिः । सा च क्षीणकपोलतादिनोन्नीयते । अत उक्तं शरीरमसौष्ठवं विकलम् । इष्टजनालाभभावनार्थमाह श्वसितमधिकम् । एतत्किं नु स्यात् । एतदलसगमनत्वादिकं रोगजं कामकृतं वेति वितर्क इत्यर्थः । रोगलिङ्गाभावादनङ्गलिङ्गसङ्गाच्च निश्चयमाह किमन्यदिति । अथ वा पक्षान्तरे । इतः कामात्किमन्यन्नान्यदित्यर्थः । किंशब्दो निषेधे । अत्र पांशुक्रीडनात्प्रभृत्यनुभूतमाधवशरीरे तत्तद्विकारदर्शनात्तर्कविद्याविदो मकरन्दस्य परिच्छेदो युज्यत एवेति ।

---

१६३. किं त्वे A. B. Bh. C. D. Kl.; °न्यदतोथ O.

भ्रमति भुवने कन्दर्पाज्ञा विकारि च यौवनं
ललितमधुरास्ते ते भावाः क्षिपन्ति च धीरताम् ॥ १६९

ततः प्रविशति यथानिर्दिष्टो माधवः ।

मा० । स्वगतम् । तामिन्दुसुन्दरमुखीं सुचिरं विभाव्य
चेतः कथं कथमपि व्यपवर्तते मे ।

---

निश्चयलिङ्गमाह । भुवने कन्दर्पाज्ञा भ्रमति सर्वं जनमास्कन्दति । विकर्तुं शीलमस्येति विकारि । पूर्वदशात्यागेन दशान्तरयोगो विकारस्तद्योगि यौवनम् । अयं तु युवेत्यर्थः । अत्र भ्रमतिपदेनानवच्छिन्नक्रियता तद्द्वारा सर्वकालता । भुवनपदेन सर्वदेशता । आज्ञापदेन युक्तिजिज्ञासां विना स्वीकारः । विकारिपदेन माधवाङ्गीकारिता च ध्वनिता । ललिताः सुन्दरा मधुराः परिभाव्यमानास्ते ते प्रसिद्धा भावा रमणीवदनविभ्रमादयो धीरतां धैर्यं क्षिपन्त्यपनयन्ति । तदनेनकामकृतमेतदुन्नीयत इति भावः । प्रकृतिमधुरा इत्यपि पाठः । तत्र प्रकृत्या स्वभावत एव मधुरा मनोहराः ।

१६६–१७० माधवप्रवेश इह द्विपदिकया । यदाह ।

शोकविभ्रमयुक्ते तु व्या [आ] धिचिन्तासमाश्रिते ।
श्रुतवार्तादिवैरूप्ये योज्या द्विपदिका बुधैः । इति ।

स्वगतमिति ।

यत्तु श्राव्यं न सर्वस्य स्वगतं तदिहोच्यते ॥

इति भरतः । अनुस्मृतिमाह । तामित्यादि । तां नायिकामचिरमधुनैव विचिन्त्य कथं मम चेतः ॥ कर्तृ ॥ कथमपि महता कष्टेन व्यपवर्तते व्यावर्तते नागच्छति वा । तस्यां लग्नं तामेव धावतीत्यर्थः । किं कृत्वा ।

---

१६९. प्रकृतिमधुराः noticed by Com.

१६६. प्रविश्य माधवः for ततः—मा० । O. ; N. om. यथानिर्दिष्टो.

१६७. N. O. om. माधवः स्वगतम्.

लज्जां विजित्य विनयं विनिवार्य धैर्य-
१७० मुन्मथ्य मन्थरविवेकमकाण्ड एव ॥
आश्चर्यम् । यद्विस्मयस्तिमितमस्तमितान्यभाव-
मानन्दमन्दममृतप्लवनादिवाभुत् ।

---

बालत्वेन कुलीनत्वेन च या लज्जा तामकाण्ड एवाप्रस्ताव एव वि-
जित्य । रभसकाल एव हि लज्जाद्यभावप्रस्ताव इति भावः । विनयं
मनोमलक्षालनोपदेशं दूरीकृत्य । महानायकतया साहजिकं धीरत्व-
मुन्मूल्य । कीदृशम् । मन्थरो मन्दो विवेक इतिकर्त्तव्यता यत्र तत् ।
क्रियाविशेषणं वा । कीदृशीम् । इन्दोश्चन्द्रात्सुन्दरं मुखं यस्यास्ताम् ॥
वैयधिकरण्येपि गमकत्वात्समासः ॥ इह तामित्यनुस्मृतिरिन्दुसुन्दरेति
गुणकीर्तनं विभाव्येति चक्षुःप्रीतिः कथमपीत्युद्वेगो लज्जां विजित्येत्यु-
न्मादो मन्थरविवेकमिति जडतेत्यनेकावस्थोक्ता ।

१७१–१७४ यदित्यादि । तत्संनिधौ यन्मदीयं हृदयं विस्मयेना-
द्भुतरसेन स्तिमितं निश्चलम् । एतेन स्तम्भ उक्तः । अत एवास्तमितो
नाशं प्रापितोन्यो भावो विस्मयातिरिक्तो धर्मो यत्र तत् । अनेन ज-
डतोक्ता । यदाह ।

इष्टं वानिष्टं वा सुखदुःखे वा न वेत्ति यो मोहात् ।
तूष्णीकः परवशगः स भवति जडसंज्ञकः पुरुषः ॥

आनन्देन निरन्तरसुखेन मन्दं मन्थरं चाभूत् । अमृतप्लवनादिव सु-
धासेकादिव । अथ च योगाभ्यासेन कुण्डलिन्याचरणेनामृतसेकादि-
वेत्यर्थः । तत्रापि परमानन्दसंदोहो भवत्येव । एतेनाद्भुतनायिकादर्श-
नजातभावभरमन्थरता दर्शिता । तद्धृदयमधुना तद्वियोगेङ्गारचुम्बि-
तमिवाङ्गारावस्पृष्टमिव व्यथमानं पीडायुक्तमास्त इत्याश्चर्यम् । न च

---

१७१. आश्चर्यं thrice N.
१७२. आनन्दसान्द्र B. D. ; °मृताप्लव K1. N. ; °दिवासील् N.

तत्संनिधौ तदधुना हृदयं मदीय-
मङ्गारचुम्बितमिव व्यथमानमास्ते ॥

मक० । सखे माधव इत इतः । १७५

माध० । परिक्रम्य । कथं प्रियवयस्यो मम मकरन्दः ।

मक० । उपसृत्य । सखे ललाटंतपस्तपति घर्मांशुः । तद-
स्मिन्नुद्याने मुहूर्तमुपविशावः ।

माध० । यदभिरुचितं वयस्याय । इत्युभावुपविशतः ।

कल० । दृष्ट्वा । कधं मअरन्दसहअरो इदं ज्जेव्व बालबउलु- १८०
ज्जाणं अलंकरेदि माहवो । ता दंसेमि से मअणवेअणावि-

---

प्रियासङ्गे सुखं तद्वियोगे दुःखमिति दृष्टचरमेव तत्कथमाश्चर्यमिति वाच्यम् । अननुभूतरसस्य तस्य शिशुत्वेन किमिदं यदकाण्ड एव व्यथेति तत्संभवात् ।

१७५–१८३ इत इत इहागच्छेत्यर्थः ॥ आद्यादित्वात्तसिः ॥ एतेन माधवस्य बाह्यार्थमहान्मित्रादर्शनं सूचितम् । ललाटं तपति ललाटंतपः ॥ [ असूर्यललाटयोरिति खश् प्रत्ययः । खित्वान्मुम् ॥ ] माधवीयमन्मथोन्मादमपह्नोतुकामस्येदं वचनम् ॥ वयस्यायेति रुच्यर्थानां प्री-

---

१७५. K1. om. इत; N. om. मक० ।—मम मकरन्दः । (l. 176).

१७६. B. Bh. O. add दृष्ट्वा, K1. दृष्ट्वा च after परिक्रम्य, Bh. O. om. प्रिय; मे for मम Bh. K1. O.

१७७. C. om. उपसृत्य; B. Bh. C. add माधव after सखे; भास्वान् O. तपनः B. Bh. C. for घर्मांशुः; B. Bh. add इयं च ते शरीरावस्था.

१७९. यथा प्रियवयस्याय रोचते A.; N. O. om. माध०–°शतः; Bh. om. इति.

१८०. N. om. दृष्ट्वा; कहं Bh. कहं णु N.; मयरन्द O. मअलंद N.; सहयरो O.; इमं B. Bh. C.; इदो D. for इदं; N. om. इदं ज्जेव्व; जेव्व Bh. ज्जेव O.; Bh. om. बाल; बालबालुज्जाणं O ; N. B. om. बउल; बालज्जाणं K1.

१८१. B. D. N. prefix णाह to माहवो; [illegible] C. D. K1. insert किं after ता; A. D. K1. have this से after अत्तणो, N. om. से; मयण° O. ; वाणवेअणा O.

ज्झुरन्तमालदीलोअणसुहावहं अत्तणो पडिच्छन्दअं । अहवा विस्सामसोक्खं दाव अणुभोदु । ( क )

मक० । तदस्यैव तावदुच्छ्वसितकुसुमकेसरकषायशीतला-
१८५ मोदवासितोद्यानस्य काञ्चनारपादपस्याधस्तादुपविशावः । तथा कुरुतः ।

मक० । वयस्य माधव । अद्य किल सकलनगराङ्गनाजनप्र-

---

( क ) कथं मकरन्दसहचर इदमेव बालबकुलोद्यानमलंकरोति माधवः । तद्दर्शयाम्यस्य मदनवेदनाखिद्यमानमालतीलोचनसुखावहमात्मनः प्रतिच्छन्दकम् । अथवा* विश्रामसौख्यं तावदनुभवतु ।

---

यमाण इति संप्रदानता ॥ अत्र मकरन्देन पुष्परसेन सहचरो माधवो वसन्तो बालबकुलमलंकरोतीति ध्वनिरप्युन्मिषति । मुहूर्तं चेत्यत्र सुस्थिते चित्ते वक्तुं युक्तमिति भावः ।

१८४–१८५ उत्फुल्लपुष्पाणां ये केसराः किञ्जल्कास्तैः कषायो लोहितः शीतलश्च य आमोदस्तेन वासितं सुगन्धीकृतमुद्यानं येन तस्य ॥ कषायः सुरभौ लोहितेन्यवदिति मेदिनीकरः ॥ कषायादिसंबन्धेन सौरभस्यातिगंभीरतोक्ता । आमुद्यतेनेनेत्यामोद इति । कषायादिसंपदे काञ्चनारेत्युक्तम् ।

१८७–१९० प्रवर्तितः कृतः । आभिरामेति यात्रान्वयि । इह मकरन्दवचनेन नर्मरूपा प्रतिमुखसंधिरुक्ता । यदाह ।

---

१८२. विधुर N. खिद्यमाण A. D. विझूरन्त Bh. विझुरन्त O. for विज्झुरन्त.

१८३. B. Bh. C. N. insert माहवो and A. D मुहुत्तं after अहवा; वीसाम Bh. K1. O.; सोक्खं O.; दावद् O.; °होदु B. Bh. N. O.

१८४. N. om. एव.

१८५. काञ्चन for काञ्चनार A. C. N.; तावद् before उपविशावः K1.

१८७. N. om. माधव; अद्यैव तावत् A. D. K1. अद्यैतावत् K2. for अद्य किल; N. O. om. किल; नराङ्गना K1. ; N. om. जन.

* Com. adds मुहूर्तं चेह after अथवा.

वर्तितमहोत्सवाभिरामकामदेवोद्यानयात्राप्रतिनिवृत्तमन्यादृशं भवन्तमवधारयामि । अपि नाम मनागवतीर्णोसि रतिरमणबाणगोचरम् ।　　　　१९०

माधवः सलज्जमधोमुखस्तिष्ठति ।

मक° । विहस्य । तत्किमवनतमुग्धमुखपुण्डरीकः स्थितोसि । पश्य

अन्येषु जन्तुषु रजस्तमसावृतेषु
विश्वस्य धातरि समः परमेश्वरे च ।　　　　१९५

---

शृङ्गारार्थं त्रपाकारि वाक्यं गोष्ठीषु नर्म तत् । इति । अपिः समुच्चये । नाम संभावनायाम् । इदं संभाव्येतापीत्यर्थः । मनागल्पम् । रतिरमणः कामः ।

१९२–१९७ मुग्धं किंकर्त्तव्यताशून्यम् । पुण्डरीकं सितपद्मम् । विरहधूसरत्वेन मुखस्य पुण्डरीकसाम्यम् । तस्य लज्जयाकथनमाशङ्क्याहान्येष्वित्यादि । माधव तवापह्नुतिर्लज्जया कथंचिदपि मा भूत् । लज्जयापह्नवं मा कृथाः । एवमप्रतीकारः स्यादिति भावः । खलु यतः सोयं चित्तजन्मा कामः प्रख्यातपौरुषः । चित्तोन्माथविषय इति भावः । कीदृशः । विश्वस्य धातरि जगत्स्रष्टरि परमेश्वरे हरेन्येषु

---

१८८. मह।महे।त्सव° Bh. ; मदनोद्यान A. D. K1. K2.; यात्रातः O. ; अभिनिवृत्त for प्रतिनिवृत्त A. D. K1. K2.; °दृशमिव Bh. K2. N. O.

१८९. अपि न त्वमवतीर्णोसि O. ; अपि त्वमवतीर्णो° N.

१९०. गोचरताम् N.

१९१. माधव नहि नहि for माधव-°ष्ठति N.: लज्जया for सलज्जम् A. D. K1, K2.

१९२. N. om. विहस्य; तत्किमिति नम्रमुख O. तत्किमिव नम्रमुग्ध N. तत्किमिव नतमुख° K2.; K1. om. मुग्ध; रीकं Bh. O. ; तिष्ठसि for स्थितोसि A. D. K1. K2.

१९३. Bh. N. O. om. पश्य.

१९४. बहिस्तमसा B. च यस्तमसा° N.

१९५. परमेश्वरेपि B. N.

सोयं प्रसिद्धविभवः खलु चित्तजन्मा
मा लज्जया तव कथंचिदपह्नुतिर्भूत् ॥

माध० । वयस्य किं न कथयामि श्रूयताम् । गतोहमवलो-
किताजनितकौतुकः कामदेवायतनम् । तत्रेतस्ततः परिक्रम्या-
२०० वलोक्य च परिश्रमादुल्लसितमदिरामोदमधुरपरिमलाकृष्टसक-
लमिलदलिपटलसंकुलाकुलितमुकुलावलीमनोहराभरणरम-
णीयस्याङ्गनभुवो बालबकुलस्यालवालपरिसरे स्थितः ।

जन्तुषु मानुषादिषु च रजस्तमोगुणप्रधानेषु समस्तुल्यव्यापारः । यद्वा । अन्येषु मानुषादिषु रजस्तमसावृतेषु च तिर्यग्योनिषु विश्वस्य धातरि ब्रह्मणि परमेश्वरे हरे च सम इति भिन्नमेव योज्यम् । अतो लज्जां त्यक्त्वा कथयेति भावः ।

२००–२०७ परिश्रमात्स्थित इत्यन्वयः । परिश्रमात्स्थितोहं न तु साकाङ्क्षत्वादिति भावः । मदिरामोदवन्मनोहरो यः परिमलः शुभगन्धः ॥ स्याच्छुभगन्धे परिमल इति विश्वः ॥ मिलन्मिलितम् । संकुलेन व्याप्त्याकुलिता या बकुलमुकुलावली विकासाभिमुखकलिकाराजिः सैव मनोहरमाभरणं तेन रमणीयस्य । यद्वा । मदिरामोदेन मधुर इति समासः । तेन मदिरामोदस्य बकुलपुष्पोद्गमं प्रति दोहदत्वमाह । अङ्गनभुवोङ्गनस्थस्य । अनेन निकटवर्तिनः सेका-

१९६. किल for खलु A.

१९८. N. om. श्रूयताम्; ते after कथयामि N.; अथ गतो O.

१९९ कौतूहलः for कौतुकः B.; इतस्ततश्च for तत्रेतस्तत N.; तत्र चे० A. D. K1. K2. परिभ्रम्य O.

२००. K2. N. om. अवलोक्य च; परिक्रमाद् K1 भ्रमाद् B. for परिश्रमाद्; मधुरमदिरामोदपरिमल C. N.; मधु? K2. परम O. मनोहर B. for मधुर; कृष्टसकल K2. आकृष्टमिलिन्दपटलसंकुल B.

२०१. सकलकलमिलद० N.; A. D. add बकुल before मुकुल; K2 बकुल for मुकुल.

२०२. °भरणस्य रमणीयाङ्गन° N.; °स्याङ्गण Bh. O. ; K2 om. बाल; बकुलमुकुलस्याल° K2.

तस्य च यदृच्छया निरन्तरनिपतितानि कुसुमान्यादाय विदग्ध-
रचनामनोहरां स्रजमभिनिर्मातुमारब्धवानस्मि । अनन्तरं च सं- २०५
चारिणीव देवस्य मकरकेतनस्य जगद्विजयवैजयन्तिका निर्गत्य
गर्भभवनादुज्ज्वलविदग्धमुग्धनेपथ्यविरचनाविभावितकुमारी-
भावा महानुभावप्रकृतिरत्युदारपरिजना कापि तत एवागतवती।

दिना मनोज्ञता दर्शिता । इहाङ्गणपदेनुविधायकाभावाण्णत्वश्रुतिरयु-
क्ता ॥ पृषोदरादित्वाण्णत्वमित्यपि वचोमूलकमेव । प्रत्युताङ्गनं प्राङ्गणे
जाले कामिन्यामङ्गना मतेति विश्वादिकोषात्तवर्गपञ्चमोपान्तमङ्गनं के-
वलमिति शब्दप्रकाशाच्च नान्तत्वमेवेत्यवधेयम् । आलवालं खल इति
[अळें इति पालेति-पाठान्त०] ख्यातम् ॥ स्यादालवालमावालमम्भसां
यत्र धारणमित्यमरः ॥ विदग्धेति । मालानिर्माणं कामशास्त्रवैदग्ध्य-
द्योतनाय । उक्तं च मालाग्रथनविकल्पा इत्यादिनेति भावः । अतिसु-
कुमारतया कामिनोर्मनोहरतया सुगन्धितया सुन्दरतया चान्यपुष्पाणि
त्यक्त्वा बकुलपुष्पैर्मालाग्रथनमिह । अत एव दमयन्तीस्वयंवरादा-
वपि बकुलमालासममधूकमालापरिग्रहः । संचारणी गमनशीला
मकरकेतोः कामस्य वैजयन्तिका पताका । गर्भभवनान्मध्यावासादु-
ज्ज्वलया निर्मलया ग्राम्यया च शिशुप्रसाधनविरचनयोन्नीतः कुमारी-
भावः कुमारीत्वं यस्याः । कुमारीत्वेनावगुण्ठनपटाद्यभावात्तद्दर्शनमिति
भावः । महानुभावप्रकृतिरतिप्रभावस्वभावा । अत्युदारो महान्दक्षिणो

२०३. O. om. निरन्तरनिपतितानि; निरन्तरविकसितानि; B. विकसितनिरन्तराणि C. °तानि विकसितान्यादाय कुसुमानि Bh.; विकसितान्यादायादाय कुसुमानि O.

२०४. विदग्धाविरचना Bh. K1. K2.; विदग्धाविरचनया स्रजं ग्रथितुमारब्ध° O.; N. O. om. अस्मि; तु for च Bh.

२०५. मकरकेतोर्ज° A. D. K1. K2.

२०६. K1. om. गर्भ; B. Bh. N. O. insert बाल after मुग्ध; रचना O.; कौमारभावा K1. K2.

२०७. इत for तत N.

सा रामणीयकनिधेरधिदेवता वा
सौन्दर्यसारसमुदायनिकेतनं वा ।
२१० तस्याः सखे नियतमिन्दुसुधामृणाल-
ज्योत्स्नादि कारणमभून्मदनश्च वेधाः ॥

---

वा । उदारो महति दक्षिण इति शाश्वतः ॥ परिजनदाक्षिण्यं सांनिध्यानयनेन ज्ञेयम् । तत एव तत्रैव ।

२०८-२११ तद्गुणकीर्तनमाह । सेत्यादि । सा स्त्री रामणीयकस्य मनोहरताया निधेराधारस्याधिदेवताधिष्ठात्री देवता । यद्वा । रामणीयकमेव निधिस्तस्याधिष्ठात्री रक्षिका देवता । सौन्दर्यसारसमुदायस्य कान्तिनिर्यासपूरस्य निकेतनं गृहं वा । निकेतनस्याजहल्लिङ्गतया सामानाधिकरण्यम् । मनोहरत्वं कान्तिमत्त्वं च तत्रैव दृष्टमिति भावः । वा समुच्चये । यद्वा । वा विकल्पे तत्र निर्णेतुं न शक्यत इति विकल्पार्थः ॥ यद्वा/वेवार्थे रामणीयकनिधेर्देवतेवेत्यर्थः ॥ वा स्याद्विकल्पोपमयोरिवार्थेपि समुच्चय इति विश्वः ॥ यद्वा । रामणीयकं रूपादिसंपत्तिस्तन्निधेरधिदेवता । अनेन शोभोक्ता । यदाह ।

रूपयौवनलावण्यैरुपभोगोपबृंहितैः ।
अलंकरणमङ्गानां शोभेति परिकीर्तिता ॥

सौन्दर्येत्यादिना कान्तिरुक्ता । यदाह ।

शोभैव कुसुमास्त्रेण पूरिता कान्तिरुच्यते ।

अतोनयोर्भेदः । अत्यन्तविलक्षणां तामालोक्योत्प्रेक्षते । नियतं नूनं तस्याः कारणं समवायिकारणमिन्दुसुधामृणालज्योत्स्नादिकमभूत् । चन्द्रो मुखस्य सुधाधरस्य मृणालं भुजयोर्ज्योत्स्ना लावण्यादीनामिति भावः । आदिपदेन पद्मौ पादयोः किसलयौ चरणयोरिति ग्राह्यम् ।

---

२१०. कला for सुधा N. O. सुधा margin of O.

अथ सा प्रणयिनीभिरनुचरीभिरविरलकुसुमसंचयावचयलीलादोहदिनीभिरभ्यर्थ्यमाना तमेव बकुलपादपोद्देशमागतवती । तस्याश्च कस्मिन्नपि महाभागधेयजन्मनि बहुदिवसोपचीयमानमिव मन्मथव्यथाविकारमुपलक्षितवानस्मि । २१९

यतोस्याः । परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः
कथमपि परिवारप्रार्थनाभिः क्रियासु ।

---

सर्वोपमाद्रव्यघटितेयमिति भावः । एवं मदन एवास्या वेधाः स्रष्टाभूत् । चकारोवधारणे । वेदजडस्य पुराणस्य ब्रह्मणो नात्र निर्माणकौशलमिति भावः । अत्र कामस्य स्रष्टृत्वेनाश्रुतत्वात्कथमिदमिति न देश्यम् । अस्या मोहनीत्वेन मोहनपटुकामजन्यत्वोत्प्रेक्षणात् । अदृष्टचरत्वस्योत्प्रेक्षायामनुकूलत्वात् । असदारोपणस्योत्प्रेक्षात्वात् । नियतपदमुत्प्रेक्षाव्यञ्जकम् । नूनमित्येवमादिभिरिति वचनात् ।

२१२–२१५ प्रणयिनी स्निग्धा । अनुचरी दासी । संचयः समूहः । अवचयस्रोटनम् । दोहदोभिलाषः । सहर्षमाह तमेवेति । स्वोद्देशेनाह कस्मिन्नपीति ॥ भागधेयं भाग्यमित्यमरः ॥ इहानुमानरूपो गर्भसंधिः कस्मिंश्चिदित्यनेनोक्तः । यदाह ।

व्याप्येन व्यापकज्ञानमनुमानमुदीरितम् । इति ।

२१६–२२२ विकारचिह्नमाह । परिमृदितेति । यथास्या अङ्गं प-

---

२१२. N. O. om. सा; B. om. अनुचरीभिः; अनुचरीभिः before अभ्यर्थ्य° O.; N. om. अविरल—°दिनीभिः; अनवरत for अविरल O.

२१३. कुतूहलिनीभिः for दोहदिनीभिः O.; तमेव च Bh.; बालबकुल A. D. K1. K2.; आगता B.

२१४. तदा before तस्याः N.; N. om. च; कस्मिंश्चिदपि A. D. K1. K2.; महाभागजन्मनि K1. K2. O.

२१५. °मानमिवात्मन्यन्यथाविकार° Bh.; C. om. व्यथा; अविभाविनम् before उपलक्षि° O.; उपलब्धवानस्मि A. D. K1.

२१६. यतः for यतोस्याः A. B. Bh. C. N. K1. K2; मृणाल N.

२१७. कथमिव Bh.

कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मी-
मभिनवकरिदन्तच्छेदपाण्डुः कपोलः ॥

२२० सा पुनर्मम प्रथमदर्शनात्प्रभृत्यमृतवर्तिरिव चक्षुषोर्निरतिश-यमानन्दमुत्पादयन्त्ययस्कान्तमणिशलाकेव लोहधातुमन्तःक-रणमाकृष्टवती सर्वथा । किं बहुना ।

---

रिमृदिता मर्दनविषयीकृता या मृणाली बिसलता तद्वन्म्लानम् । क्रियासु ताम्बूलभक्षणादिषु परिजनयाचनाभिरस्याः कथमपि प्रवृत्तिः । इह मृणालीपदेन तनुता म्लान्या निद्राच्छेदः कथमपीत्यादिना विषयनिवृत्तिः कथिता । तनुत्वम्लानत्वमान्द्यैर्ग्लानिरुक्ता । यदाह ।

ग्लानौ तनुत्ववैवर्ण्यमन्दतादिनिदर्शनम् ।

ननु तनुत्वादिना व्यभिचारिणा कथं कामविकारोन्नयनमत आह । कलयतीति । तस्याः कपोलो हिमांशोः शोभां कलयति तुलयति । अनेन पाण्डुता दर्शिता । कीदृशः । नूतनदन्तिदन्तखण्डगौरः । छिद्यत इति च्छेदः खण्डः । इहाभिनवपदेन सपुलकत्वं ध्वनितम् । तथा च कपोल-पाण्डुत्वसपुलकत्वादिना कामविकारव्याप्तेन तदुन्नयनमिति भावः । विरहे पाण्डुतापि । यदाह ।

अङ्गस्यासौष्ठवं तापः पाण्डुता कृशता रतिः ।

वर्तिर्नेत्राञ्जनलेखा । अयस्कान्तो लोहाकर्षको मणिः । लोहधातुर्लोहरूपं द्रव्यम् । अन्तःकरणं मनः। ममान्तःकरणमाकृष्टवतीत्यर्थः । किं बहुनेत्यनेन सखेदनिःश्वाससूचनम् ।

---

२१९. दान्त C. कान्त B. for दन्त ; °च्छेदकान्तः Bh.

२२०. A. N. O. om. पुनर् ; N. om. प्रथम ; प्रथमदर्शनक्षणात्प्रभृति A. Bh. D. K1. K2. O.; नयनयोः for चक्षुषोः C.; अतिशयानन्दं A. D. K1. K2. निरन्त-मानन्दं C.

२२१. °शयानन्दं O.

२२२. °रणमुपसंहृतवती N., °रणमभिचुम्बितवती Bh: °रणमाक्षिप्तवती B. C.; A. D. K1. K2. om. सर्वथा, सर्वथा after बहुना N.

संतापसंततिमहाव्यसनाय तस्या-
मासक्तमेतदनपेक्षितहेतु चेतः ।
प्रायः शुभं च विदधात्यशुभं च जन्तोः २२९
सर्वंकषा भगवती भवितव्यतैव ॥

मक० । वयस्य माधव । स्नेहश्च निमित्तसव्यपेक्षश्चेति विप्रतिषिद्धमेतत् । पश्य ।

---

२२३-२२६ संतापेत्यादि । ममैतच्चेतस्तस्यां विषय आसक्तं समन्ताल्लग्नमस्तीत्यर्थः । संतापपरंपरैव महाव्यसनं तदर्थम् ॥ तादर्थ्ये चतुर्थी ॥ संततिपदेन मालतीलाभमन्तरेण यावज्जीवमविच्छेदस्तदलाभे प्राणहानिश्चोक्ता । कीदृशम् । अनपेक्षितनिमित्तम् । एतेन विषयालाभेप्यस्य स्वाभाविकी प्रीतिरुक्ता । यदाह ।

अभ्यासादभिमानाच्च तथा संप्रत्ययादपि ।
विषयेभ्यश्च तत्त्वज्ञा विदुः प्रीतिं चतुर्विधाम् ॥

अनेन निजमुच्छृङ्खलत्वमपि निरस्तम् । अत एवाह प्राय इति । बाहुल्येन भगवती भवितव्यतावश्यंभावि प्राक्तनकर्म जीवानां शुभमशुभं च विदधाति । अत एव सा सर्वंकषा सर्वहरा । तथा च ममावश्यकं दुःखं त्वं तु यथोचितं कुर्या इति भावः ॥ आसक्तेत्याङ्पूर्वात् षच् समवाये क्तः । सर्वंकषेति खच्प्रत्यये खित्वान्मुम् ॥

२२७-२३२ माधवोक्तप्रीतेरनिमित्तकत्वमुपपादयति । स्नेह इति । निमित्तमिह द्वयं बाह्यमाभ्यन्तरं च । तदिह बाह्यहेत्वपेक्षः स्नेहोऽस्थिर एव । निमित्तनिवृत्तौ तन्निवृत्तेरावश्यकत्वात् । अत आन्तरनिमित्तापेक्षैव स्नेहस्येति भावः । विप्रतिषिद्धं विरुद्धं बाह्यनिमित्तापेक्षया विरोध

---

२२७. N. om. माधव ; A. B. C. D. O. om. च before इति.
२२८. प्रसिद्धमेतद् C.

व्यतिषजति पदार्थानान्तरः कोपि हेतु-
२३० र्न खलु बहिरुपाधीन्प्रीतयः संश्रयन्ते ।
विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥

ततस्ततः ।

---

इति भावः । स्वोक्ते युक्तिमाह । व्यतिषजतीत्यादि । आन्तरो हेतुः को- प्यनिर्वचनीयः पदार्थान्नरनारीप्रभृतीन्व्यतिषजति विशेषतो मेलयति । यतः प्रीतयो बहिरुपाधीन्बाह्यहेतून्सौन्दर्यादीन्न संश्रयन्ते प्रकर्षेणावल- म्बन्ते । अत्र कोपीत्यनेन जन्मान्तरानुभवजनितसंस्कारताध्वनिः । न खल्वित्यनेन दृष्टश्रुतानुमितसकलैहिकोपाधिनिषेधात्तथावसायः । अत एव विशेषप्रकर्षद्योतकाभ्यामुपसर्गाभ्यामासङ्गस्य जीवितावधित्वमु- क्तम् । उक्तं द्रढयति । यतः पतङ्गस्य सूर्यस्योदये पुण्डरीकं विकसति चन्द्र उद्गत उदिते सति चन्द्रकान्तो द्रवति क्षरति च । तथा च तीक्ष्णकरोदये कोमलकमलदलविकासादमृतकरोदये पाषाणदारणाच्च सहजसिद्ध एव हेतुः । इह किं बाह्यं कारणं दृश्यते । तद्वत्प्रकृतेपि स्वाभाविक एव स्नेह इति भावः ॥ [पतङ्गः शलभे रवाविति धरणिः ॥] पुण्डरीकपदमिह पद्ममात्रपरम् । अर्थान्तरन्यासोयम् ।

२३३–२३९ ततस्तत इति कथोपक्रमरीतिः । तत्र स्थाने । सभ्रूविलासमित्यादि । अथ तस्याः सखीजनेन तदा सोयमित्युक्त्वा सप्रत्यभिज्ञमिव पूर्वदृष्टमिव मामवलोक्य सभ्रूविलासं सभ्रूभङ्गं यथातथा कटाक्षाः क्षिप्ताः। एतेन कटाक्षाणां पूर्वदृष्टप्रत्यभिज्ञाकारार्पणत्वमुक्तम् ।

---

२२९. °नन्तरः B. °वान्तरः D.
२३२. °श्मावुद्यते N.
२३३. N. om. one ततः.

माध० । ततश्च तत्र ।

सभ्रूविलासमथ सोयमितीरयित्वा २३५

सप्रत्यभिज्ञमिव मामवलोक्य तस्याः ।

अन्योन्यभावचतुरेण सखीजनेन

मुक्तास्तदा स्मितसुधामधुराः कटाक्षाः ॥

मक० । स्वगतम् । कथं प्रत्यभिज्ञापि नाम ।

माध० । अथ ताः सलीलमुत्तालकरकमलतालिकातरलवलया- २४०

---

कीदृशेन । अन्योन्याशयविज्ञेन । अनेन नायिकाव्युत्पत्त्यतिशय उक्तः । कीदृशाः । स्मितमीषद्धसितमेवामृतं तेन मनोज्ञाः ।

ईषत्प्रफुल्लितैर्गण्डैः कटाक्षैः सौष्ठवान्वितैः ।

अदृष्टदन्तकुसुमैरुत्तमानां स्मितं मतम् ॥

इति भरतः। स्वस्यादृष्टचरत्वेन संभावनायामिहेवशब्दः। अवलोक्येति ललिता दृष्टिरियम्। यदाह।

मधुराकुञ्चितारा च सभ्रूक्षेपा च सस्मिता ।

समन्मथविकारा च दृष्टिः सा ललिता मता ॥

इह तु हर्षादियमुचिता । यदाह । धृतौ हर्षे च ललिता । भ्रूविलासेत्यनेन मोट्टायितमपि कटाक्षितम् । प्रत्यभिज्ञैकस्य तत्तेदन्तावैशिष्ट्यम् । तस्या एवाकारः सोयमिति। नाम संभावनायाम् । अदृष्टचरत्वेन माधवप्रत्यभिज्ञाया असंभवादिति भावः ।

२४०–२४६ तामेव स्फोटयति । अथेति । अनन्तरं ताः सख्यो हे भर्तृदारिके स्वामिपुत्रि हर्षेण वयं वर्धामहे यतोत्रैव स्थाने

---

२३४. Bh. om. ततश्च तत्र.

२३५. °मितीव नाम N. O.

२३७. अन्योन्यमेव चतुरेण N., (with भा in margin as a substitute for मे) O.

२३८. मुक्तास्सदा C.

२३९. Bh. N. om. स्वगतम्; O. om. कथं; ततस्ततः after नाम N.

२४०. दत्तउत्तालकर° B. Bh.; A. inserts लालित after कमल.

वलीकमुच्चस्तमत्तकलहंसीविभ्रमाभिरामचरणसंचरणझणझणायमानमञ्जीरमञ्जुरसितानुविद्धमेखलाकलापकलकिङ्किणीरणत्कारमुखरं परिवृत्य भर्तृदारिके दिष्ट्या वर्धामहे यदत्रैव कोपि कस्यापि तिष्ठतीति मामङ्गुलीदलविलासेनाख्यातवत्यः ।

---

कस्यापि कोपि तिष्ठतीत्युक्त्वा मामङ्गुलीखण्डलीलया कथितवत्यः । किं कृत्वा । सलीलं सविलासचेष्टितं यथा तथा प्रतिनिवृत्त्य । स्त्रीणां विलासचेष्टितं लीलेति भरतः । उत्तालमुद्भटम् । विभ्रमो विलासो विशिष्टभ्रमणं वा । मञ्जुर्मनोज्ञः । मञ्जीरो नूपुरः । रसितानुविद्धः शब्दानुगतः । मेखलायाः कलापो गुच्छः । यद्वा । मेखला च कलापश्च तयोः किङ्किणी क्षुद्रघण्टिका ।

मेखला च कलापश्च भवेच्छ्रोणिविभूषणम् ।
एकयष्टिर्भवेत्काञ्ची मेखला त्वष्टयष्टिका ॥
रशना षोडश ज्ञेया कलापः पञ्चविंशतिः ॥

इति भरतः। इदं सर्वं निवर्तनक्रियाविशेषणम् । गतिरियं विकला।यदाह ।

आवेगे चैव हर्षे च कार्ये च त्वरयान्विते ।
एतेषु च गतिं प्राज्ञो विकलां संप्रयोजयेत् ॥ इति ।
राजा भट्टारको देवस्तत्सुता भर्तृदारिका ॥

---

२४१. °कं समुच्चस्त Bh. समुच्चस्त B. C. °लीसमुच्चस्त O.; भवन for मत्त O.; रणरणायमान for झणझणायमान N. O.

२४२. मञ्जुमञ्जीर B. Bh. C. सिञ्जित O. शिञ्जित A. K1. K2. for रसित; A. D. N. O. om. कल; रणरणत्कार N.; झणत्कार O.

२४३. प्रतिनिवृत्य for परिवृत्य A. K1. K2. N. O.; वर्धसे for वर्धामहे B.

२४४. कस्या अपि Bh. C. N.; वल्लभः before तिष्ठति B. Bh. N.; तिष्ठते इति K2.; O. om. दल; विन्यासेन for विलासेन O.; दर्शितवत्यः for आख्यातवत्यः O.

मक०। स्वगतम्। हन्त महतः प्रागनुरागस्योद्भेदः। २४५

कल०। आकर्ण्य। कधं सरसरमणीआणुबन्धिणी इत्थीअणकधा। (क)

मक०। ततस्ततः।

माध०। अत्रान्तरे किमपि वाग्विभवातिवृत्त-
वैचित्र्यमुल्लसितविभ्रममुत्पलाक्ष्याः। २५०

(क) कथं सरसरमणीयानुबन्धा स्त्रीजनकथा।

राजपदमीश्वरमात्रपरम्। तेनामात्यकन्यापि भर्तृदारिकेत्युच्यत इत्यवधेयम्। कोपि कस्यापीत्यनेनानुद्घटोद्भावनेन तासां चातुर्यमुक्तम्। अत एव कस्यापीति सामान्यनिर्देशात्क्लीबत्वम्। अन्यथा स्त्रीलिङ्गनिर्देशः स्यात्। कोपीति पुंलिङ्गनिर्देशस्तु स्पष्टार्थः। अन्यथा किमपीति निर्देशे पुष्पादिप्रतिपत्त्या संशयः स्यादिति भावः। अङ्गुलीदलपदेन सविलासाख्यानमुक्तं संगुप्तमाख्यानं वा ध्वनितम्। इदमाख्यानं नर्मवाक्यम्। यदाह।

सहास्यवचनप्रायं नर्मेच्छन्ति मनीषिणः॥

हन्त हर्षे। उद्भेदः प्रकाशः। अनुबन्धिनी प्रतीयमाना।

२४९–२५२ अत्रान्तरेत्यादि। सखीनां दर्शनावसर एव पद्माक्ष्याः संबन्धि तन्मान्मथं कामजमाचार्यकमुपदेशकर्माविरासीत्प्रकटीभूतम्।

२४५. N. om. स्वगतम्; सूचितो before महतः B.; महतः खलु Bh.; प्रियानुरागस्य for प्रागनुरागस्य N.; सूचितः after उद्भेदः Bh.

२४६. K1. K2. N. O. om. आकर्ण्य; कथं A. K1. एदाणं N. for कधं; रमणीया K2. O. रमणिज्जा N. for रमणीआ; °त्तीअण° K2.

२४७. इत्थीआअण B. इत्थिआकहा N. इत्थीकहा O. इत्थिआकथा वट्टइ Bh.

२४८. B. om. one ततः

२४९. विभवातिवृत्ति O. विभवातिवर्ति N.

२५०. आयताक्ष्याः for उत्पलाक्ष्याः B. N.

तद्भूरिसात्त्विकविकारमपास्तधैर्य-
माचार्यकं विजयि मान्मथमाविरासीत् ।

ततश्च । स्तिमितविकसितानामुल्लसद्भ्रूलतानां

---

कीदृशम् । किमप्यनिर्वचनीयम् । अत एव वाग्विभवाद्वचनप्रपञ्चाद-तिवृत्तमतिशयितं वैचित्र्यं यस्य तत् । उल्लसित उत्थितो विभ्रमो भावभेदो यत्र तत् ।

यच्चित्तवृत्तेरनवस्थितत्वं शृङ्गारजो विभ्रम उच्यतेसौ ।
भेदास्त्रयस्तस्य मदानुबन्धकार्कश्यसंज्ञाः कथिता विदग्धैः ॥

इति भरतः । भूरि प्रचुरः सात्त्विकविकारो यत्र तत् । सत्त्वं मानसं किमपि तेन निर्वृत्तः सात्त्विको भावः । यदाह ।

सत्त्वोत्कटे मनसि ये प्रभवन्ति भावा-
स्ते सात्त्विका निगदिताः कविभिः पुराणैः ।

ते च ।

स्वेदः स्तम्भोथ रोमाञ्चः स्वरभङ्गोथ वेपथुः ।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मताः ॥ इति ।

अपास्तं क्षिप्तं धीरत्वं येन तत् । महाभिजनत्वाद्यनपेक्षित्वादिति भा-वः । विजयि सर्वत्राप्रतिहतं कुमार्या अपि शिशुत्वाद्विजय इति भावः । उत्पलाक्ष्या इत्यनेन बहुविधे नेत्रविकारे प्रीतिगो हाव ईर्ष्याज इहोक्तः । यदाह ।

भ्रूनेत्रादिविकाराद्यः शृङ्गाराकारसूचकः ।
स्थायिभावः स्थितो हाव ईर्ष्याजः प्रीतिगोपि च ॥

इह श्लोके विलास उक्तः । यदाह ।

दयितावलोकनादौ विशेषोङ्गक्रियासु यः ।
शृङ्गारचेष्टासहितो विलासः समुदीरितः ॥

---

२९२. मनसि for विजयि B.

मसृणमुकुलितानां प्रान्तविस्तारभाजाम्।
प्रतिनयननिपाते किंचिदाकुञ्चितानां २५५

२५३–२५६ संप्रति हेला हावात्समुत्थितेति भरतानुसारेण हावानन्तरं हेलामाह। स्तिमितेत्यादि।

नारीणां प्रियसंभोगलज्जासाध्वसकौतुकैः।
स्वभावाविष्कृतो वेगो हेलेति परिकीर्तितः॥

इति भरतः। श्लोकार्थस्तु तस्या आलोकितानां सहसा दर्शनानां पात्रं योग्योहमभूवं वृत्तोस्मि।

सहसा दर्शनं यस्यात्तदालोकितमुच्यते॥

इति भरतः। कीदृशानाम्। मदीयरूपनिरूपणाश्चर्येण स्तिमितानि निश्चलानि हर्षेण विकसितानि प्रफुल्लानि च तेषाम्। दृष्टिरियमद्भुता। यदाह।

समाकुञ्चितपक्ष्माग्रा विस्मयोद्भूततारका।
सौम्या विकसितान्ता च दृष्टिः स्यादद्भुताभिधा॥

यद्वा। स्तिमितं मन्दं यथा तथा विकसितानां प्रकाशितानां प्रथमं नायकदर्शनेन शनैः शनैः प्रसारणमिति भावः। अनेनोत्तरोत्तरदर्शनाभिलाषः सूचितः। उल्लसन्ती चपला भ्रूर्लतेव येषु तेषाम्। दीर्घत्वेन भ्रूलतयो रूपकम्। अनेन कान्ता दृष्टिरुक्ता। यदाह।

हर्षप्रसादजनिता कान्तात्यर्थं समन्मथा।
सभ्रूक्षेपकटाक्षा च शृङ्गारे दृष्टिरिष्यते॥

मसृणानि चिक्कणानि लज्जया मुकुलितानि च तेषाम्। दृष्टिरियं मुकुलिता।

२५४. प्रीति for प्रान्त C.

विविधमहमभूवं पात्रमालोकितानाम् ।

तश्चे । अलसवलितमुग्धस्निग्धनिष्पन्दमन्दै-

मुग्धा निमीलितान्ता च मुकुला दृष्टिरिष्यते ॥

इति भरतः । यद्वा । सुखभावनया मसृणं मन्दं यथा भवति तथा मुकुलितानाम् । एतेन दर्शनजनितानन्दसंपत्पर्यवसानं सूचितम् । पुनः पुनर्दर्शनाकाङ्क्षया तिर्यगायतत्वेन प्रान्ते निकटे च विस्तारवताम् । शङ्किता दृष्टिरियम् । यदाह ।

किंचिच्चलत्स्थिरा किंचिन्नमिता तिर्यगायता ।
गूढा चकिततारा च शङ्किता दृष्टिरुच्यते ॥

अनेन कटाक्षपर्यवसानमुक्तम् । प्रतीपदिगायतमन्नेत्रपाते सति लज्जया दर्शनोत्सुकतया च किंचिदाकुञ्चितानां मुद्रितानाम् । आकुञ्चितेयं दृष्टिः । यदाह ।

अनाकुञ्चितपक्ष्माग्रा पुटैराकुञ्चितैस्तथा ।
संनिकुञ्चिततारा च कुञ्चिता दृष्टिरुच्यते ॥

न च

कुञ्चिता सूचिता नष्टदुष्प्रेक्षाक्षिव्यथासु या ॥

इति भरते नियमादिह कुञ्चितदृष्टिकथनमयुक्तमिति वाच्यम् । लज्जया माधवे दुष्प्रेक्षत्वसंभवात् । पात्रं कीदृशम् । विविधं नानाप्रकारम् । स्तिमितदृष्टिप्रयोगेऽपि मयापि तथैव दृष्टिप्रयोगः कृत इत्यर्थः । योग्यभाजनयोः पात्रमित्यमरः ॥ अभूवमिति भुवो लुङि सिचि रूपम् ॥

२५७–२६० अलसेत्यादि । पक्ष्मलाक्ष्याः प्रशस्तपक्ष्मयुक्तायास्तैरवलोकितैः कटाक्षतापन्नैर्मम हृदयमपहृतं स्ववशीकृतम् । इह रक्षकबाहुल्येन गमनत्वरया शङ्कया वावलोकितानामेव कटाक्षत्वमुक्तम् । कटाक्षस्तिर्यग्विलोकनात्मकः कर्णाभ्यर्णसंचारितारकः सर्वानङ्गरङ्ग-

२५७. किञ्च for तैश्च N.; चलित for वलित B.; निष्यन्द for निष्पन्द K1.

रधिकविकसदन्तर्विस्मयस्मेरतारैः ।
हृदयमशरणं मे पक्ष्मलाक्ष्याः कटाक्षै-
रपहृतमपविद्धं पीतमुन्मूलितं च ॥ २६०

जनक इति भावः । तथा निश्चलत्वेनापविद्धं मथितम् । मथ्यमानतया द्रवरूपत्वेन पीतम् । अत एवोन्मूलितम् । तदा किमपि मया न ज्ञातमित्यर्थः । अत एवाशरणं रक्षकशून्यं जातम् । ततो यथार्हं कुर्वीति भावः । कीदृशैः । लज्जयालसैर्मन्दैः । कौतुकेन वलितैश्चलितैः । अथ मुकुलनेन मुग्धै रम्यैः । प्रीत्या स्निग्धैः । रूपदर्शनाद्भुतचिन्ताभ्यां निष्पन्दैरनिमेषैः । पुनः कोऽयं द्रष्टव्य इति विषादान्मन्दैरित्यर्थः । इयं विषादिनी दृष्टिः । यदाह ।

विषादविस्तीर्णपुटा पर्यस्तान्तानिमेषणी ।
किंचिन्निष्टब्धतारा च नार्या दृष्टिर्विषादिनी ॥

यद्वा । अलसं मन्दं यथा तथा वलितैः । इयं निर्विकारा दृष्टिः । यदाह ।

ललिताकुञ्चिता या च या च धीरावलोकिनी ।
निर्विकारा दृगिष्टा सा साध्व्येवाकारगुप्तिषु ॥

तथा प्रथमदर्शनापेक्षयाधुना विशेषदर्शनादधिकं विकसतान्तर्वि-स्मयेन स्मेरा मुग्धा तारा येषां तैः । इयं दृष्टिः स्निग्धा । यदाह ।

किंचित्सहासेव सविस्मयेव सभ्रूसमुत्क्षेपकटाक्षयुक्ता ।
स्निग्धा निकामं प्रमदैवनिष्ठा शृङ्गारजा दृष्टिरिह प्रदिष्टा ।

यद्वा । कटाक्षैर्मम हृदयमपहृतमित्यनेन प्रीतिरुक्ता । अन्यस्यापि चक्षुष्प्रीतिहेतोर्मनोहरत्वं भवत्येव । अपविद्धमित्यनेन चित्तासङ्ग उक्तः ।

२६०. अपि विद्धं for अपविद्धं B.; नु for च B. (?). After उन्मूलितं च Bh. reads:

तद्वक्त्रं नयने च ते स्मितसुधासिक्तं च तद्वाचिकं
सा वेणी स भुजक्रमोऽतिसरलो लीलालसा सा गतिः ।
तन्वी सेति च सेति सेति सततं तद्ध्यानबद्धात्मनो
नो निद्रा न रतिर्न चापि विरतिः शून्यं मनो वर्तते ॥

एवमहं तु तस्याः सर्वाकारहृदयंगमायाः संभाव्यमानस्नेहरसेनाभिसंधिना विधेयीकृतोपि पारिप्लवत्वमात्मनोपनिह्नोतुकामः प्राक्प्रस्तुतस्य बकुलदाम्नो यथाकथंचिदवशेषं ग्रथितवानेव ।

अपव्यधेरत्यन्तासङ्गवाचित्वादिति भावः । पीतमात्मायत्ततां नीतम् । अनेन संकल्प उक्तः । मानसव्यापारस्यात्मवशत्वादिति भावः । उन्मूलितमित्यनेन विषयनिवृत्तिः सूचिता । अशरणमित्यनेन चित्तापहरणादिनिवारकाभाव उक्तः । नायिकाया निरवद्यरूपता च सूचिता । अलसेत्यनेन निद्रोद्भेदः । वलित इत्यनेन त्रपानाशः । मुग्धत्वेन मधुरता । स्निग्धत्वेन साभिलाषत्वम् । अभिलषणीयस्य स्नेहविषयत्वात् । निष्पन्दतया निकोचवैमुख्यम् । मन्दत्वेन सहर्षत्वम् । अधिकेत्यादिनान्तर्विकासिनी स्मेरतारा चेत्युक्तम् । एवं चालसवलितैरपहृतम् । योपि हि चौरादिः किंचिदपहरति स मन्दं मन्दं वलत इति भावः । मुग्धैः सहजरूपदर्शनातिमोहवद्भिः स्निग्धैर्मद्विषयस्नेहसूचकचेष्टावद्भिरपविद्धं क्षिप्तं पराभूतमिति यावत् ॥ विद्धक्षिप्तेरिताः समा इत्यमरः ॥ अनेन चेतसोनायत्तिर्दर्शिता । ननु चित्तावक्षेपनिवारकं तदनु[तदन्य?] ध्यानादिकं किमिति न कृतमत आह । निष्पन्दैर्विमुखैर्मन्दैर्मदेकविश्रान्तैश्च पीतं तदितरानुसंधानशून्यं कृतम् । तथा च नान्यविषयपरिशीलनकथेति भावः । अधिकेत्यादिनोन्मूलितम् । अनेन मनोनिग्रहाभावो मित्रोपदेशानवसरश्च सूचितः । इह पूर्वश्लोकेन नार्थपौनरुक्त्यम् । आलोकितावस्थाकटाक्षावस्थयोर्भेदात् । नायकस्य रसाक्षिप्तचित्तत्वाच्च ।

२६१-२६५ तथाविधभावदर्शनेन हृदयंगमत्वम् । संभाव्यते ।

२६१. Bh. N. O. om. एवं; च for तु O.; संभाव्यमाण for संभाव्यमान B.

२६२. संनिधिना for अभिसंधिना Bh. N. O.; विधीकृतोपि C. विषयीकृतोपि D. for विधेयीकृतोपि; पारिप्लवम् for पारिप्लवत्वम् N.; अपह्नोतु for अपनिह्नोतु Bh. N. O.

२६३. O. om. प्राक्; प्रस्तुत for प्रस्तुतस्य O.; च before बकुल° K2.; बकुलपुष्पदाम्नो B. Bh. K2. N. O.; अमुष्य दाम्नो C. for बकुलदाम्नो; धाम्नो for दाम्नो K1.; कथं कथंचिद् for यथाकथंचिद् O.

ततो मिलितवेत्रशस्त्रपाणिवर्षवरप्रायपुरुषपरिवारा गजवधूमा-
रुह्य नगरगामिनं मार्गमिन्दुवदनालंकृतवती ।　　२६५

तदा च ।　यान्त्या मुहुर्वलितकन्धरमाननं त-
　　दावृत्तवृन्तशतपत्त्रनिभं वहन्त्या ।
　　दिग्धोमृतेन च विषेण च पक्ष्मलाक्ष्या
　　गाढं निखात इव मे हृदये कटाक्षः ॥

---

अपदेपि प्रेम्णोनिष्टाशङ्कित्वादिति भावः । अभिसंधिरभिप्रायः । यथाक-
थंचिदिति । चेतसस्तदपहृतत्वादिति भावः । वर्षवराः क्लीबास्तत्प्राया-
स्तत्प्रधानाः । यद्वा ।

　　विनीताः सर्वसत्त्वाश्च क्लीबाश्चैव स्वभावतः ।
　　जात्या न दोषिणश्चैव ते वै वर्षवरा मताः ॥

इति परिभाषिता वर्षवराः । हस्तिनीसमारोहणादिना महावंशजत्वेन
मालत्या उत्तमस्त्रीत्वं सूचितम् । यद्वा । हस्तिनीसमारोहणेनात्युच्च-
यानतया दूरदर्शित्वं सूचितम् । तत्रापि मन्थरगतिसूचनाय हस्तिनी-
ग्रहणम् । हस्तिजातावपि स्त्रिया मन्थरगतिमत्त्वात् । एतदुभयं चिरं
माधवावलोकनायेति भावः ।

२६६–२६९　यान्त्येत्यादि । तया पक्ष्मलाक्ष्या यान्त्या मम
हृदये गाढं यथा तथा कटाक्षो निखात इव दत्त इव । तदा तदव-
लोकनं मम हृदये लग्नमिवेत्यर्थः । निखात इत्यनेन कटाक्षस्य

---

२६४. N. om. मिलित° ; °वेत्रधरवर्षवर° N.; वर्षधर for वर्षवर B. C. D.; N. om. पुरुष; परिवृतां B. Bh. C. परिवारां O. for परिवारा; करेणुकाम् for गजवधूम् O.

२६५. नगरमार्गं for नगरगामिनं मार्गम् B.

२६६. N. om. तदा च. तथा for तदा Bh.; हि for च B. C. O.

२७० ततः प्रभृति ।

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते ॥

---

दुःसहत्वमुक्तम् । कीदृश्या । तदाननं वहन्त्या । कीदृशम् । मुहुर्वलिता वक्रिता कन्धरा घाटा यत्र तत् । क्षणं क्षणं व्यावर्तमानम् । पश्यन्त्येत्यर्थः । आवृत्तवृन्तमावर्जितनालं यच्छतपत्त्रं पद्मं ततो निरतिशया भा दीप्तिर्यस्य तत् । तन्निभं तत्तुल्यमिति वा । वृन्तादारभ्यावर्तनेन पद्मविवर्तनसिद्धिः । कीदृशः । प्रथममानन्दहेतुतयामृतेन दिग्ध उपचितः पश्चाद्दर्शनानन्दविच्छेदाद्विषेण दिग्धः ।

२७०–२७४ ततः प्रभृति तस्मादारभ्य । परिच्छेदेत्यादि । विकारः कामजो भावोन्तर्जडयति मोहयति तापं च कुरुते व्यथयति । यदा तत्प्राप्तिचिन्ता तदा जडतेतरकार्याप्रतिपत्तिः । यदा च तद्व्यतिरेकचिन्ता तदा ताप इति कालभेदेन जाड्यतापयोर्न विरोधः । तदुभयजनकवस्तुनोभावमाशङ्क्याह । कोपि विशिष्यानिर्वचनीयः परिच्छेदमियत्तामतीतोतिक्रान्तो निर्वक्तुमशक्यश्च । यः पुनरस्मिञ्जन्मन्यनुभवपथं न गतवान् । अत एव परिच्छेत्तुं निर्वक्तुं चाशक्य इति भावः। सांप्रतं तदनुभवेन तद्रूपं किमिति न क्रियत इत्याशङ्क्याह । विवेकप्रध्वंसात्प्रशस्तज्ञानाभावादुपचितमहामोहेन गहनः संकटः । तदानीं विवेकाभाव इति भावः । अनेन जडता दर्शिता ।

---

२७१. °विषयाणाम् K2. करणानाम् N. for वचनानाम्.
२७२. °पदे for पथं O.
२७४. संतापयति (च) for तापं च कुरुते Bh.

अपि च । परिच्छेदव्यक्तिर्भवति न पुरःस्थेपि विषये  २७५
भवत्यभ्यस्तेपि स्मरणमतथाभावविरसम् ।
न संतापच्छेदो हिमसरसि वा चन्द्रमसि वा
मनो निष्ठाशून्यं भ्रमति च किमप्यालिखति च ॥

कल० । दिढं क्खु एसो कए वि अवहरिदो । अवि णाम मालदिज्जेव्व सा भवे । (क)  २८०

(क) दृढं खल्वेष कयाप्यपहृतः । अपि नाम मालत्येव सा भवेत् ।

२७५–२७८ परिच्छेदेत्यादि । संनिकृष्टेपि घटादौ परिच्छेदव्यक्तिर्निर्णयाभिव्यक्तिर्न भवति । घटादिकमपि निर्णेतुं न शक्नोमीत्यर्थः । अनेन बाह्येन्द्रियाणां विषयव्यावृत्तिरुक्ता । अभ्यस्तेपि वारं वारमनुभूतेपि स्मरणमतथाभावेन खण्डस्फुटिततया विरसं वैरस्यवत् । एतेन मनसोपटुत्वमुक्तम् । इयमनुस्मृत्यवस्था । विषयनिवृत्त्या संतापः शीतलसेवनादपि नापैतीत्याह । हिमसरसि शीतलसरोवरे चन्द्रमस्यमृतकराकिरणे वा मनःसंतापहानिः । चन्द्रमःपदं लक्षणया स्वकिरणमाह । इयमुद्वेगावस्था यदाह ।

आसने शयने वापि न तिष्ठति न तुष्यति ।
औत्सुक्यं च भवेन्नित्यमुद्वेगस्थान एव च ॥

निष्ठाशून्यं धैर्यरहितं मनो भ्रमति च स्वल्पत्वात् । किमपि मनोरथपथमालिखत्यालिङ्गति । अनेनोन्मादावस्थोक्ता ।

२७९–२८२ अपहृतो वशीकृतः । अपिः संभावनायाम् । नाम प्राकाश्ये । स्वगतमिति ।

२७६. °मयथा for °मतथा C. D. K. 2 O.; भावि for भाव K. 1.

२७९. दृढं for दिढं Bh.; खु for क्खु Bh. K1. K2. Or; कए विएसो O. अवहदो for अवहरिदो C. K1. K2.

२८०. मालदी A.O.; जेव A. ज्जेव Bh. O. जेव्व K1. K2. एव्व N. for ज्जेव्व; हवे for भवे N.

मक० । स्वगतम् । अहो अभिष्वङ्गः । तत्किं निषेधयामि सुहृदम् ।

अथवा । मा मूमुहत्खलु भवन्तमनन्यजन्मा
मा ते मलीमसविकारघना मतिर्भूत् ।
२८५ इत्यादि नन्विह निरर्थकमेव यस्मा-
त्कामश्च जृम्भितगुणो नवयौवनं च ॥

प्रकाशम् । अपि वयस्येन विदिते तदन्वयनामनी ।

माध० । सखे श्रूयताम् । अथ तस्याः करेणुकारोहणसमय

---

यत्तु श्राव्यं न सर्वस्य स्वगतं तदिहोच्यते ॥

इति भरतः । अभिष्वङ्ग आसक्तिरूपो मनःपराभवः ॥ आक्रोश-शापाभिभवेष्वभिष्वङ्गपदं विदुरिति शाश्वतः ॥

२८३-२८७ मा मूमुहदिति । अनन्यजन्मा कामः खल्वत्यर्थं मा मूमुहत् चित्तविप्लवसहितमजीजनदेवं च ते मतिर्मलीमसविकारेण कामजेन घना निबिडा मा भूदित्यादि निषेधवाक्यमिहानर्थकमेव । ननुपदमनन्वये । यतः कामो जृम्भितो वलयितो गुणो ज्या यस्य सः । जृम्भितगुण उपचितव्यापारो वा कामः । नवयौवनं च जृम्भि-तगुणम् । प्रकाशितरूपादिकमस्तीत्यर्थः । अतस्तत्पराधीनोयं न निषेद्धुं शक्य इत्यर्थः । प्रकाशमिति ।

यत्तु सर्वजनश्राव्यं प्रकाशं तदिहेष्यते ॥

इति भरतः । अन्वयो वंशः ।

२८८-२९५ करेणुका हस्तिनी । अन्यतमान्या ॥ स्वार्थे डतमप् ॥

---

२८१. महान् before अभिष्वङ्गः B. Bh.; अभिषङ्गः for अभिष्वङ्गः N. O.

२८५. यस्मिन् for यस्मात् C. N. O.

२८७. °नाम्नी K1.

२८८. ततः for अथ Bh. O.; करणकरेणुका Bh.

एव महतः सखीकदम्बकादन्यतमा वारयोषिद्विलम्ब्य बाल-
बकुलकुसुमावचयक्रमेण नेदीयसी भूत्वा प्रणम्य कुसुमापी- २९०
डव्याजेन मामेवमुक्तवती । महाभाग सुश्लिष्टगुणतया रमणीय
एष वः सुमनसां संनिवेशः कुतूहलिनी च नो भर्तृदारिका

---

यद्वा । एकपर्यायोयमव्युत्पन्न एवान्यतमशब्दः । वारयोषिद्गणिका ।
तस्या ईदृक्त्वादुपादानमिह । विलम्ब्यैकाकिनी भूत्वा । नेदीयसी
निकटस्था च भूत्वा । उभयत्र पुष्पत्रोटनक्रमेणेति योज्यम् । कुसु-
मापीडव्याजेन पुष्पदामच्छलेन । अभ्यर्थनाभङ्गभयेन च्छलेन मामा-
हेति भावः । अथ च कुसुमेनापीडयति कुसुमापीडः कामः । तद्व्या-
जेन मां प्रणम्येत्यर्थः । महाभाग महाभाग्य ॥ भागो भाग्यार्धयोर-
पीति विश्वः ॥ सुश्लिष्टगुणतया सुलग्नसूत्रत्वेन । संनिवेशो रचना-
भेदः । कुतूहलिनी पुष्पदाम्नि कौतुकवती । भर्तृदारिकेत्यनेन कन्या-
त्वाद्दर्शनौत्सुक्यमुक्तम् । यद्वा । भरतेन कन्याया विस्रम्भपात्रत्व-
स्वीकारादिह कन्यात्वेन तत्सूचनम् । अभिनवो लोकोत्तरो विचित्रो
बहुप्रकारः । कुसुमेषु पुष्पेषु व्यापारो रचनाप्रबन्धः । एतेन माल्य-
ग्रथनकुशलाद्भुतकौशलकुतूहलिनी सेत्युक्तम् । वैदग्ध्यस्य ग्रथनचा-
तुर्यस्य । कृतार्थना कृतप्रयोजनता । विदग्धप्रेयसीप्रशंसयेति भावः ।
फलतु सफलास्तु । विदग्धजनाय दानात् । सरस एवाम्लान एव
स्रक्संनिवेशः । महार्घतां बहुमूल्यताम् । पक्षे । वो युष्माकं संनि-

---

२८९. ततः before महतः Bh.; काचित्तत् N. ततः O. for महतः; सखी for सखी B. Bh. C.; कदम्बाद् for कदम्बकाद् B. C. O.; अन्या for अन्यतमा N.; C. K1. K2. N. om. बाल.

२९०. K1. K2. om. कुसुमावचय° —प्रणम्य; °मावचाय° O.

२९१. अभिहितवती for उक्तवती O.; महानुभाव for महाभाग C. O.

२९२. N. om. वः सुमनसां; संनिवेशः सुमनसां O.

वर्तते। तस्यामभिनवो विचित्रः कुसुमेषुव्यापारः। तद्भवतु कृतार्थता वैदग्ध्यस्य। फलतु निर्माणरमणीयता विधातुः। समासाद-
२९५ यतु सरस एष भर्तृदारिकायाः कण्ठावलम्बनमहार्घतामिति।

मक०। अहो वैदग्ध्यम्।

माध०। तया च मदनुयुक्तया समाख्यातमियममात्यभू-

---

वेशः संयोगः परस्परानुरूपादिना रमणीयः क्रीडार्होर्हणीय एव। इह व इति युष्मदो गुरावेकेषामिति गौरवे बहुवचनम्। कुतूहलिनी दूतसमाजे साकाङ्क्षा। अभिनवोभूतपूर्वः। त्वदेकासक्तत्वात्। विचित्रः साधुः। विविधविकारकारित्वेनाश्चर्यजनको वा। कुसुमेषोः कामस्य व्यापारो मोहनम्। वैदग्ध्यस्य सकलकलाभिज्ञतायाः सार्थकत्वम्। विदग्धप्रीतिजनकत्वात्। निर्माणरमणीयता घटनसौन्दर्यम्। फलतु। अनुरूपजनसंसर्गात्। नो चेदिदं सर्वं व्यर्थमिति भावः। सरसः शृङ्गारोनुरागो वा। कण्ठावलम्बनमालिङ्गनं महार्घता दुर्लभत्वम्। तदिह श्लिष्टपदेन नायकव्युत्पत्तिमभिप्रायं च ज्ञात्वा दूतीव्यापारः प्रसरतीति ध्वनितम्।

२९६-९९ वैदग्ध्यं श्लिष्टपदप्रयोगादिति भावः। अनुयुक्तया

---

२९३. B. om. वर्तते; च after वर्तते O.; तस्याः for तस्याम् B. C.

२९४. अस्य after कृतार्थता N.; B. Bh. C. insert च after फलतु; गुणनिर्माणं रमणीयतायाः B. निर्माणं रमणीयतायाः N. सरसनिर्माणरमणीयता O. for निर्माणरमणीयता; B. N. om. विधातुः; अस्याः for विधातुः O.; आसादयतु for समासादयतु A. D. K1. K2.

२९५. O. om. सरस एष; एव for एष Com.; नो after एष N.; दारिकायां A.; कण्ठालम्बन° for कण्ठावलम्बन K1. K2.; °महार्घ्यतामिति A.; अर्हति दातुं भवान् after इति O.

२९७. अभियुक्तया for अनुयुक्तया Bh. °युक्तयाख्यातं for °युक्तया समाख्यातं Bh. N. O.

रिवसोः प्रसूतिर्मालती नामाहं च प्रसादभूमिर्भर्तृदारिकाया धात्रेयिका लवङ्गिका नामेति ।

कल० । सहर्षम् । किं णाम मालदि त्ति । दिट्ठिआ विलसिदं १०० क्खु भअवदा देवेण कुसुमाउहेण । जिदं अह्मेहिं । (क)

मक० । अमात्यभूरिवसोरात्मजेत्यपर्याप्तिर्बहुमानस्य । अपि च । मालती मालतीति मोदते भगवती कामन्दकी । स्वगतम् । तां च किल राजा नन्दनाय प्रार्थयत इति किंवदन्ती श्रूयते ।

---

(क) किं नाम मालतीति । दिष्ट्या विलसितं खलु भगवता देवेन कुसुमायुधेन । जितमस्माभिः ।

---

पृष्टया । प्रसूतिरपत्यम् । प्रसादभूमिर्विश्वासस्थानं तस्याः । तव च प्रसादभूमिरनुकम्पापात्रं मालादानात् ।

३००–३०२ अत्र विलसितं विजृम्भितम् । अनयोरन्योन्यानुरागादिति भावः । बहुमानस्य गौरवस्यापर्याप्तिरनवधिकत्वम् । अनभियोज्यत्वरक्षणत्वादियोगादिति भावः ।

---

२९८. एकापत्यरत्नं for प्रसूतिः N.; नाम मालती for मालती नाम K2.; इति after नाम N.; भर्तृदारिकायाः प्रसादभूमिः Bh. O.

२९९. धात्रेयी for धात्रेयिका N.; Bh. om. इति.

३००. N. om. सहर्षम्; नाम for णाम O.; मालदी A.; दिठ्ठिआ K1. दिट्ठिअं N. दिट्ठिया O. for दिट्ठिआ; जिदं for विलसिदं N.

३०१. N. O. om. क्खु; K1. om. क्खु भअवदा; खु for क्खु Bh. K2.; भयवदा for भअवदा O.; देवेन for देवेण K2. O; देवेण भअवदा N.; ता before जिदं A. D. K2.; इति नृत्यति after अम्हेहिं C.

३०३. C. D. om. one मालती; हि after मोदते O.; A. B. Bh. C. D. K1. K2. O. om. स्वगतम्.

३०४. याचते for प्रार्थयते N. प्रकाशम् । ततस्ततः after श्रूयते N.

३०५ माध० । तया चाहमनुरुध्यमानस्तां बकुलमालामात्मनः कण्ठादवतार्य दत्तवान् । असौ पुनरभिनिविष्टया दृशा मालतीमुखावलोकनविहस्ततया विषमविरचितैकभागान्तामेव बहु मन्यमाना महानयं प्रसाद इति गृहीतवती । अनन्तरं च यात्राभङ्गप्रचलितस्य महतः पौरजनस्य संकुलेन विघटितायां
३१० तस्यामागतोस्मि ।

मक० । वयस्य मालत्या अपि स्नेहदर्शनात्सुश्लिष्टमेतत् । योपि हि कपोलपाण्डुतादिचिह्नसूचितः प्राक्प्रवृद्धस्तस्याः का-

---

३०५-३०८ अनुरुध्यमानो मुहुर्याच्यमानः । असौ लवङ्गिका । अभिनिविष्टयातियत्ननिवेशितया । विहस्ततया व्याकुलतया । महानयं प्रसाद इति । यतो न वस्तुनि प्रेम किं तु गुणेष्विति भावः ।

३११-३१८ सुश्लिष्टं निश्चितम् । दृष्टपूर्वः पूर्वं दृष्टः । तादृश्यो महाकुलजाः । चक्षूरागानुरागयोरेकविषयत्वं भरतमतम् । अन्यदन्य-

---

३०५. तथा for तया K1. P. ; अभ्यर्थ्यमानः A. Bh. C. K1. अनुयाच्यमानः N. अनुबध्यमानः O. for अनुरुध्यमानः.

३०६. अवतीर्य for अवतार्य N.

३०७. °विहस्ततविषमरचितैकभागामपि for °विहस्त—°मेव N. ; °भागां तामेव for भागान्तामेव K2.

३०८. महाप्रसादः for महानयं प्रसादः B. ; व्याहृत्य after इति A. Bh. ; तां before गृहीतवती B. ; प्रति before गृहीतवती B. C.

३०९. प्रसङ्ग for भङ्ग N. O. ; चलितस्य for प्रचलितस्य O. ; महा- for महतः N. ; पौरनैगमजनस्य K2. पौराङ्गनाजनस्य Bh. C. for पौरजनस्य ; संकुलाकुलेन B. Bh. C. ; संकुले N. संकुल O. for संकुलेन ; विघट्टितायाम् for विघटितायाम् O.

३१०. अहम् after तस्याम् O.

३११. मालत्यामपि for मालत्या अपि K1. K2.

३१२. K1. om. अपि ; N. om. हि ; B. om. कपोल ; A. om. चिह्न ; °चिह्नः for °चिह्न Bh. ; प्राक्प्रबन्धः B. Bh. N. प्राक्प्रवृत्तः K2. for प्राक्प्रवृद्धः.

माभिष्वङ्गः सोपि त्वन्निबन्धन इति व्यक्तमेतत् । एतत्तु न ज्ञायते क्व दृष्टपूर्वस्तया वयस्य इति । न खलु तादृश्यो महाभागधेयाः कुमार्योन्यत्रासक्तचेतसो भूत्वापरत्र चक्षूरागिण्यो भवन्ति । अपि च । ३१५

अन्योन्यसंभिन्नदृशां सखीनां तस्यास्त्वयि प्रागनुरागचिह्नम् ।
कस्यापि कोपीति निवेदितं च धात्रेयिकायाश्चतुरं वचश्च ॥

कल० । उपसृत्य । एदं च । (क) इति चित्रफलकं दर्शयति । उभौ पश्यतः । ३२०

मक० । कलहंसक केनैतन्माधवस्य प्रतिच्छन्दकमभिलिखितम् ।

---

(क) इदं च ।

---

नुरागचिह्नमाह । अन्योन्येत्यादि । त्वयि तस्याः प्रागनुरागचिह्नं व्यक्तमेवास्ति । कथम् । सखीनामन्योन्यसंगतदृशां कस्यापि कोपीति निवेदनमेकम् । कथमन्यथा सखीजनस्त्वां वीक्ष्य कटाक्षयति तां कथं वा सखीजनो वदत्येवमिति भावः । अपरं लवङ्गिकाया व्युत्पन्नं वचनम् । कथमन्यथा कुतूहलिनीत्यादि वदतीयमिति भावः ॥ संगते दारिते भिन्न इति विश्वः ॥

---

३१३. °भिषङ्गः for °भिष्वङ्गः N.; अभिव्यक्तम् for व्यक्तम् A.; एव before एतत् A. D. K1.

३१४. दृष्टः for दृष्टपूर्वः Bh. C.; हि for खलु C.

३१५. N. om. कुमार्यः; मनसो for चेतसो A. D. K1. K2; C. om. भूत्वा; अन्यत्र for अपरत्र A. D. K1. K2; चानुरागिण्यो for चक्षूरागिण्यो O.

३१७ लिङ्गम् for चिह्नम् A. D. K1.

३१८. कोप्येष इतीहितं च for कोपीति निवेदितं च N.

३१९. इदं for एदं O.; चित्तफलअं A. C. चित्तं B. D. अ N. चित्तफलयं O. for च; Bh. K1. K2. om. इति; O. om. इति चित्रफलकम्; चित्रं for चित्रफलकं B. N.; प्रदर्शयति for दर्शयति K1. K2.

३२१. कलहंस for कलहंसक K1. K2. N.; बिम्बमभिलिखितं माधवस्य for माध० खितम् O.; माधव for माधवस्य B.; प्रतिबिम्बम् A.K1.K2. रूपम् N. for प्रतिच्छन्दकम्.

कल० । जेण जेव्व से हिअअं अवहरिदं । (क)

मक० । अपि मालत्या ।

३२९ कल० । अध इं । (ख)

माध० । वयस्य मकरन्द प्रसन्नप्रायस्ते वितर्कः ।

मक० । कलहंसक कुतोस्याधिगमः ।

कल० । मम दाव मन्दारिआहत्थादो ताए वि लवङ्गिआसआसादो । (ग)

३३० मक० । अथ किमाह मन्दारिका माधवालेख्यप्रयोजनं मालत्याः ।

---

( क ) येनैवास्य हृदयमपहृतम् ।

( ख ) अथ किम् ।

( ग ) मम तावन्मन्दारिकाहस्तात्तस्या अपि लवङ्गिकासकाशात् ।

---

३२३–३२७ अत्र येन जनेनापहृतं यन्निबन्धनोस्य कामविकार इति भावः । मालत्या लिखितमित्यर्थः । अथ किं स्वीकारे । वितर्क ऊहः । अधिगमः प्राप्तिः ।

---

३२३. जेणं for जेण Bh. ; एव्व N. ज्जेव O. for जेव्व ; जेणेव्व for जेण जेव्व K2. ; हिययं for हिअअं O. ; अवहदं for अवहरिदं Bh.

३२५ अथ K2. अह N. O. for अध.

३२६. तर्कः for वितर्कः B. N.

३२७. B. N. om. कलहंसक ; कलहंस for कलहंसक K2. ; सत्यं before कुतो B. O.

३२८. मह N. मए A. B. Bh. C. D. K1. K2. for मम ; B. Bh. C. om. दाव; मन्दारिआए for मन्दारिआ A. C. D. K1. K2. ; हच्छातो for हत्थादो K1. ; तए for ताए Bh. ; B. N. O. om. वि.

३२९. लवङ्गिआए for लवङ्गिआ° K2.

३३०. °वालेख्येन for °वालेख्य N.

कल० । उक्कण्ठाविणोदो त्ति । (ख)

मक० । वयस्य माधव सर्वथा समाश्वसिहि ।

या कौमुदी नयनयोर्भवतः सुजन्मा

तस्या भवानपि मनोरथबन्धबन्धुः । १३५

तत्संगमं प्रति सखे न हि संशयोऽस्ति

यस्मिन्विधिश्च मदनश्च कृताभियोगः ॥

द्रष्टव्यस्वरूपा च भवतो विकारहेतुस्तदत्रैव लिख्यतां मालती ।

माध० । यदभिरुचितं वयस्याय । तदुपनय चित्रफलकं १४० चित्रवर्तिकाश्च । मकरन्द उपनयति ।

---

(ख) उत्कण्ठाविनोद इति ।

---

१३२-१४० उत्कण्ठाविनोद इति । माधवानुरक्ता मालती तमननुप्राप्तवती चित्रलिखितालोकनेनापि रमत इति भावः । येत्यादि । हे सखे तत्संगमं प्रति नैव संशयोऽस्ति । भवतो नयनयोर्या कौमुदी ज्योत्स्ना । आनन्दकारित्वात् । तस्या मनोरथबन्धबन्धुरभिलाषनिबन्धनाय प्रियः शोभनजन्मा भवानपि । ननु परस्परानुरागेऽपि त्रिधिकामवैमुख्यान्न सिद्धिरत आह । यस्मिन्संगमे विधिमदनौ कृतप्रयत्नौ चक्षुष्प्रीत्या काम एतद्देशानयनाद्विधिः कृताभियोग इत्यर्थः । अभियोगाच्च कन्यालाभः । यदाह ।

---

१३२. उत्कण्ठा° for उक्कण्ठा° K2; बिणोअणं for विणोदो N.

१३३. N. om. माधव.

१३५. लब्ध for बन्ध noticed in marg. of O.

१३७. धृताभियोगः K1. K2. कृताभियोगौ B.

१३८. इष्टव्य for द्रष्टव्य K1.; °रूपा for °स्वरूपा Bh. K1. K2. N. O.; O. om. च; तत्रभवतो B. अत्रभवतो O. for भवतो; अभिलिख्यताम् for लिख्यताम् O.

१३९. N. om. मालती.

१४०. अभिमतं for अभिरुचितं B.; कलहंसक after वयस्याय D.; Bh. C. N. O. om. तदु°— °नयति; उपनमय for उपनय K2.

१४१. °वर्तिश्च for °वर्तिकाश्च B.; उपनमयति for उपनयति K2.

माध० । लिखन् । सखे मकरन्द

वारं वारं तिरयति दृशोरुद्गमं बाष्पपूर-
स्तत्संकल्पोपहितजडिम स्तम्भमभ्येति गात्रम् ।
३४५ सद्यः स्विद्यन्नयमविरतोत्कम्पलोलाङ्गुलीकः
पाणिर्लेखाविधिषु नितरां वर्तते किं करोमि ॥

---

अभियोगाद्धि कन्याया लाभो निश्चित एव च ॥

चित्रेण माधवचित्तानुरागमुद्दीपयति । द्रष्टव्येति ॥ वयस्यायेत्यत्र रुच्यर्थानां प्रीयमाण इति संप्रदानता ॥

३४३-३४६ अधुना मनःसङ्गे हर्षात्सात्त्विकभावमाह । वारं वारमित्यादि । अयं मम पाणिर्लेखाविधिषु चित्रनिर्माणेषु नितरामत्यर्थं वर्तत एव न तु लिखति । अत्र किं करोमि । यथा तथा लिखामीत्यर्थः । न तरामिति पाठे नैव वर्तत इत्यर्थः। यतो बाष्पपूरस्तदनुध्यानादानन्दाश्रुप्रवाहो वारं वारं दृशोरुद्गमं प्रचारं तिरयति च्छादयति । तस्याः संकल्पेन चिन्तनेनोपहितो जडिमा सर्वकार्याप्रतिपत्तिर्यस्य तद्गात्रं शरीरं स्तम्भं निश्चलत्वमभ्येति ।

हर्षभयरोगविस्मयविषादमददोषसंभवः स्तम्भः ॥

इति भरतः। कीदृशः। सद्यो लिखनोपक्रमकाल एव स्विद्यन्नार्द्रीभवन्। अविरतोत्कम्पेनाधिकचलनेन लोलाङ्गुली यत्र सः। अङ्गुल्या लिखनहेतुतया तच्चापल्यादलिखनं सूचितम् । तदिहाश्रुस्तम्भस्वेदकम्पा उक्ताः । रोमाञ्चादिकं च नोक्तम् । तेषां लिखनाप्रतिकूलत्वात् । सर्वमिदं सात्त्विकं हर्षात् । यदाह ।

---

३४२. Bh. om. माध० ।; इति विलिखन् for लिखन् Bh.
३४३. दृशावुद्गतौ for दृशोरुद्गमं D. N. O.
३४४. उपनत for उपहित N.
३४५. अविरलो° for अविरतो° C. D. K1. K2.
३४६. °लिपिषु for विधिषु K1. K2.; न तरां for नितरां noticed by Com.

तथापि व्यवसितोस्मि । चिरादालिख्य दर्शयति ।

मक० । विलोक्य । उपपन्नस्तावदत्रभवतोभिष्वङ्गः । सकौतुकम् ।

कथमचिरेणैव निर्माय लिखितः श्लोकः । वाचयति । १५०

जगति जयिनस्ते ते भावा नवेन्दुकलादयः
प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये ।

---

क्रोधभयहर्षलज्जादुःखश्रमरोगतापपीडाभ्यः ।
व्यायामसाध्वसादेः स्वेदः स्यात्पीडनेनापि ॥
शीतभयहर्षरोधस्पर्शजरारोगजः कम्पः ॥ इति ।

३५१-३५४ अधुना मालतीं चित्रं द्रक्ष्यतीति सानुरागोपालम्भं श्लोकं लिखति । जगतीत्यादि । ते ते नवेन्दुकलादयो भावाः पदार्था जयिनो मदजनने सर्वत्राप्रतिहताः स्वभावतो मनोज्ञा अन्ये सन्त्येव ये मनो मदयन्ति । मम पुनर्न मदहेतवः प्रत्युत दाहहेतव एवेति भावः । अत्र जयिन इत्यनेन कालविशेषे देशविशेषे च जयशालिन आनन्दसंदोहदा इत्युक्तम् । भाव्यन्ते भावनामर्हन्ति सुन्दरतयेति भावाः । मालतीभिन्नाः सहृदयहृदयाह्लादकाः । ते त इति वीप्सया चन्द्रादयो देवादयश्च प्रसिद्धा एवेति दर्शितम् । सर्वनाम्ना च ये यत्र चेतःप्रतिष्ठास्ते तत्र गृह्यन्त इति ध्वनितम् । तुशब्देनान्येषां तथात्वं तत्संप्रतिपत्तिद्वारेत्युक्तम् । कस्तर्हि मदहेतुरत आह । मम पुनरियं चित्रलिखिता मालती नयनयोर्ज्योत्स्ना यन्नेत्रगोचरं प्राप्ता स एवैकोत्र जन्मनि महोत्सवः । अत्र किं पुनः संभोगादिकमित्यनुरागः । स एव महोत्सवः । अनुरागो भवतु मा वा भूदित्युपालम्भः । एतेनात्यन्तानुरागो मालत्यां दर्शितः । एकपदेनान्येषामाविर्भावेपि नानन्दकत्वम् ।

---

३४७. अवहितोस्मि for व्यवसितोस्मि N.; अभिलिख्य for आलिख्य A. D. K1. K2. O.; प्रदर्शयति for दर्शयति A. D. K1. K2.

३४८. Bh. N. om. विलोक्य ; अभिषङ्गः for अभिष्वङ्गः N.

३५०. रचितः Bh. लिखितम् N. for लिखितः ; श्लोकोपि लिखितः for लिखितः श्लोकः C. ; N. om. श्लोकः. K1. N. om. वाचयति.

मम तु यदियं याता लोके विलोचनचन्द्रिका
नयनविषयं जन्मन्येकः स एव महोत्सवः ॥

१५९ प्रविश्य सत्वरं मन्दारिका । कलहंसअ पआणुसारेण उवलद्धोसि । माधवमकरन्दौ विलोक्य सलज्जम् । कधं एदे वि महाणुभावा इध ज्जेव्व । उपसृत्य । पणमामि । (क)

( क ) कलहंसक पदानुसारेणोपलब्धोसि । कथमेतावपि महानुभावाविहैव । प्रणमामि ।

अत एव स एवेत्यनेन तत्पोषः । जन्मनीति सामान्यनिर्देशेन समस्तजन्मनि मालतीतुल्या नास्तीति व्यज्यते । वाचिकोयं रसः । यदाह ।

रसानुरूपैरालापैः श्लोकैर्वाक्यैः पदैस्तथा ।
नानालंकारसंयुक्तैर्वाचिको रस उच्यते ॥ इति ।

इह प्रकृतिमधुरत्वेपि मालत्या एव मदजननाद्व्यतिरेकालंकारः । प्रियाख्यानात्प्रियोलंकारः । विलोचनचन्द्रिकेति रूपकम् । न चात्र नवेन्दुकला प्रतिपचन्द्रकला सा च न मदहेतुरिति वाच्यम् । यतो नूयत इति नवः । प्रशस्तेन्दुरित्यर्थः । यद्वा । नवं नूतनमिन्दुकलादिकं चेति द्वन्द्वः । यद्वा । नवः सागरादुत्थितमात्रः । पूर्ण एवेत्यर्थः ।

३५५–३५६ यत्र पटीक्षेपेण प्रवेशस्तत्र प्रविश्येत्युक्तिः । अनुसारोनुसरणम् । एते हि ये चित्रफलके लिखिताः । इह गौरवादेकत्वे बहुवचनम् । द्वित्वे वा बहुवचनम् ।

३५३. जाता for याता Bh.; मनोरथ° for विलोचन Bh.

३५५. K1. K2. om. सत्वरं; पटाक्षेपेण N. सत्वरा O. for सत्वरम्; कलहंसअ twice Bh. K1. K2. पोरअ N. कलहंसय twice O. for कलहंसअ; पादा K2. पाआ° B. Bh. पदा° A. K1. N. पया° O. for पआ°; Bh. C. N. O. om. उव; उअ for उव K1. K2.

३५६. N. om. माधवमकरन्दौ; दृष्ट्वा for विलोक्य A. K1. K2.; सहर्षम् for लज्जम् N.; कहं for कधं N. O.; एते K2. ते for एदे K1. O.

३५७. महाणुभाआ K1. K2. महाभाआ N. for महाणुभावा; इह B. D. O. इद K2. एत्थ N. for इध; ज्जेव Bh. O. जेव्व A. B. C. D. एव्व N. for ज्जेव्व; N. om. उपसृत्य; प्रणमति A. K1. K2. N. प्पणममि O. for पणमामि.

* Com. uses the Plur.

उभौ । मन्दारिके इत आस्यताम् ।

मन्दा० । उपविश्य । कलहंसअ उवणेहि मे चित्तफलअं । (क)

कल० । गृहीत्वा । गेह्ण एदं । (ख)　　३६०

मन्दा० । विलोक्य । कलहंसअ केण किंणिमित्तं वा एत्थ मालदी आलिहिदा । (ग)

कल० । जो ज्जेव्व जंणिमित्तं मालदीए । (घ)

मन्दा० । सहर्षम् । दिट्ठिआ दंसिदफलं दाणिं विण्णाणं पआवइणो । (ङ)　　३६५

---

(क) कलहंसक उपनय मे चित्रफलकम् ।

(ख) गृहाणैतत्* ।

(ग) कलहंसक केन किंनिमित्तं वात्र मालत्यालिखिता ।

(घ) य एव यन्निमित्तं मालत्या ।

(ङ) दिष्टया दर्शितफलमिदानीं विज्ञानं प्रजापतेः ।

---

३६३–३६७ अभिलिखित इति शेषः । तथा च मालत्या विनोदाय माधवो लिखितस्तेनापि सा तदर्थं लिखितेत्यर्थः । अत्र विज्ञानं शिल्पकौशलम् । अनुरूपानुरागादनयोरिति भावः । अवितथं सत्यम् ।

---

३५८. मक॰ for उभौ B. N.; इह for इत A. D. K1. K2.

३५९. कलहंसक Bh. कलहंस twice K1. K2. कलहंस N. कलहंसय O. for कलहंसअ; उपणेहि for उवणेहि K2.; मं for मे K2.; O. om. मे; फलहअं Bh. फलयं O.

३६०. C. om. एदं; इमं for एदं N. O; चित्त after एदं B.

३६१. गृहीत्वा before विलोक्य N.; निरूप्य for विलोक्य O.; N. om. कलहंसअ; कलहंसक for कलहंसअ O.; after केण A. D. K1. K2. add उण; कस्स for किं B.; किन्नमित्तं K2.; B. Bh. C. om. वा.

३६२. अहिलिहिदा D. N. लिहिदा O. for आलिहिदा.

३६३. K2. om. कल॰। जो—॰दीए; ज्जेव A. O. जेव K1. एव N. for ज्जेव्व.; B. Bh. D. K2. om. ज्जेव; जेण णिमित्तेण for जं णिमित्तं B. Bh. D. K2.

३६४. स्वगतम् after सहर्षम् O.; दिट्ठिआ K2. दिट्ठिअं N. दिट्ठिया O.; दंसिदं अत्तणो सफलं for दंसिदफलं दाणिं N.; णिअ before विण्णाणं B. Bh.; प्पया॰ for पआ॰ O.

३६५. पआवइणा for पआवइणो B. N.

* ॰णेदं चित्रफलकम् Com.

मक० । मन्दारिके यदत्र वस्तुन्येष ते वल्लभः कथयत्यपि तथा तत् ।

मन्दा० । महाभाअ अध इं । (क)

मक० । क्व पुनर्मालती माधवं प्राग्दृष्टवती ।

१७० मन्दा० । लवङ्गिआ भणादि वादाअणगदत्ति । (ख)

मक० । वयस्य नन्वमात्यभवनासन्नरथ्ययैव बहुशः संचरावहे तदुपपन्नमेतत् ।

मन्दा० । अणमण्णन्तु मं महाणुभाआ जाव एदं भअवदो देवस्स मअणस्स सुचरिदं पिअसहीए लवङ्गिआए णिवेदेमि । (ग)

---

(क) महाभाग अथ किम् ।

(ख) लवङ्गिका भणति वातायनगतेति ।

(ग) अनुमन्येतां मां महानुभावौ* यावदेतद्भगवतो देवस्य मदनस्य सुचरितं प्रियसख्या लवङ्गिकाया निवेदयामि ।

---

३६८ एवमेतन्मालत्यैव माधवप्रतिच्छन्दकं लिखितमित्यर्थः ।

३७० दृष्टवतीत्यर्थः ।

३७४–३७८ लवङ्गिकया द्वारा माधवानुरागो मालत्यामस्तिव-

---

३६६. सखि before मन्दारिके Bh. N.; अवितथं for अपि तथा D. Com.

३६७. तत्तथा for तथा तत् O.

३६८. महाभाय for महाभाअ O.; तह तह N. तधा O. for महा—इं.

३६९. K2. om. प्राग्.

३७० फणादि for भणादि N.; यदा K2. जधा O. before. वादा°; वादाअणं N. वादायण O. for वादाअण°; °गतत्ति K2. °गदेत्ति N. for °गदत्ति.

३७१. N. om. ननु; B. om. बहुशः.

३७२. एव before एतत् N.

३७३. °मण्णादु for °मण्णन्तु N. माहाभाआ B. महाणुभावो N. महाणुभाया O. for महाणुभाआ; एअं for एदं A. D. K1.; N. O. om. एदं; भयवदो for भअवदो O.

३७४. देअस्स D. K1. देव्वस्स A. for देवस्स; मयणस्स for मअणस्स O.; B. Bh. C. om. सु; सुचरिअं K2. आअरिदं N. for सुचरिदं; पिअसखीए K2. भयवदीए O. for पिअसहीए; लवङ्गी° K1.

* Com. uses the Plur.

मक० । प्राप्तावसरमेतद्भवत्याः । मन्दारिका चित्रफलकं गृहीत्वा निष्क्रान्ता । १७५

मक० । वयस्य खरतरकिरणोयं भगवान्सहस्रदीधितिरलंकरोति मध्यमह्नस्तदेहि संस्त्यायमेव गच्छावः । उत्थाय परिक्रामतः ।

माध० । एवं हि मन्ये । १८०

घर्माम्भोविसरविवर्तनैरिदानीं
मुग्धाक्ष्याः परिजनवारसुन्दरीणाम् ।

---

त्यर्थः संस्त्यायो गृहम् ॥ संस्त्यायः संनिवेशे च संघातेपि च दृश्यत इति मेदिनीकरः ॥

३८१–३८४ घर्मेत्यादि । मालत्याः परिजनवारसुन्दरीणां कपोलकुङ्कुमानि प्रातर्विरचितविचित्रपत्त्रावलीवैदग्ध्यं यत्तदधुना मध्याह्ने जहति त्यजन्ति । कैः । घर्माम्भसो विसरस्य समूहस्य विवर्तनैर्विविधजलकणैः करणैः । अनेन नायिकायाः सुकुमारतया निःसहत्वमुक्तम् । मालत्याः कन्यात्वेन पत्त्रावल्यभावात्परिजनेत्युक्तम् । माङ्गल्यतया प्रातरेव कुङ्कुमेन पत्त्रावलीलिखनम् । अत एव वसन्तकालस्य शीतत्वात्कुङ्कुमेन भूषाकरणमिति मतमपास्तम् । धारासिक्तवसुंधरासुरभय

---

३७५. चित्रं B. चित्रभाण्डं D. K1. K2. for चित्रफलकं.

३७६. उत्थाय before निष्क्रान्ता C. O.; निर्गता for निष्क्रान्ता K2.

३७७. K1. om. वयस्य; मध्याह्नो वर्तते for खरतर—मह्नः N. O.; खर° for खरतर° B. Bh.; K1. K2. om. अयं.

३७८. संस्त्यायनम् B. Bh. संस्त्ययम् O. for संस्त्यायम्; प्रविशावः for गच्छावः N. O.; इति before उत्थाय A. C. D. K1.

३७९. °क्रामन्ति for °क्रामतः O.

३८०. K1. om. हि.

३८२. परिसर° for परिजन° K1.; °सुन्दरीभिः C. K1. K2. O.

तस्यार्तविहितविचित्रपत्त्रलेखा-
वैदग्ध्यं जहति कपोलकुङ्कुमानि ॥

१८५ अपि च । उन्मीलन्मुकुलकरालकुन्दकोश-
प्रश्च्योतद्घनमकरन्दगन्धबन्धो ।
तामीषत्प्रचलविलोचनां नताङ्गी-
मालिङ्गन्पवन मम स्पृशाङ्गमङ्गम् ॥

---

इत्यभिधानाद्वर्षाकालप्रस्तावात् ॥ समूहनिवहव्यूहसंदोहविसरव्रजा इत्यमरः ॥ इहोन्मादावस्था । अत एवात्र तत्संबद्धा कथा । यदाह ।
तत्संबद्धां कथां युङ्क्ते सर्वावस्थागतामिह । इति ।

३८५-३८८ उन्मीलदिति । हे पवन । उन्मीलन्मुकुलेन विकचकोरकेण करालाद्विषमात्कुन्दगुच्छात्क्षरन्निबिडमकरन्दश्च गन्धश्च तयोर्बन्धो । मकरन्दस्य यो गन्धस्तद्बन्धो तत्सहचरेति वा । ईदृशोपि त्वं मे न सुखाय किं तु तापायातस्तां मालतीमीषदालिङ्गन्ममाङ्गमङ्गं प्रत्यङ्गं स्पृश । अमृतमयतदङ्गसङ्गशीतस्त्वं मम तापशान्तये भविष्यसीति भावः । यद्वा । तदीयतापशान्तिर्भवत्वित्यनुरागात्तामालिङ्गन्नित्युक्तम् । तां कीदृशीम् । प्रचलनेत्राम् । विरहे पवनस्य दुःसहत्वेन भयादितस्ततः क्षिप्तनेत्राम् । अत एव नम्रीभवदङ्गां च । इह विषमकुन्दकोशसंचरणेन गतिप्रतिबन्धान्मान्द्यं मकरन्दसङ्गाच्छैत्यं गन्धबन्धुतया सौगन्ध्यं च वायोरुक्तम् । [ ईषदालिङ्गन्नित्यनेन सुरभिपदेनाभिघातनिःसहत्वं मालत्यामुक्तम् ] ॥ करालो दन्तुरे तुङ्ग इत्यमरः ॥

---

३८३. °रेखा for °लेखा N.
३८४. °कुण्डलानि for कुङ्कुमानि C.
३८५. °कोषात् Bh. °गुच्छ° K2. for °कोश°.
३८६. प्रच्योतद् K1. K2. N. प्रश्चोतद् Bh. O. for प्रश्च्योतद् ; °वन for घन K1.
३८७. °ललित for °प्रचल B ; °प्रचलितलोचनाम् O.

मक॰। स्वगतम् ।

अभिहन्ति हन्त कथमेष माधवं　　१९०
सुकुमारकायमनवग्रहः स्मरः ।
अचिरेण वैकृतविवर्तदारुणः
कलभं कठोर इव कूटपाकलः ॥

तदत्र भगवती कामन्दकी नः शरणम् ।

---

३८९-३९४ माधवस्यानङ्गदुःसहत्वमाह । अभिहन्तीत्यादि । एष स्मरोऽनवग्रहः प्रतिरोधशून्यः कोमलकायं माधवं कथमचिरेणैवाभिहन्ति । हन्तानुकम्पायाम् ॥ हन्त हर्षेऽनुकम्पायामित्यमरः ॥ कीदृशः । विकृतस्य भावो वैकृतं तस्य विवर्तोऽन्यथावस्थानं तेन दारुणो दुःखदः । यथा कलभं करिबालकं मृदुकायं कठोरो दुःसहः कूटपाकलो हस्तिवातज्वरोऽचिरेण हन्ति तथेत्यर्थः । सोऽप्यनवग्रहोऽप्रतिकरणीयो विकृतिविवर्तदारुणश्च भवति ।

गजं वातज्वरो हन्ति तथा वै कूटपाकलः ॥

इति वैद्यकम् । इदं स्वगतम् । स्वयमनध्यवसायादाह तदत्रेति । अत एव भगवती ज्ञानसंपन्नेह शरणं रक्षिका । द्वितीयाङ्कावतारोऽयम् । यदाह ।

अङ्कावसाने यत्रैव भाविनोऽङ्कस्य सूच्यते ।
वस्तुबीजमुपोद्घातैः सोऽङ्कावतार इष्यते ॥

---

१८९. Kl. om. मक॰ ; all but C. N. om. स्वगतम्,
१९१. विवर्ण for विवर्त B.
१९३. पालकः for पाकलः B. C.
१९४. तदश्रभवती Bh. K2. O. तत्रभवती N. for तदत्र भगवती.

१९५ माध० । स्वगतम् । आश्चर्यम् ।

पश्यामि तामित इतः पुरतश्च पश्चा-
दन्तर्बहिः परित एव विवर्तमानाम् ।
उद्बुद्धमुग्धकनकाब्जनिभं वहन्ती-
मासक्ततिर्यगपवर्तितदृष्टि वक्त्रम् ॥

---

३९५-३९९ इदानीमुन्मादावस्थोद्भावनाबलात्तन्मयत्वमाह । पश्यामीत्यादि । तामेकामेव विवर्तमानां प्रपञ्चरूपां परितः सर्वत्र पश्यामीत्याश्चर्यम् । विवर्तमानत्वमेवाह । इत इत उभयपार्श्वे । पुरतोऽग्रे । पश्चात्पृष्ठे । अन्तर्मनसि । बहिस्त्वग्भागे । अनेन तदावेशात्सर्वत्र तन्मयत्वमुक्तम् । यदाह ।

यो येन भावेनाविष्टः सुखदेनेतरेण वा ।
स तदाहितसंस्कारः सर्वं पश्यति तन्मयम् ॥

परित इत्यत्र पर्यभिभ्यां चेति तसिः ॥ कीदृशीम् । वक्त्रं वहन्तीम् । उद्बुद्धं विकसितं मुग्धं कान्तं यत्सुवर्णपद्मं ततो निरतिशया भा दीप्तिर्यस्य तत् । तन्निभं तत्तुल्यमिति वा । एतेन गौरीत्वमुक्तम् । आसक्तेन मय्यासक्त्या तिर्यगपवर्तिता दृष्टिर्यस्य तत् । यथा यान्त्या तयाहं दृष्टस्तथैव तां पश्यामीति भावः ।

---

३९५. आत्मगतम् for स्वगतम् N.; N. om. आश्चर्यम्.

३९६. इतश्च परश्च B. इतश्च पुरश्च K2. N. for इतः पुरतश्च; पारितश्च for पुरतश्च O.

३९७. बहिश्च परितश्च for बहिः परित एव B.; पुरत for परित O.; च वर्तमानाम् for विवर्तमानाम् Bh. C. N.

३९८. वहन्तम् for वहन्तीम् K1.

३९९. °मासङ्ग° N. °मासङ्गि O. for °मासक्त°; °वर्जित for °वर्तित B.

प्रकाशम् । वयस्य मम हि संप्रति ४००

प्रसरति परिमाथी कोऽप्ययं देहदाह-
स्तिरयति करणानां ग्राहकत्वं प्रमोहः ।

---

४००-४०६ अधुना सर्वाकारेण पीडामाह । प्रसरतीत्यादि । मां पश्य संप्रति मम कोऽप्यनिर्वचनीयस्वरूपो देहदाहः प्रसरति व्याप्नोति । अत एव परिमाथी सर्वतो मथनशीलः । करणानामिन्द्रियाणां ग्राहकत्वं मे प्रमोहस्तिरयति पिदधाति । सर्वेन्द्रियसंमोहो ममेत्यर्थः । मम गात्रं शरीरम् ॥ कर्तृ ॥ रणरणकस्य वियोगतरोर्वृद्धिमुपचयं बिभ्रदावर्ति भ्राम्यदस्ति । यद्वा । रणरणकः कामस्तस्य विवृद्धिमधिकाधिकदशागामित्वम् ॥ मारो रणरणः कामो विषय इत्युत्पलिनी ॥ तथा मम हृदयम् ॥ कर्तृ ॥ अन्तर्दहति ज्वलतीत्यर्थः । तन्मयत्वं मालतीमयत्वं च धत्ते । ईदृशी मम दशा सद्य एव विपत्तिमादधाति । तदत्र यथावत्त्वमाचरेति भावः । अत्रावर्तीति व्याधिः । ज्वलतीत्युद्वेगः । तन्मयत्वमित्युन्मादः । हृदयस्य तु तन्मयत्वधारणेन दुःसहदशायामपि जीवनाशा दर्शिता ॥ करणं क्षेत्रगात्रेन्द्रियेष्वपीत्यमरः ॥ निष्क्रान्ता इति । बीजार्थं युक्तं कृत्वा निष्क्रमो भवति । यदाह ।

बीजार्थं युक्तियुक्तं च कृत्वा कार्यं यथारसम् ।
निष्क्रमं तत्र कुर्वीत सर्वेषां रङ्गवर्तिनाम् ॥ इति ।

बकुलवीथीति ।

नानारससमायुक्ता संधिद्वयविभूषिता ।
अर्थप्रकृतिभिः पूर्णा स्यादेकाङ्का तु वीथिका ॥

---

४०२. प्रमोदः for प्रमोहः B.

रणरणकविवृद्धिं बिभ्रदावर्तमानं
ज्वलति हृदयमन्तस्तन्मयत्वं च धत्ते ॥

४०९ इति निष्क्रान्ताः सर्वे ।

॥ इति बकुलवीथी नाम प्रथमोऽङ्कः ॥

---

त्रिभिः पात्रैः प्रयोज्येयमुत्तमाधममध्यमैः ।
कर्तव्या नायिका चात्र शृङ्गारद्वयसंयुता ॥

इति भरतः ॥

प्रासूत यं रत्नधरो गुणाढ्यो गुणाढ्यरूपा दमयन्तिका च ।
जगद्धरं तत्कृतटिप्पणेऽङ्को गतोयमाद्यो रसराजराजी ॥

॥ इति प्रथमोऽङ्कः ॥

---

४०३. आवर्ति गात्रं for आवर्तमानं A. D. K2. and Com.
४०४. ज्वलित for ज्वलति Bh.
४०६. B. O. om. इति–नाम ; Bh. C. K1. K2. om. इति ; मालतीमाधवे before बकुल Bh. C.; श्रीमन्मालतीमाधवीयनाम्नि नाटके for बकु°—नाम N.; वेथी for °वीथी K2.

# द्वितीयोऽङ्कः ।

ततः प्रविशतश्चेटचौ ।

प्रथमा । हला संगीदसालापरिसरे अवलोइदादुदीआ तुमं किं मन्तअन्ती आसी । (क)

---

(क) हला संगीतशालापरिसरेऽवलोकिताद्वितीया त्वं किं मन्त्रयन्त्यासीः ।

---

अधुना बकुलमालामादाय लवङ्गिका गता तां प्रतीक्षमाणा मालती सौधारूढा तन्मार्गं पश्यति मकरन्दश्च कामन्दकी नः शरणमित्युक्त्वा तां प्रति तत्कथनाय गत इति स्थिते चेटचोः प्रवेशः । चेटीभाषा सौरसेनी । यदाह ।

नायिकायां च चेटचां च सौरसेनी प्रयुज्यते ।

न च नाटकप्रकरणयोरङ्काः कार्याः प्रत्यक्षनायका इति भरतादिह माधवप्रवेशाभावात्कथमङ्कावतार इति देश्यम् । मालत्या नायकत्वेन तत्सत्त्वात् । यदाह ।

गुरुः पुरोहितोमात्यो नायको नायिकापि च ।
सार्थवाह इति प्रोक्ताः षडेते नायका बुधैः ।। इति ।

२–१३ अत्र हला सखि । परिसरे निकटे । अत्र वृत्तान्तो वार्त्ता ।

---

१. च after प्रविशत: K1.

२. एका for प्रथमा Bh. K1. K2. N. O. ; सहि for हला D. K1. N. ; संगीअ K1. K2. संगीदअ Bh. संगीत O. for संगीद ; शाला for साला O.; °लोइआ K1. °लोयिता O. °लोकिआ K2. for °लोइदा ; °दुदिआ Bh. °दुदीया O. for °दुदीआ; किं तुमं K1. भवअदी किं वि N. for तुमं किं ; K2. om. तुमं.

३. किम्पि for किं K2. आसि for आसी A. Bh. K1. K2. N.

द्वितीया । सहि तेण किल माहवपिअवअस्सेण मअरन्देण
५ सअलो जेव्व मअणुज्जाणवुत्तन्तो भअवदीए णिवेदिदो । (क)

प्रथ० । तदो किं । (ख)

द्विती० । तदो भट्टिदारिअं दट्ठुकामाए भअवदीए पउत्तिणिमित्तं अवलोइदा अणुप्पेसिदा । मए वि ताए कधिदं जधा लवङ्गिआदुदीआ विवित्ते भट्टिदारिआ वट्टदि त्ति । (ग)

---

(क) सखि तेन किल माधवप्रियवयस्येन मकरन्देन सकल एव मदनोद्यानवृत्तान्तो भगवत्यै निवेदितः ।

(ख) ततः किम् ।

(ग) ततो भर्तृदारिकां द्रष्टुकामया भगवत्या प्रवृत्तिनिमित्तमवलोकितानुप्रेषिता । मयापि तस्यै कथितं लवङ्गिकाद्वितीया विविक्ते भर्तृदारिका वर्तत इति ।

---

भर्तृदारिका मालती । प्रवृत्तिर्वार्त्ता । विविक्तं विजनम् । इह मकरन्दाज्ज्ञातमाधवात्रस्थया कामन्दक्या प्रकृतसिद्धयेवसरज्ञानार्थं मालतीवार्त्तां ज्ञातुं प्रहितावलोकितेति भावः । अत्र केसरो बकुलः । अव-

---

४. हि for किल N. ; °प्पिअ A. °प्पिय O. for °पिअ; मयरन्देण for मअरन्देण O.

५. सयलो for सअलो O. ; N. O. om. जेव्व; ज्जेव्व A. Bh. C. N. ज्जेव D. जेव K1. जेअ K2. for जेव्व ; मअरंदु° Bh. मयणु° O. for मअणु° ; °णुज्जाणा C. ; वुत्त-न्तो A. वुत्तान्तो K2. for वुत्तन्तो.

६. N. om. प्रथ°—किं. K1. K2. om. प्रथ° । ··· द्विती° । (l. 7).

७. भट्ट° for भट्टि° Bh. O.; °दारिआअं K2. °दारियं O. for °दारिअं ; दिट्ठा K1. दिट्ठु K2. for दट्ठु°; N. om. भअवदीए ; भयवदीए for भअवदीए O.; प्पउ° for पउ° A. D. O.

८. णु for अणु° Bh. ; प्पेसिदा O. अणुप्पेसिता K2. for अणुप्पेसिदा ; पि for वि K1.; ताव for ताए N. ; कहिदं for कधिदं K1. K2. N. O. ; जहा B. O. जह N. for जधा.

९. दुदिआ Bh. दुदीया O. for दुदीआ ; N. om. विवित्ते ; भट्ट° for भट्टि Bh. O. ; उवरिअलिंदं before वट्टदि N. ; ति for त्ति K2. ; K1. O. om. त्ति.

प्रथ° । हला लवङ्गिआ क्खु केसरकुसुमाइं अवचिणोमि १०
त्ति मअणुज्जाणादो जेव्व णागदा ता किं संपदं संपत्ता । (क)

द्विती° । अध इं । तं क्खु परावट्टन्तीं जेव्व हत्थे गेह्णिअ
पडिसिद्धपरिअणा भट्टिदारिआ उअरिअलिन्दअं समारूढा । (ख)

प्रथ° । णूणं तस्स महाणुभावस्स संकधाए अत्ताणं विणो-
देदि । (ग) १५

---

(क) हला लवङ्गिका खलु केसरकुसुमान्यवचिनोमीति मदनो-
द्यानादेव नागता* तत्किं सांप्रतं संप्राप्ता ।

(ख) अथ किम् । तां खलु परा†वर्तमानामेव हस्ते गृहीत्वा प्रतिषि-
द्धपरिजना भर्तृदारिकोपर्यलिन्दकं समारूढा ।

(ग) नूनं तस्य महानुभावस्य संकथयात्मानं विनोदयति ।

---

चिनोमि त्रोटयामि । इति हेतौ । अत्र परापतन्ती सत्वरमागच्छन्ती ।

---

१०. N. om. प्रथ°—समारूढा (l. 13); सहि for हला B. Bh. K1. K2. O; खु for क्खु K1. K2. O.; °माइ for माइं O.; °चिणेमि for °चिणोमि O.

११. मयणु° O. मअनो° K1. मअणो° K2. for मअणु°; °ज्जाणाओ O. °ज्जाणं गदा K1. K2. for °ज्जाणादो; B. K1. K2. om. जेव्व; ज्जेव O. ज्जेव्व C. D. N. for जेव्व; अणागदा for णागदा B.; संप्पदं for संपदं O; संप्पत्ता for संपत्ता O.

१२. ता for तं C.; खु for क्खु Bh. K1. K2. O.; °वत्तंतीं O. °वुत्ति° Bh. °वट्टंतिं (पतन्तीम् in छाया) K2. °वट्टन्ति K1. for °वट्टन्तीं; ज्जेव्व B. N. य्येव्व K1. ज्जेव Bh. C. O. for ज्जेव; घेत्तूण O. गेन्हिअ K1. for गेण्हिअ.

१३. सिद्धि for सिद्ध Bh.; पडि° for परि° O.; °यणा for °अणा O.; Bh. om. भट्टिदारिआ; भट्ट for भट्टि C. D. K2. O.; दारिया for दारिआ O.; उवरि for उअ-रि Bh. K1. K2. O.; °न्दए B. °न्दहं K2.° न्दयं O. for °न्दअं.

१४. णं K1. नूणं for णूणं O.; महानु° for महाणु° K1. °भाअस्स B. D. °हावस्स N. for भावस्स; संगम for सं N.; °कहाए N. °कधाये K1. K2. for °कधाए; अत्ताणअं for अत्ताणं Bh.

१५. °देइ B. °एदि O. for °देदि.

* नायाता Com. † परापतन्तीम् Com.

द्विती° । निःश्वस्य । कुदो से आसासो । एदिणा अज्ज सविसेसदंसणेण अदिभूमिं क्खु ताए अहिणिवेसो गमिस्सदि । अण्णं च । णन्दणस्स कारणादो महाराओ भट्टिदारिअं पत्थअन्तो अमच्चेण विण्णत्तो । (क)

२० प्रथ° । किं त्ति । (ख)

---

(क) कुतस्तस्या आश्वासः । एतेनाद्य सविशेषदर्शनेनातिभूमिं खलु तस्या अभिनिवेशो गमिष्यति । *अन्यच्च । नन्दनस्य† कारणान्महाराजो भर्तृदारिकां प्रार्थयमानोमात्येन विज्ञप्तः ।

(ख) किमिति ।

---

कृतकार्यत्वेन सत्वरमागमनं भूतधर्मः । उपर्यलिन्दकं बाह्यपट्टशालाया उपरीत्यर्थः ।

१७-२० अत्रातिभूमिमुत्कर्षम् । अभिनिवेश आसक्तिः । कल्यः प्रातः । कल्लीति पाठे कल्लिशब्दो देशी पूर्वदिनवाचकः । अत एव कल्लि पल्लीनिवासिन इति । किं विज्ञप्तमित्यर्थः ।

२१-२७ इदमभूताहरणं वाक्यम् । यदाह ।

अभूताहरणं तत्स्याद्यद्वाक्यं कपटाश्रयम् ॥

---

१६. निश्वस्य for निःश्वस्य K1. ; N. om. निःश्वस्य ; खु before से N. ; आआसो for आसासो A. ; B. Bh. om. स.

१७. खु for क्खु Bh. K1. K2. O. ; गदो before ताए K1. K2. ; हिणिवेसो for अहिणिवेसो K1. ; भविस्सदि for गमिस्सदि K1. K2. ; त्ति after °स्सदि B. Bh. C. K2. O.

१८. अणक्कं च कल्यमेव C. कल्लमेव K1. कल्यमेव K2. कल्लं च (margin अण्णं च) O. for अण्णं च ; अ for च N. ; णं before णन्द° Bh. ; कालणादो for कारणादो N. ; °राआ for °राओ A. ; भट्ट for भट्टि B. Bh. K1. O. ; दारिआं K1. K2. N. दारियं O. for दारिअं ; पत्थयन्तो K2. प्पत्थयन्तो O. पअच्छत्थन्तो A. °पत्थंतो C. अब्भत्थंतो D. पत्थयन्तो K1. for पत्थअन्तो.

१९. विणत्तो for विण्णत्तो Bh.

२०. किंत्ति Bh. K2. किन्ति K1. for किंत्ति ; ति for त्ति O.

* Com. om. अन्यच्च and has कल्यमेव. † कारणेन Com.

द्विती० । पहवदि णिअस्स कण्णआजणस्स महाराओ त्ति । ता जादो आमरणं क्खु मालदीए हिअअसल्लं माहवाणुराओ त्ति तक्केमि । (क)

प्रथ० । अवि णाम भअवदी किं पि भअवदित्तणं एत्थ दंस-इस्सदि । (ख) २५

द्विती० । अइ असंबद्धमणोरहे एहि । (ग)

इति परिक्रम्य निष्क्रान्ते । प्रवेशकः ।

---

(क) *प्रभवति निजस्य कन्यकाजनस्य महाराज इति । †तज्जात आमरणं ‡खलु मालत्या §हृदयशल्यं माधवानुराग इति तर्कयामि ।

(ख) अपि नाम भगवती किमपि भगवतीत्वमत्र दर्शयिष्यति ।

(ग) अयि असंबद्धमनोरथे एहि ।

---

वाक्यतत्त्वमज्ञात्वाह [तज्जात इत्यादि] । अत्र दुःखदत्वेन शल्य-मिव शल्यम् । अजहल्लिङ्गम् । अत्रापि नाम संभावनायाम् । भगव-तीत्वं ज्ञानादिवैभवम् । निष्क्रान्ते चेटचौ । प्रवेशक इति वक्तव्य-स्य च बहुत्वाद्रसभङ्गप्रसङ्गेनान्योक्त्या प्रवेशकः । यदाह ।

---

२१. जं before पहवदि D. O.; प्पहवदि for पहवदि O.; णियस्स for णिअस्स O.; महाभाओ B. महाराणेओ C. for महाराओ ; तदो for ता D. N. O.

२२. जादं A. O. for जादो; D. om. जादो; खु for क्खु Bh. K1. K2. N. O.; B. N. om. क्खु; क्खु सल्लं मालदीए भविस्सदि माह° for क्खु माह° D.; ताए before माल° N.; C. K1. om. हिअअ; हिअए for हिअअ K2. O.; °राउ for °राओ Bh.

२४. भयवदी for भअवदी° O.; वि किंपि ए for किं पि K2.; वि for पि N.; भगव-दित्तणं Bh. भअवदीत्तणं A. for भअवदित्तणं; एत्थ भयवदित्तणं° O. एत्थ भवदित्तणं K1. for भ°—त्थ; K2. om. एत्थ; दंसेदि for दंसइस्सदि N.

२५. °यिस्सदि for °इस्सदि K2 .; त्ति after °स्सदि D.

२६. K2. om. the Prakrit अइ—एहि and gives its छाया only with गच्छावः after एहि; अयि for अइ K1. O.; C. om. एहि; गच्छम्ह after एहि A. D. K1.

२७. K1. K2. N. om. परिक्रम्य.

* यत्प्रभ° Com. † ततो Com. ‡ Com. om. खलु. § हृदये शल्यम् Com.

ततः प्रविशत्युपविष्टा सोत्कण्ठा मालती लवङ्गिका च ।

मालती । हुं सहि तदो तदो (क)

३० लवङ्गिका । तदो तेण महाणुभावेण उवणीदा मे इअं बउ-लमाला । (ख) इति मालामर्पयति ।

---

(क) हुं सखि ततस्ततः ।

(ख) ततस्तेन महानुभावेनोपनीता म इयं बकुलमाला ।

---

यत्तु प्रयोगबाहुल्यादङ्कैर्थो न समाप्यते ।
बहुवृत्तान्तोल्पकथैः स विधेयः प्रवेशकैः ॥
अङ्कानामन्तरालेषु संक्षिप्तार्थप्रयोजनैः ।
भृत्यवर्गे कथाबद्धो विज्ञेयोयं प्रवेशकः ॥

२९-३९ हुं प्रश्ने । लवङ्गिकाकथितबकुलमालाप्रार्थनापर्यन्त-श्रुतवार्तया मालत्याग्रिमवार्ताकर्णनोत्कया पृच्छ्यत इत्यर्थः । विर-होत्कण्ठितेयम् । यदाह ।

अनेककार्यसंयुक्तो यस्या नागच्छति प्रियः ।
तदनागमदुःखार्ता विरहोत्कण्ठिता तु सा ॥

प्रियकथापरत्वे मोट्टायितभावोयम् । यदाह ।

श्रुत्वा कथां प्रियजनस्य सखीमुखेभ्यः
कर्णोदरस्थितचलत्तनुतर्जनीकम् ।
यत्साङ्गभङ्गमिह जृम्भितमङ्गनानां
मोट्टायितं तदुदितं कविभिः पुराणैः ॥

---

२८. N. O. om. उपविष्टा.

२९. K1. K2. om. मालती; Bh. C. N. O. om. हुं; N. om. सहि; C. om. one तदो

३०. सहि केण for तदो तेण N.; °भाएण A. °हाएण B. °हावेण N. for °भाविण; °णीता for °णीदा K2.; N. om. मे; B. O. om. इअं; इयं K1. एसा Bh. C. for इअं; वउ° Bh. बहु° K1. K2. for बउ°.

३१. B. Bh. C. K1. N. O. om. इति मालाम्; K2. om. मालाम्; समर्पयति for अर्पयति K2. O.

माल० । गृहीत्वा सहर्षं निर्वर्ण्य । सहि एक्कपासविसमपडिबद्धा क्खु एसा विरअणा । (क)

लव० । एत्थ दाव अरमणीअत्तणे तुमं जेव्व अवरज्झसि । (ख)

माल० । कधं विअ । (ग) ३५

लव० । जेण सो मुद्धदुव्वासामलङ्गो तधा विहत्थीकिदो । (घ)

(क) सखि एकपार्श्वविषमप्रतिबद्धा खल्वेषा विरचना ।

(ख) *अत्र तावदरमणीयत्वे त्वमेवापराध्यसि ।

(ग) कथमिव ।

(घ) येन स †मुग्धदूर्वाश्यामलाङ्गस्तथा विहस्तीकृतः ।

प्रतिबद्धा घटिता । मालती माधवचेष्टाकर्णनाकाङ्क्ष्याजानतीवाह । कथमिव । कथं ममापराध इत्यर्थः । अत्र दूर्वेत्यादिना शृङ्गारित्वे तात्पर्यमुक्तम् । तथानिर्वचनीयप्रकारेण । विहस्तो व्याकुलः ।

३२. कुदो after सहि N.; एक° for एक्क° K1. K2. O.; फास A. वास B. Bh. पास्स K1. K2. for पास; विसमं for विसम N.; प्पडिबंधा O. वडिबद्धा K2. for पडिबद्धा.

३३. Bh. N. om. क्खु; खु K1. K2. ख्खु O. for क्खु. इअं for एसा A. Com. N.; विरयणा for विरअणा O.

३४. सहि before एत्थ Bh.; K1. K2. N. om. दाव; दाणिं for दाव O.; एदाए before अरम° K1. K2.; रमणीयत्तणे K2. रमणिज्जयंदे O. for अरमणीअत्तणे; O. om. तुमं जेव्व; ज्जेव्व C. D. K1. K2. ज्जेव A. एव्व N. for जेव्व, °रद्धासि K1. K2. N. रज्झदि° O. for °रज्झसि.

३५. कधं Bh. कहं B. K1. K2. N. O. for कधं; विय for विअ O.

३६. N. om. मुद्ध, मुद्धा K1. सुद्ध for मुद्ध O.; B. K2. O. om. दुव्वा, उच्छ्रा for दुव्वा K1.; तहा B. K1. K2. तदा D. तह N. तथा O. for तधा; विलत्थ° for विहत्थी° K1.; कदो for किदो Bh. K1. K2.

* Com adds सखि. † Com. om. मुग्ध.

माल० । पिअसहि लवङ्गिए सव्वधा आसासणसीलासि । (क)

लव० । सहि का एत्थ आसासणसीलदा । णं भणामि सो वि पिअसहीए मन्दमारुदुव्वेल्लन्तप्फुल्लपुण्डरीअविब्भमेहिं पढ-

४० मारद्धवउलावलीविरअणावदेससंजमिदबलामोडिअवित्थरन्तेहिं

(क) प्रियसखि लवङ्गिके *सर्वथाश्वासनशीलासि† ।

(ख) सखि कात्राश्वासनशीलता। ननु भणामि सोपि प्रियसख्या मन्दमारुतोद्वेल्लत्प्रफुल्लपुण्डरीकविभ्रमाभ्यां प्रथमारब्धबकुलावलीविरचनापदेशसंयमितबलात्कारविस्तृताभ्यां ‡लोचनाभ्यां विजृम्भमाणवि-

३८–४३ अत्र स त्वयापि विलोचनाभ्यां पश्यन्प्रत्यक्षीकृतो दृष्ट एवेत्यन्वयः । अपिर्भिन्नक्रमः । उद्वेल्लत्कम्पमानम् । विभ्रमो विशिष्टा भ्रान्तिः सोयमित्याकारा । सादृश्यं वा विभ्रमः । माधवस्य पुण्डरीकाक्षत्वात् । विरचनापदेशेन घटनव्याजेन यः संयमोन्यादर्शनं तं प्रापिताभ्यां बलामोड्या बलात्कारेण विस्तरं गच्छद्भ्याम् । बलामोडिर्बलात्कारे देशी । यद्यप्यवलोकयन्नित्यनेन लोचनाभ्यामिति प्राप्तं तथापि विशिष्टलोचनप्रतिपादनार्थं तदुक्तम् । विजृम्भमाणो वर्धमानः । स्ति-

३७. O. om. पिअसहि; N. om. पिअ; सव्वदा K2. सव्वया Bh. सव्वहा K1. N. for सव्वधा.

३८. K1. K2. om. एत्थ; °सीणदा or °सीलदा K1.; णणु for णं K2.; O. om. वि; K1. om. सो वि पिअसहीए.

३९. प्पिय for पिअ O.; मारुअवल्हत्थ B. Bh. C. मारुदपन्हभु K1. मारुदोद्वेलत् K2. मारुअप्पचलिअ N. मारुयदोलिय O. for मारुदुव्वेल्लन्त; प्पप्फु° O. प्पफु° A. B., पफु° the rest; विम्भमेहिं Bh. O. ब्भमेहिं C. for विब्भमेहिं; पुढमा N. प्पढमा O. for पढमा.

४०. °बद्ध for °रद्ध A. Com.; वउलमालावली K1. K2. वउलमालावली C. वउलावली° O. for वउलावली; विरयणा for विरअणा O.; संजमण for संजमिद O.; मोडि° A. Bh. D. K2. O. °लोडिअ C. for °मोडिअ, वित्थरिदेहिं for वित्थरन्तेहिं N.

* Com. om. लवङ्गिके. † Com. adds after शीलासि, यद्वा । आशंसनशीलासि.

‡ विलोच° Com.

लोअणेहिं विअम्भमाणविम्हअत्थिमिददीहपेरन्तपरिअत्तणावि-
लासतण्डविदभूलदाविडम्बिदाणङ्गसारङ्गविब्भमविअड्ढं अव-
लोअअन्तो पच्चक्खीकिदो जेव्व । (ख)

---

स्मयास्तिमितदीर्घपर्यन्तपरिवर्तनाविलासताण्डवितभ्रूलताविडम्बितान-
ङ्गशारङ्गविभ्रमविदग्धमवलोकयन्प्रत्यक्षीकृत *एव ।

---

मितः स्निग्धो दीर्घपर्यन्तमतिदीर्घम् । परिवर्तना पुनःपुनर्गमनं तत्र विलासो विशिष्टदृष्टिव्यापारस्तेन ताण्डवितया नर्तितया भ्रूलतया विडम्बितः समीकृतोनङ्गशारङ्गविभ्रमः कामधनुर्विलासस्ततो विदग्धमिति क्रियाविशेषणम् ।

गमनासनपाणिपादचेष्टा सविशेषं नयनभ्रुवां च कर्म ।
दयितोपगमे यदप्रयत्नात्क्रियते नूनमयं विलास उक्तः ॥

इति भरतः । शारङ्गरङ्गत इति प्रयोगाच्छारङ्गेति भिन्नो रेफः ॥ शारङ्गं धनुषि स्मृतमिति शाश्वतः ॥ ततस्त्वदवलोकनविकलता मालारम्यत्वे हेतुरिति तात्पर्यमिह ।

---

४१. लोयणेहिं for लोअणेहिं O.; विइम्भ° N. वियम्भ° O. for विअम्भ°; °आण for °माण A.; विम्हय O. विह्नअ K1. for विम्हअ; त्थिमिअ N. चिह्नमिद K1. for त्थिमिद, प्पेरन्त for पेरन्त O.· परिअंतणा B. Bh. N. परियंत्तणा C. O. for परिअत्तणा.

४२. विलासुल्लसिअ for विलासतण्डविद N.; तांडविद Bh. K2. तण्डविअ K1. तण्डविय O. for तण्डविद, लया for लदा°; °भाविदा N. °डम्बिता K2. °डम्बिया O. for °डम्बिदा, °नङ्ग for °णङ्ग K2. सरसंरंभ for सारङ्ग N.; विम्भमेहिं O. विब्भमेहिं Bh. C. K1. K2. for विब्भम, विअड्ढं B. सुविअड्ढं C. सुविअढं Bh. सुडअढं K1. K2. विप्पड्ढं O. for विअड्ढं.

४३. अवलोअण Bh. अवलोअन्तो B. C. D. K1. K2. आलोअन्तो N. अवलोकयन्तो O. for अवलोअअन्तो; तुए after अव-न्तो B. K2.; पच्चक्खी° for पच्चक्खी O. कदो for किदो Bh. C.; एव्व N. उजेव O. उजेव्व A. C. D. उजेव्व Bh. for जेव्व.

* त्वया after °लोकयन् Com.

माल० । लवङ्गिकां परिष्वज्य । अम्मो पिअसहि किं दाव
४५ तस्स महाणुभावस्स साहाविआ जेव्व मुहुत्तसंणिधाइणो जणस्स
विप्पलम्भइत्तआ विलासा आदु जहा पिअसही संभावेदि । (क)

लव० । विहस्य सासूयमिव । तुमं वि सहावेण जेव्व तस्सिं अव-
सरे असंगीदअं णच्चाविदासि । (ख)

---

(क) अम्मो प्रियसखि किं तावत्तस्य महानुभावस्य स्वाभाविका एव मुहूर्तसंनिधायिनो जनस्य *विप्रलम्भयितृका विलासा आहोस्विद्यथाप्रियसखी संभावयति ।

(ख) त्वमपि स्वभावेनैव तस्मिन्नवसरेसंगीतकं नर्तितासि ।

---

४४–४६ आमिति तदुक्तस्वीकारे । अम्मो इति पाठे अम्मो हर्षे वितर्के वा । विप्रलम्भितो विप्रलम्भं प्रापितः ॥ तारकादित्वादितच् । ततः स्वार्थे कः ॥ आदुशब्दोत्राहोस्विद्वाचकः । शीलस्य बहुकालपरिचेयतया मुहूर्तमात्रसंनिधाने विप्रलम्भचिन्ता । किमिदं नयनविकारादि स्वाभाविकमानुरागिकं वेति ज्ञातुं न शक्यत इति भावः । विप्पलम्भइत्तका इति पाठे विप्रलम्भचिन्तका इति ज्ञेयम् ।

४७–५४ अत्र मन्मथेनेति शेषः । असंगीतकं निभृतनृत्यं यथा

---

४४. आम् C. D. आ Bh. आम N. O. for अम्मो; प्रिय for पिअ O.; आम before किं N.

४५. N. O. om. महाणुभावस्स; महानु° for महाणु° K1.; °भाअस्स for °भावस्स A. B; साहाविओ D. साहाविया O. for साहाविआ; ज्जेव्व A. C. D. O. ज्जेव K1. ज्जेअ K2. एव्व N2. for जेव्व; ते before मुहुत्त O; मुहुत्तं for मुहुत्त K1. K2.; संणिहायिणो K1. K2. संनिहाइणा N. संनिधाइणो O. for संणिधाइणो.

४६. हेतुआ A. °आ N. °इत्तका O. for इत्तआ; अहवा C. K1. K2. होदु N. उत O. for आदु; जधा for जहा B.; प्पिय for पिअ O.

४७. तुम for तुमं K2. पि for वि O.; °वेणेव्व for °वेण जेव्व N.; B. Bh. om. जेव्व; ज्जेव्व A. C. D. K 2. ज्जेव O. for जेव्व.

४८. संगीदअं B. D. असंगीअं K1. असंगीदं N. असंगीदयं O. for असंगीदअं; णच्चिदासि A. णच्चाविदा एव्व N. णच्चाविदा आसी O. for णच्चाविदासि.

* विप्रलम्भहेतुकाः; विप्रलम्भितकाः; विप्रलम्भचिन्तकाः Com.

माल° । सलज्जम् । हुं तदो तदो । (क)

लव° । तदो पडिणिअत्तमाणजत्ताजणसंकुलेण अन्तरिदे ५०
तस्सिं मन्दारिआए घरं उवगदम्हि । ताए क्खु चित्तफलअं
पभादे हत्थीकिदं आसी । (ख)

माल° । किंणिमित्तं । (ग)

लव° । तं क्खु माहवाणुअरो कलहंसओ णाम कामेदि सा
तस्स दंसइस्सदि त्ति। तदो पिअणिवेदिआ मन्दारिआ संवुत्ता। (घ) ५५

---

(क) हुं ततस्ततः ।

(ख) ततः प्रतिनिवर्तमानयात्राजनसंकुलेनान्तरिते तस्मिन्मन्दारिकाया गृहमुपगतास्मि। *तस्याः खलु चित्रफलकं प्रभाते हस्तीकृतमासीत् ।

(ग) किंनिमित्तम् ।

(घ) तां खलु माधवानुचरः कलहंसको नाम कामयते सा तस्य

---

तथा नृत्यं कारितासीत्यर्थः । सासूयं परद्वेषसहितम् । हुमिति प्रणयकोपे । अत्र तस्मिन्माधवे । खलु हेतौ । हस्तीकृतं न्यासीकृतम् । अत्र कामयत इच्छति ।

---

४९. सलज्जा for सलज्जम् C.; इव after सलज्जम् Bh.; विहस्य before हुं Bh. C. K1. K2. N. O.; K2. om. हुं; Bh. C. om. one तदो.

५०. णिउ त्तमाण B. C. णिवत्तमाण N. णियत्तमाण O. for णिअत्तमाण; B. Bh. N. O. om. जत्ता; जणदा for जण N.; संकुले B. संकले N. for संकुलेण; °णान्त° for °ण अन्त° K2.; N. om. अन्तरिदे.

५१. जणे after तस्सिं A. C. D. K1, K2.; °रिआ for °रिआए N.; उप° A. उवा° Bh. D. for उव°; N. K1, K2. om. क्खु; ख्खु for क्खु O.; °फलहअं Bh. फलयं O. for फलअं.

५२. पहादे D. प्पभादे O. for पभादे; हच्छे for हत्थी° K1.; कदं for किदं Bh. C D. K1. K2.; अत्थि for आसी A. B. Bh.

५३. निमित्तं for णिमित्तं K2.

५४. एदं for तं N., खु Bh. K1. N. O. हु K2. for क्खु; °चरो A. B. K1. K2. यरो O. for °अरो°; °हंसो N. °हंसयो O. for °हंस ओ; Bh. K1. K2. om. णाम; तदो before सा B.; सो for सा C. K1. K2. O.

५५. संदंस° for दंस° D.; दंसदि for दंसइस्सदि K2; प्पिय for पिअ O.; °वेदइत्तआ N. °वेदिइत्तिया O. for °वेदिआ; स K1. मम K2. मे A. Com. after °वेदिआ; मन्दारिया for मन्दारिआ O.

* तया for तस्याः Com.

माल० । स्वगतम् । णूणं तेणावि कलहंसएण तं पडिछ-न्दअं अत्तणो पहुस्स दंसिदं भविस्सदि । प्रकाशम् । सहि किं दाणिं दे पिअं । (क)

लव० । एदं क्खु संदाविदस्स संदावआरिणो दुल्लहमणोर-
६० हावेसदूसहाआसदज्झन्तचित्तस्स क्खणमेत्तणिव्वावअं तुह पडिछन्दअं । (ख) इति चित्रं दर्शयति ।

---

दर्शयिष्यतीति । ततः प्रियानिवेदिका मन्दारिका संवृत्ता ।

(क) नूनं तेनापि कलहंसकेन तत्प्रतिच्छन्दकमात्मनः प्रभोर्दर्शितं भविष्यति । सखि किमिदानीं ते प्रियम् ।

(ख) एतत्खलु संतापितस्य *संतापकारिणो दुर्लभमनोरथावेशदुःसहायासदह्यमानचित्तस्य क्षणमात्रनिर्वापकं तव प्रतिच्छन्दकम् ।

---

५९-६८ अत्र दुर्लभायां त्वयि मनोरथाभिनिवेशस्तेन यो दुःसहायासस्तेन दह्यमाने चित्ते क्षणमात्रनिर्वापकमिति । अत्रानासङ्गेनाश्वासः । लवङ्गिका स्वयं लिखित्वा माधवलिखितत्वेन बोधयतीति भावः । सदृशमिति । मधुरतया निर्माणस्य सदृशं वचनमित्यर्थः।

---

५६. तेणापि K2. तेणंवि N. तेण O. for तेणावि; ° हंसयेण for °हंसएण O.; O. om. तं; पडिच्छ° for पडिछ° K2.

५७. °न्दयं for °न्दअं O.; णाहस्स A. B. K1. K2. O. णाधस्स Bh. पहुणो N. for पहुस्स; हविस्स° N. हुविस्स° D. for भविस्स°; त्ति after °स्सादि B.; तदो before प्रकाशम् B.

५८. ते for दे K2. N.; प्पियं O. प्पिअं B. for पिअं.

५९. खु for क्खु K1. K2. O.; तस्स after °विदस्स O.; °कारिणो B. K1. K2. O. °हारिणो Bh. for °आरिणो.

६०. °यास for °आस O.; जुत्त Bh. डज्जन्त C. K1. भज्जन्त K2. धज्झन्त N. ज्जलन्त O. for दज्झन्त; हिययस्स for चित्तस्स O.; खण Bh. K1. K2. क्खण O. for क्खण, णिव्वावयं O. णिवाइत्ताआ K1. for णिव्वावअं.

६१. प्पडि° N. परि° K1. for पडि°; °च्छन्दअं K2. N. °छन्दयं O. for °छन्दअं; B. Bh. C. N. om. इति; त्ति for इति O.; चित्रफलकं for चित्रं C.

* त्वत्संताप° Com.

माल०। सहर्षं निर्वर्ण्य। अह्नो दाणिं पि हिअअस्स मे अणासङ्गो जेण एव्वं पि आसासणं विप्पलम्भो त्ति संभावेमि। कधं अक्खराइं पि। (क)। इति वाचयति।

जगति जयिनस्ते ते भावा नवेन्दुकलादय इत्यादि पूर्वोक्तं ६५ पठित्वा सानन्दम्। महाभाअ सरिसं क्खु दे णिम्माणस्स वअणं मधुरदाए लक्खीअदि। दंसणं उण तक्कालमणोहरं परिणामदी-

(क) अहो इदानीमपि हृदयस्य मेनासङ्गो येनैवमप्याश्वासनं विप्रलम्भ इति संभावयामि। कथमक्षराण्यपि।

(ख) महाभाग सदृशं खलु ते निर्माणस्य वचनं मधुरतया लक्ष्यते*।

तवाकृतिर्मधुरा यथा तथा वचोपि मधुरमित्यर्थः। यस्येदृशं वचस्तस्य कथमेवं दर्शनमित्युपालम्भपूर्विका पृच्छा। यदाह।

६२. सोच्छ्वसं A. सहर्षोच्छ्वासं K1. K2. N. O. for सहर्षं; चिरं A. चिरं C. K1. K2. O. before निर्वर्ण्य; N. om. निर्वर्ण्य; स्वगतं after निर्वर्ण्य O.; B. Bh. K1. O. om. पि; वि for पि C. D. K2. N.; मे हिययस्स O. मे हिअअस्स K1. K2. for हिअअस्स मे.

६३. अणासंघो B. Bh. D. K1. O. अनाश्वासः C. अणासासो N. अणासन्दो K2. for अणासङ्गो; एवं A. Bh. C. एअं K2. एदं D. O. N. for एव्वं; वि for पि N. सणा for °सणं B.; लम्भं for °लम्भो N.; N. om. त्ति; संभावेदि K2. O. संभावीअदि N. for संभावेमि; कहं B. N. O. कहिं K2. for कधं; एत्थ before अक्ख° N; K1. has a lacuna between जेण and राइं पि.

६४. अक्खराइं N. O. for अक्खराइं; वि for पि D. N., O. om. पि; दिस्सन्दि after वि N.; Bh. K2. O. om. इति; संस्कृतमाश्रित्य for इति—ति N.

६५. N. om. तेते—°दयः K1. K2. om. नवेन्दुकलादयः; the whole S'loka in B. Bh. C. O.; Bh. O. om. इत्यादि पूर्वोक्तं पठित्वा; K1. K2. om. आदिपूर्वोक्तं; N. om. पूर्वोक्तं.

६६. पठति for पठित्वा N.; महाभाय for महाभाअ O.; सरिअं for सरिसं K 2; खु for क्खु Bh. K1. K2. O.; निम्मा° for णिम्मा° K2.; वयणं O. विरअणा° A. for वअणं.

६७. महुर° for मधुर° D. K1. K2. N.; K1. K2. N. O. om. लक्खीअदि; मण° for मणो° O.

* Com. om. लक्ष्यते.

हसंदावदारुणं । धण्णाओ क्खु ताओ अम्मकाओ जाओ तुमं ण पेक्खन्ति पेक्खिअ वा अत्तणो हिअअस्स पहवन्ति । इति ७० रोदिति । (ख)

लव० सहि किं एव्वं पि दे णत्थि आसासो । (क)

माल० सहि कधं । (ख)

---

दर्शनं पुनस्तत्कालमनोहरं परिणामदीर्घसंतापदारुणम् । धन्याः खलु ताः कन्यका* यास्त्वां न प्रेक्षन्ते प्रेक्ष्य वात्मनो† हृदयस्य प्रभवन्ति ।
(क) सखि किमेवमपि ते नास्त्याश्वासः ।
(ख) सखि कथम् ।

---

यत्र भावनयोपेतमात्मानमथवा परम् ।
पृच्छन्निवाभिधत्तेर्थं सा पृच्छेत्यभिधीयते ॥

नाटचधर्मत्वेन परोक्षस्यापि प्रत्यक्षीकरणम् । यदाह ।

परोक्षेपि च वक्तव्यो नार्या प्रत्यक्षवत्प्रियः ॥

अम्मकाशब्दः स्त्रियां कन्यायां वा देशी ।

७३–७८ अत्रोत्खलितं छिन्नम् । बन्धनं वृन्तशाखासंयोगः । कङ्केल्लिरशोकः । निःसहाक्षमा । परिखिद्यसे परिहीयसे । एतेन का-

---

६८. अवि B. अवि अ Bh. अ C. K2. मणहरं अ N. after दारुणं; अधण्णा N. धण्णा B. for धण्णाओ; N. om. क्खु; खु for क्खु Bh. K1. K2. O.; D. om. क्खु ताओ; N. om. ताओ; कण्णकाओ O. कण्णआओ A. C. K1. K2. कण्णकाओ Bh. इत्थिआओ N. for अम्मकाओ; जाउ Bh. for जाओ.

६९. प्पेक्खंति O. पेक्खवन्ति K1. for पेक्खन्ति; °न्ति । अपि णाम अत्तणो A. °न्ति । अवि णाम अत्तणो O. for °न्ति–अत्तणो; अवि णाम before पेक्खिअ K1. K2.; N. om. वा; हिययस्स for हिअअस्स O.; वा ण after °अस्स N.; पभवंति Bh. K2. प्पभवंति O. for पहवन्ति.

७१. N. om. किं; किं after पि instead of after सहि Bh.; एवं for एव्वं Bh. K2. O.; वि for पि N.; K1. om. दे, दे before आसासो Bh.

७२. N. om. सहि; कहं for कधं D. N.; विअ after कहं N.

* स्त्रियो Com.

† प्रेक्षन्ते । अपि नामात्मनो Com.

लव० । जस्स कारणादो उक्खण्डिअबन्धणं विअ कङ्केल्लि-
पल्लवं किलम्मन्तणोमालिआकुसुमणीसहा परिखिज्जसि सो वि
जाणाविदो भअवदा मम्महेण संदावस्स दूसहत्तणं त्ति । (क) ७५

माल० । कुसलं दाणिं तस्स महाणुभावस्स भोदु मम उण
दुल्लहो आसासो । सास्सम् । विसेसदो अज्ज पिअसहि । (ख)

(क) यस्य कारणादुत्खण्डित*बन्धनमिव कङ्केल्लिपल्लवं क्लाम्यन्नव-
मालिकाकुसुमानिःसहा परिखिद्यसे सोपि ज्ञापितो भगवता मन्मथेन
संतापस्य दुःसहत्वमिति ।

(ख) कुशलमिदानीं तस्य महानुभावस्य भवतु मम पुनर्दुर्लभ
आश्वासः । विशेषतोद्य प्रियसखि ।

मावस्था तनुतोक्ता । अस्रं नेत्रजलम् । संस्कृतमिति । आसन्नमरण-
तया प्रकृतिविपर्ययद्योतनाय स्त्रियाः संस्कृताश्रयणम् । यद्वा । मर-
णसमये प्राकृतस्मरणस्य हीनयोनिजन्मफलकत्वेन बोधनात्तत्काले
स्त्रियाः संस्कृताश्रयणम् । यद्वा । वैदग्ध्यद्योतनाय तत् । यदाह ।

७३. कालणादो for कारणादो N.; खुडिद O. उक्खादित K2. उक्खण्डिद K1. उख्खडिअ B. उक्खाडिअ Bh. for उक्खण्डिअ; बंधणं for बन्धणं Bh.; व्व for विअ O.; N. om. विअ; कंकिल्लि Bh. कंकेल्लि K2. कंकेली N. for कङ्केल्लि.

७४. विअ हिअअं धरिंती N. जीविदं कधं वि धारयन्ती तुमं O. after °ल्लवं; किलियंत O. कलिसन्त K1. किलिस्सन्त A. किलित C. किलम्मंत D. किलंत N. किल Bh. for किलम्मन्त; किलिम्मणव° for किलम्मन्त K2.; णव for णो K2. O.; मालिया for मालिआ K1. O.; तुमं कुसुमाउहेण after णीसहा N.; परिहीयसि K1. K2. O. परि-खिज्जीअसि D. परिलक्खीअसि Bh. C. परिहिज्जसि N. for परिखिज्जसि.

७५. K2. om. भअवदा (but has its translation in the छाया); भयवदा for भअवदा O.; B. om. संदावस्स; संतावस्स for संदावस्स Bh.; B. Bh. C. K1. K2. om. त्ति.

७६. सहि before कुसलं N.; दाणीं for दाणिं A.; महानु° for महाणु° K1.; °भा-गस्स B. भाअस्स Bh. C. K2. O. °हावस्स N. for °भावस्स; होदु for भोदु B. N. O.; मह for मम N.

७७. सुदुल्ल° for दुल्ल° D. O.; आआसो A. आस्सासो C. for आसासो; B. om. सा-स्सम्; मए before विसे° B.; N. O. om. विसे—सहि.

* उत्खलित Com.

संस्कृतमाश्रित्य ।

मनोरागस्तीव्रं विषमिव विसर्पत्यविरतं
८० प्रमाथी निर्धूमो ज्वलति विधुतः पावक इव ।
हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानित इतो
न मां त्रातुं तातः प्रभवति न चाम्बा न भवती ॥

लव० । एव्वं जेव्व पच्चक्खसोक्खदाइणो परोक्खदुक्खदूसहा

(क) एवमेव प्रत्यक्षसौख्यदायिनः परोक्षदुःखदुःसहाः* सज्जनस-

संस्कृतभाषावाचः प्रायो नाट्ये खलु स्त्रियाः श्लाघ्याः ।
क्वचिदपि विदग्धतायाः प्रबोधनार्थं प्रशस्यन्ते ॥

७९–८२ मनोराग इत्यादि । प्रियसखि मामद्य त्रातुं न तातः प्रभवति न वा माता न वा त्वम् । कुतः । मनोराग आधिरविरतं प्रमाथी क्षोभकारी यथा तीव्रं विषं तथा विसर्पति व्याप्नोति । यथा धातुत्वगादिषु विषं व्याप्नोति तथाङ्गानि म उद्वेग इत्यर्थः । यद्वा । सविशेषदर्शनाच्चिन्तानुराग इच्छाभेदस्तीव्रं यथा तथा मनो विसर्पति व्याप्नोति दाहकारित्वाद्विषमिव । तथा विधुतः संधुक्षितोऽग्निर्यथा ज्वलति विधूननान्निर्धूमं यथा तथा स एव रागो ज्वलति ज्वालामालाकुलीभवति । इत इतः सर्वत्र प्रत्यङ्गं हिनस्ति पीडयति गरीयाञ्ज्वर इव । तं

७९. रोग° for राग° N.; तीव्रो for तीव्रं O.; विसर्पन् for विसर्पति Bh. N.

८०. निर्धूमं A. K1. K2. O. विधूमं N. for निर्धूमो.

८१. बलीयान् for गरीयान् C.; अत इतो for इत इतो N.

८२. तातस्त्रातुं K1. K2.; च नांबा च for न चाम्बा न N.

८३. एवं for एव्वं Bh. K2. एदं N.; जेव्व Bh. K1. ज्जेव K2. and ज्जेव्व the rest; पच्चक्खं B. पच्चख Bh. पच्चख्ख O. for पच्चक्ख; सोख्ख for सोक्ख O.; दायिणो for दाइणो O.; परोख्ख O. परोखं B. वराख्ख N. for परोक्ख; दुःसहाभासकारिणो for दुक्खदूसहा A; दुःख for दुक्ख O.; दुख after दुक्ख Bh.; दुस्सहा for दूसहा K2.

* दुःसहायासकारिणः° Com.

सज्जणसमाअमा होन्ति। अवि अ। जस्स वादाअणन्तरमुहु-त्तदंसणेण सविसेससमिद्धहुदवहाअन्तपुण्णिमाचन्दोदआ णिक्क- ८५ रुणकामव्वावारसंसइदजीविदा दे सरीरावत्था तस्स जेव्व संप-त्तसविसेसदंसणा भविअ अज्ज संतप्पासि त्ति किं एत्थ भणिदव्वं। ता पिअसहि सलाहणिज्जं दुल्लहमणोरहफलं

---

मागमा भवन्ति। अपि च। यस्य वातायनान्तरमुहूर्तदर्शनेन सविशेषसमृद्धहुतवहायमानपूर्णिमाचन्द्रोदया निष्करुणकामव्यापारसंशयितजीविता ते शरीरावस्था तस्यैव संप्राप्तसविशेषदर्शना भूत्वाद्य संतप्यसीति किमत्र भणितव्यम्। तत्प्रियसखि श्लाघनीयं दुर्लभमनोरथफलं

---

त्यक्त्वा ममाधिस्त्वया समाधातुं न शक्यत इति भावः। यद्वा। तातस्त्रातुं न शक्नोति नन्दननिरासेन माधवाय मद्दानात्। अम्बापि न तथा। तथानुवर्तमानस्य तातस्यानिषेधात्। लवङ्गिकायाश्च तयोः समशीर्षिकया गणनं स्वाच्छन्द्येन स्वमतप्रकाशनाय।

८४–९० अत्र भणितव्यं युज्यत एवेत्यर्थः। यस्याव्यक्तं दर्शनं

---

८४. असअस after दूसहा Bh.; असज्जण for सज्जण O.; समागमा Bh. C. K1. K2. for समाअमा; होन्दि for होन्ति N.; अपि अ K2.. अवि य O. for अवि अ; पिअसहि after अवि अ N.; वादायण for वादाअणन्तर O.; °णन्दर for °णन्तर N.; मेत्त after मुहुत्त A. C.

८५. दंसणे O. संदंसणेन N. for दंसणेण; वि after °णेन N.; Bh. N. O. om. सविसेस; सु before समिद्ध Bh. N. O.; हुतावहा° O. हुअवहा° Bh., D. K1.K2. for हुदवहा°; °यंत O. °अमाण C. for °अन्त; पुण्ण before पुण्णिमा K1.; पुण्ण C. N. O. पुणिमा Bh. for पुण्णिमा; यंदोदया O. ओंदोदआ C. चन्दोदया K1. K2. for चन्दोदआ; अदि before णिक्करु° D.; निक्क° for णिक्क° O.

८६. आकाम for काम Bh.; वावार B. C. D. K1. K2. N. for व्वावार; संसाइद for संसइद Bh.: दीसइ bofore दे B., एव्व N. जेव्व K1. K2. ज्जेव Bh. O. and the rest ज्जेव्व.

८७. सद before संपत्त Bh. संपत्तं C. K1. K2. संपदं N. for संपत्त; दंसणादो for °दंसणा N.; भविय for भविअ O.; A. Bh. N. om. भविअ; Bh. om. अज्ज; इन्ति for त्ति K2.

८८. एत्थ for ता N; N. om. पिअसहि; हविसहि for पिअसहि O.; सही for सहि A.; सिलाह for सलाह N.

जीअलोअस्स गुरुआणुराअसरिसं महाणुभाअवल्लहसमाअमो
१० त्ति एत्तिअं जाणीमो । (क)

माल० । सहि दइदमालदीजीविदे साहसोवण्णासिणि अवेहि । साम्रम् । अहवा अहं जेव्व वारं वारं पलोअअन्ती दुक्खव्ववत्थाविदधीरत्तणावट्ठम्भेण अत्तणो हिअएण दूरविज्जम्भ-

---

जीवलोकस्य गुरुकानुरागसदृशं महानुभाववल्लभसमागम इत्येतावज्जानीमः ।

(क) सखि दयितमालतीजीविते साहसोपन्यासिनि अपेहि । अथवा अहमेव वारं वारं प्रलोकयन्ती दुःखव्यवस्थापितधीरत्वावष्टम्भे-

---

चन्द्रस्याग्नित्वं जीवितसंशयं च कुरुते तस्य व्यक्तं दर्शनं त्वदुपन्यस्तप्रकारं तापं कुरुत इति किमत्र चित्रम् । चन्द्रेऽग्नित्वेन ज्ञानाग्निद्राच्छेद उक्तः । सुकुमारायामस्यामतिपीडाकारित्वेन निष्करुणत्वम् । व्यापारो दशावस्थः । किमत्र कर्तव्यमित्यत आह । तदिति । तथा च गुरुतरानुरागस्यैतत्फलं यत्सखीद्वारा वल्लभसमागमः कारयितव्य इति भावः ।

९१–९४ अत्र दयितं प्रियम् । महाकुलकलङ्कशङ्कया साहसम् ।

---

८९. जीव for जीअ K1. K2. N.O.; जं after °अस्स N.; गरुया° O. गरुगाअ° K2. गरुआ° C. D. K1. N. for गुरुआ°; °आनु° for °आणु° K1.; °राय O. °राअस्स N. for °राअ; सरिस A. Bh. D. O. सरिसो N. for सरिसं; महाभाअ B.C.N. महाभाय O. for महाणुभाअ; समागमो for समाअमो A. C. D. K2. O.

९०. एत्तियं for त्तिएत्तअं O ; जाणामि A for जाणीमो.

९१. K2. K1. om. सहि; दयिद O Bh. दइअ B. for दइद; मालती° for मालदी° K2.; °जीविते for °जीविदे O.; °सोपण° for °सोवण्णा° K1. K2.; °सिणी for °सिणि N.; अपेहि for अवेहि°.

९२. C. om. साम्रम्; ज्जेव K2. एव्व N. ज्जेव्व A. C. D. O. Bh. for जेव्व; विलोअंती Bh. पलोयंती O. विलोअंदी N. अवलोअंती B. for पलोअअन्ती; दुःखव्ववस्त्था° O. दुक्खविवत्था° Bh. दुक्खप्पडिट्ठा° N. दुःखावत्था° K1. दुक्खावत्था° B. K2. for दुक्खव्ववत्था°.

९३. विरत्तणा° for धीरत्तणा° K1.; °वथभेण Bh. °वत्थंभेण O. for °वट्ठम्भेण; मे for अत्तणो C.; हिमएण for हिअएण O.; दूरं for दूर° N.; विलिज्जंतलज्जत्तणेण Bh.

माणदुव्विणअलहुएण एत्थ अवरज्झामि। तथा वि पिअसहि।(क)

भूयः संस्कृतमाश्रित्य। ९५

ज्वलतु गगने रात्रौ रात्रावखण्डकलः शशी
दहतु मदनः किं वा मृत्योः परेण विधास्यति।
मम तु दयितः श्लाघ्यस्तातो जनन्यमलान्वया
कुलममलिनं न त्वेवायं जनो न च जीवितम्॥

---

नात्मनो हृदयेन दूरविजृम्भमाणदुर्विनयलघुकेनात्रापराध्यामि। तथापि प्रियसखि।

---

अत एव रोदनम्। तथा च त्वमपेह्यपगच्छ। प्रियभाषिणीं त्वां किमधिक्षिपामि यदहमेवात्र वाच्येत्याह। अथवेति। अत्र क्षणं क्षणमालोकनाकुलत्वाद्दुःखव्यवस्थापितं यद्धीरत्वं तस्यावष्टम्भोविद्यमानमेवैतदारोपस्तेनेत्यर्थः। लघ्वी लघुतां गता। अहमत्रापराध्यामीति येन तवैतादृशसाहसोपन्यास इति भावः। तथापि प्रियसखि।

९६–९९ अधुना साहसाकरणं हृदि निधाय सनिर्वेदमाह। ज्वलत्वित्यादि। प्रतिरात्रं पूर्णश्चन्द्रो ज्वलतु तापयतु। तथापि न साहसं करोमीति भावः। गगन इत्यनेनाप्राप्यत्वादनुपागमनीयतोक्ता। तर्हि कामस्त्वां पीडयिष्यतीत्यत आह। मदनो दहतु मृत्योर्मरणात्परं स किं करिष्यति। मरणे सति दुःखस्यापि त्यागादिष्टमेव तदिति

---

मिलंत° O. विलीअमाणलज्जा° N. विलइज्जन्त° A. °विअलिदलज्जेण D. विलज्जंतलज्जत्तणेण C. विगल° K2. °विलविजत्तलज्जत्तणेण Kl. for विजम्भमाण°.

९४. दुव्विणय° for दुव्विणअ° O. K2.; लहु N. लहुइ A. Bh. D. लहुई O. for लहुएण; अवरज्झाम्मि K2. अवरज्झम्मि N. O. अवज्झहि Kl. for अवरज्झामि; ता N. तहा B. O. K2. तह D. तदा Kl. for तथा; N. om. वि; प्पिय° O. for पिअ°.

९५. Bh. O. N. om. भूयः.

९६. नगरे for गगने K2.

९७. विधास्यतः for विधास्यति N.

९८. यदयं for दयित Bh.

१०० लव० । स्वगतम् । एत्थ दाणिं को उवाओ । (क)

अथ नेपथ्यार्धप्रविष्टा प्रतीहारी । एसा भअवदी कामन्दई । (ख)

उभे । किं भअवदी । (ग)

---

(क) अत्रेदानीं क उपाय: ।

(ख) एषा भगवती कामन्दकी ।

(ग) किं भगवती ।

---

भाव: । परेणेति ॥ प्रकृत्यादिभ्य उपसंख्यानमिति तृतीया ॥ इदं नायिकाया: सत्त्वजधैर्यम् । यदाह ।

चापलेनानुपहतं चित्तं धैर्यमुदीरितम् ॥

ननु दु:खहानाय माधवानुसरणमेव वरमत आह । मम पुनस्तात: पिता दयित इष्ट: । कीदृश: । श्लाघ्य: सर्वश्लाघाविषय: । अमलवंशा मातेष्टा । निर्मलं कुलं चेष्टम् । अयं हृदिस्थो जनो माधवो नैवेष्ट: । साहसक्रिययेति शेष: । तर्हि कथं जीवनमत आह । न च जीवितमिष्टम् । अत्र जीवितद्वेषादुद्वेगावस्था । यदाह ।

प्रद्वेष: प्राणितव्ये य: स उद्वेग: स्मृतो बुधै: ॥

१००-१०७ उद्वेगनाशोपायं चिन्तयन्ती लवङ्गिकाह । अत्रेदानीं क उपाय: । प्रतीहारी । एषा भगवती कामन्दकी । मालतीजीवनोपाय इति भाव: । प्रतीहारीत्यनेन संबन्धघटनं सूचितम् । यदाह ।

---

१००. दाणीं for दाणिं A. D.; उआओ for उवाओ Bh.

१०१. K2. which gives the Sanskrit rendering immediately after the Prâkrit reads only अत्रेदानीं भगवती कामन्दकी between उवाओ and उभे, l. 102. Bh. O. N. Kl. om. अथ; नेपथ्याध: for नेपथ्यार्ध° Bh.; दाणीं after एसा Kl.; भयवदी for भअवदी O.; कामन्दकी for कामन्दई. Kl.

१०२. भगवती Bh. भयवदी O. भअवई N. for भअवदी.

प्रती० । भट्टिदारिअं दट्ठुकामा आअदा । (क)

उभे० । तदो किं विलम्बीअदि । (ख)

प्रतीहारी निष्क्रान्ता । १०५

मालती चित्रं प्रच्छादयति ।

लव० । स्वगतम् । सुसमीहिदं क्खु जादं । (ग)

ततः प्रविशति कामन्दक्यवलोकिता च ।

काम०। साधु सखे भूरिवसो साधु । प्रभवति निजस्य कन्यकाजनस्य महाराज इत्युभयलोकाविरुद्धं वचनमुपन्यस्तम् । ११०

(क) भर्तृदारिकां द्रष्टुकामागता ।

(ख) ततः किं विलम्ब्यते ।

(ग) सुसमीहितं खलु जातम् ।

संधिविग्रहसंबन्धनानाचारसमन्वितम् ।

निवेदयन्ति याः कार्यं प्रतीहार्यस्तु ता मताः ॥

प्रतीहारीत्यत्र बहुलवचनान्मनुष्येपि दीर्घः ॥ उभयोर्वाक्ये । किमर्थमागतेत्यर्थः । अत एवाग्रिमवाक्ये तद्व्यापारकथनम् । सुसमीहितं खलु जातम् । इदानीं यत्कामन्दक्यागमनमिति भावः ।

११०–११९ उभयेति । इहलोकाविरुद्धं साक्षादप्रतिषेधेन राजकोपाजननात् । परलोकाविरोधस्त्वात्मीयस्य कुमारीजनस्य प्रभुर्न

१०३. भग° कामं° before भट्ट D.; भट्ट° for भट्टि° B. C. D. O.; °दारियं for °दारिअं K1. O.; दट्टुं for दट्टुकामा B. C.; आगदा for आअदा B. O. Bh. K2.

१०४. विलम्बे° for विलम्बी° N. O. Bh.

१०६. चित्रफलकम् for चित्रं A. Bh.; छादयति O. आच्छादयति A. K1, N, Bh, K2 for प्रच्छादयति.

१०७. सुसमाहिदं C. सुसमीहितं K1. for सुसमीहिदं; खु for क्खु K1. O. Bh ; एदं for जादं Bh.

१०९. N. K1. om. सखे; निज° for निजस्य B. C. N.; कन्या° for कन्यका° A. K1.

११०. उत्तरमुप° for वचनमुप° Bh. N. K1. K2. O.

अपि च । अद्य मन्मथोद्यानवृत्तान्तेन भगवतो विधेरनुकूलताम-
वगच्छामि । बकुलावलीचित्रफलकव्यतिकरसंविधानकौतुकम-
द्भुतं प्रमोदमुल्लासयति । इतरेतरानुरागो हि दारकर्मणि परार्ध्यं
मङ्गलम् । गीतश्चायमर्थोऽङ्गिरसा यस्यां मनश्चक्षुषोरनुबन्धस्त-
११५ स्यामृद्धिरिति ।

अव० । एसा मालदी । (क)

काम० । निर्वर्ण्य ।

निकामं क्षामाङ्गी सरसकदलीगर्भसुभगा
कलाशेषा मूर्त्तिः शशिन इव नेत्रोत्सवकरी ।

(क) एषा मालती ।

परस्येति साधारणोक्त्यासत्यानुदीरणादित्यर्थः । व्यतिकरो मिलनं तद्रूपं संविधानम् । दारकर्मणि परिणये । परार्ध्यं श्रेष्ठम् । अनुबन्धो रतिः । ऋद्धिरुपचयः ।

११८-१२१ निकाममित्यादि । इयं कल्याण्यस्माकं मनो रमयति । कुतः । अत्यर्थं क्षीणाङ्गी । सरस आर्द्रोपर्युषित इति यावत् ।

१११. मदनो° for मन्मथो° N.; O. om. भगवतो; Kl. om. भगवतो-कौतुकम्; विधेरप्यनु° for विधेरनु D. O.

११२. अभ्यवगच्छामि C. अभ्यवगच्छामि K2. for अवगच्छामि; बकुलमाला° for बकुलावली° N.; अपि C. N. O. कमपि Kl. Bh. K2. ममापि N. किमपि B. before अद्भुतम्; संविधानकं तु K2. संविधानं तु N. Bh. संविधानकम् B. for संविधानकौतुकम्.

११३. अद्भुत for अद्भुतं O.; N. om. प्रमोदम्; °तरगुणानुरागिणोर्हि for °तरानुरागो हि B.; Bh. om. हि; परार्धं for परार्ध्यं A.

११४. अङ्गम् for मङ्गलम् K2.; C. N. om. अङ्गिरसा; वाङ् before मनश्च° A.; अनुरागः K2. निबन्धः N. for अनुबन्धः.

११५. सिद्धिरिति for ऋद्धिरिति O.

११६. प्रती° for अव° Kl. K2.; एषा for एसा Kl. K2.; मालती for मालदी O.

११७. दृष्ट्वा before निर्वर्ण्य B. Bh.; विलोक्य for निर्वर्ण्य O.

अवस्थामापन्ना मदनदहनोद्दाहविधुरा- १२०

मियं नः कल्याणी रमयति मनः कम्पयति च ॥

अपि च। परिपाण्डुपांसुलकपोलमाननं

दधती मनोहरतरत्वमागता।

रमणीयजन्मनि जने परिभ्रम-

ल्लँलितो विधिर्विजयते हि मान्मथः॥ १२५

नियतमनया संकल्पनिर्मितः प्रियसमागमोनुभूयते। तथा ह्यस्याः

नीवीबन्धोच्छ्वसनमधरस्पन्दनं दोर्विषादः

स्वेदश्चक्षुर्मसृणमधुराकेकरास्निग्धमुग्धम्।

---

कदल्या गर्भो मज्जा तद्वद्रम्या क्षीणत्वपाण्डुत्वाभ्याम्। इह गर्भपदेनातिपाण्डुत्वं कोमलत्वं चोक्तम्। कलाशेषा शशिनो मूर्तिरिव द्वितीयाचन्द्रलेखेव। अत एव प्रस्तुतकार्यसंपादकत्वेन रमयति। उद्दाहेनोत्कटदाहेन विह्वलां दशामापन्ना सती मनः कम्पयति। अतिपीडनादनिष्टाशङ्कित्वादिति भावः। इह तनुताख्या कामदशा सूचिता।

१२२–१३१ परीत्यादि। पांसुलं रूक्षम्। पाण्डुरूक्षकपोलवदनापीयं रम्या। यतो मनोज्ञजन्मनि जने बलन्कामस्य विकारो यादृशस्तादृश ईप्सितः सन्विजयी भवति। संकल्पो मनोव्यापारः। नीवीत्यादि। जघनवस्त्रबन्धनं नीवी। तस्या बन्धस्य ग्रन्थेरुच्छ्वसनं शिथिलता। वासःश्लथतानुरागादपि। यदाह।

---

१२०. °नोन्माद N. °नोद्दाम° B. C. for °नोद्दाह°.

१२२. पांशुल for पांसुल° Bh.

१२४. परिस्फुरन् for परिभ्रमन् K2.

१२६. A. B. C. D. insert अथवा before नियत°; कृत before संकल्प° Kl. K2.; कल्प° for संकल्प° Bh.; निर्मित° for निर्मितः N.; अतो for तथा O.

१२९. खेदश्च° for स्वेदश्च° Kl.; मुकुलाकेकर Bh. O. मुकुलाकेसर N. for मधुराकेकर; °तारं for °मुग्धम् A.

११० गात्रस्तम्भः स्तनमुकुलयोरुत्प्रबन्धःप्रकम्पो
गण्डाभोगे पुलकपटलं मूर्छना चेतना च ॥
इत्युपसर्पति ।

---

स्वेदोरुवेपथुस्तम्भाः श्लथता जघनच्छदे ।
आविर्भवति नारीणामनुरागवशात्मनाम् ॥

अधरस्पन्दनमधरकम्पनम् । एतत्तु स्फुरितचुम्बने । यदाह ।

रदने विश्रान्तमोष्ठं ग्रहीतुं या समिच्छति ।
निजोष्ठः कम्पते यच्च स्फुरितं चुम्बनं मतम् ॥

दोर्विषादो बाह्वोर्निःसहत्वम् । आलिङ्गनसौख्यात् । स्वेद आयासात् । मसृणं कोमलम् । मधुरं ललितम् । संकल्पलब्धस्य दुरालोकत्वादाकेकरम् । शृङ्गारात्स्निग्धम् । सुखभावनया मुग्धम । चक्षुः । संकल्पमात्रलब्धतया प्रियेसूयायोगाज्जिह्मा दृष्टिः । जिह्मा दृष्टिरसूयायाम् । यदाह ।

ललिताकुञ्चितपुटा शनैस्तिर्यग्विसर्पिणी ।
निगूढागूढतारा च जिह्मा दृष्टिरुदाहृता ॥

लब्धे सति धृतिहर्षाभ्यां ललितम् । तल्लक्षणं तूक्तमेव ।

आकेकरा घनालोके विच्छेदे प्रोषितेषु च ।
आकुञ्चितपुटापाङ्गसंगतार्धनिमेषिणी ।
मुहुर्व्यावृत्ततारा च दृष्टिराकेकरा मता ॥

दोर्दोषा भुजा भुज इति शब्दभेदः । गात्रस्तम्भः शरीरनिश्चलता । अतिहर्षात् । यदाह ।

अतिहर्षभयरोषरागेभ्यः स्तम्भसंभवः ॥

मुकुलाकारत्वात्स्तनावेव मुकुलौ । तयोरुत्प्रबन्धो विच्छेदरहितः कम्पः । प्रियस्य गाढालिङ्गनात् । गण्डाभोगे गण्डमण्डले पुलकपटलं

---

११० कलशयो° for मुकुलयो O.; उत्सबंधः for उत्प्रबन्धः C.
११२. O. Bh. N. om. इति.

लवङ्गिका मालतीं चालयति। उभे उत्तिष्ठतः।

माल॰। भअवदि वन्दामि। (क)

काम॰। महाभागे समीहितफलभाजनं भूयाः। १३५

लव॰। सुविहिदं आसणं। एत्थ उवविसदु भअवदी। (ख)

सर्वा उपविशन्ति।

माल॰। कुसलं भअवदीए। (ग)

---

(क) भगवति वन्दे।

(ख) *सुविहितमासनम्। अत्रोपविशतु भगवती

(ग) कुशलं भगवत्याः।

---

रोमाञ्चसंघः। प्रियचुम्बनसंकल्पात्। आत्यन्तिकत्वार्थं पटलग्रह-णम्। मूर्छना मोहः। निरतिशयानन्दयोगात्। यदाह।

स्रस्तता वपुषि मीलनं दृशोर्मूर्छना च रतिलाभलक्षणम्॥

रतिविलाससंकल्पेनान्तरा चेतना च।

१३४–१४४ बौद्धानां प्रव्रजितं प्रति वन्दामीति नतिसंप्रदा-यः। यद्वा। वन्दामि वन्द इति सामान्यत एव। मालतीचित्तवि-नोदाय स्वस्य च तद्विषयावष्टम्भदर्शनायाह। भाजनमिति। कपटमेव नाटकम्। अत्र बाष्पं नेत्रजलम्। स्तम्भः प्रतिबन्धः। मन्थरितो मन्दी-

---

१३३. चालयित्वा for चालयति A. B. Bh. C. K1. K2.; मालदि इदो after चा-त्वा A.

१३४. भयवदि O. भगवदि K2. for भअवदि.

१३५. निःश्वस्य after काम॰ O.; वत्से महाभागधेयजन्मतायाः फलस्य N.; महाभागजन्मतायाः फलस्य O. for महाफल॰; अभिमत॰ for समीहित॰ A.; फलस्य for फल॰ D. K1. K2.

१३६. एदं A. एदं पवित्तं N. विवित्तं O. for सुविहिदं; N. om. एत्थ-वदी; उप-विसदु for उवविसदु O.; भयवदी for भअवदी O.

१३८. भय॰ for भअ॰ O.; D. om. भअवदीए.

* दत्तमासनम् C. om.

काम० । निःश्वस्य । कुशलमिव ।

१४० लव० । स्वगतम् । पत्थावणा क्खु एसा कवडणाडअस्स । प्रकाशम् । गुरुअवाहत्थम्भमन्थरिदकण्ठपडिलग्गणीसासं अण्णारिसं जेव्व भअवदीए वअणं । ता किं दाणिं उव्वेअकारणं भविस्सदि । (क)

काम० । नन्वयमेव चीरचीवरविरुद्धः परिचयः ।

१४५ लव० । कधं विअ । (ख)

काम० । अयि त्वमपि किं न जानासि ।

इदमिह मदनस्य जैत्रमस्त्रं सहजविलासनिबन्धनं शरीरम् ।

---

(क) प्रस्तावना खल्वेषा कपटनाटकस्य । गुरुकबाष्पस्तम्भमन्थरितकण्ठप्रतिलग्ननिःश्वासमन्यादृशमेव भगवत्या वचनम् । तत्किमिदानीमुद्वेगकारणं भविष्यति ।

(ख) कथमिव ।

---

कृतः । तादृशकण्ठे प्रतिलग्नो निःश्वासो यत्र तत् । परिचयो मालत्यभिष्वङ्गः । उद्वेगकारणमिति शेषः ।

१४७-१५२ इदमित्यादि । मालत्या इदं शरीरं विफलगुणातिशयं भविष्यतीति त्वं किं न वेत्सि । अनुचितजामातृसंबन्धशोचना-

---

१३९. निश्वस्य for निःश्वस्य Bh.

१४०. प्पत्थावणा for पत्थावणा O.; खु for क्खु Bh. K2. O.; °नाडअस्स Bh. नाडयस्स O. for° णाडअस्स.

१४१. गरुअ° B. K2. गरुय O. for गुरुअ; वाह्य° for वाह° K2.; वाहभरत्थम्भ for वाहत्थम्भ N.; परिलग्गणिस्सासणिग्गमं K1. K2. परिलग्गणिग्गमं Bh. O. प्पडिलग्गणिग्गमं N. for पडि—सासं; निस्सासं for णीसासं B. C.

१४२. अणारिसं for अण्णारिसं K1. K2.; ज्जेव्व A. B. C. D. O. विअ N. for जेव्व; भय° for भअ° O.; वयणं for वअणं O.; दाणीं A. D. ति एत्थ O. for दाणिं उव्वेय for उव्वेअ O. कालणं for कारणं N.

१४३. हुविस्सदि B. हविस्सदि N. for भविस्सदि ; त्ति after °स्सदि O.

१४४. N. om. ननु.

१४५. कहं for कधं D. K2. N. O.; विय for विअ O.

१४६. B. C. Om. त्वमपि ; K2. A. om. किं; वेत्सि for जानासि A.

अनुचितवरसंप्रयोगशोच्यं विफलगुणातिशयं भविष्यतीति ॥

मालती वैचित्र्यं नाटयति ।

लव०। अत्थि एदं णरेन्दवअणाणुरोहिणा अमच्चेण णन्द- १५०
णस्स पडिवण्णा मालदित्ति सअलो जणो अमच्चं जुगुच्छेदि। (क)

माल०। स्वगतम्। कधं उवहारीकिदम्हि राइणो तादेण। (ख)

---

(क) अस्त्येतन्नरेन्द्रवचनानुरोधिनामात्येन नन्दनस्य प्रतिपन्ना मालतीति सकलो जनोमात्यं जुगुप्सते।

(ख) कथमुपहारीकृतास्मि राज्ञस्तातेन।

---

वहम्। यतः। इह जगति यत्कामस्य जैत्रं जयनशीलमस्त्रं सहजविलासस्य निबन्धनं कारणं च। एतेनैव सहजविलासा जायन्त इत्यर्थः॥ वरो जामातरि श्रेष्ठ इति विश्वः॥ वैचित्यं विमनस्कत्वम्। नाटयति करोति। पितृनिन्दैव पूर्वश्लोकार्थ इति द्योतयति लवङ्गिका। [अस्त्येतदिति]। अत्र जुगुप्सते निन्दति। अत्रानुपहरणीयाप्युपहारीकृतेत्यनेन व्यर्थेन पितुर्गुणानभिज्ञत्वं सूचितम्। उपहारश्च मरणभरणच्छागादिः क्रियत इति मरणतुल्यतास्य दर्शिता। इह पश्चात्तापनामा नाट्यालंकारः। यदाह।

अनुतापातिरेकस्तु पश्चात्ताप उदाहृतः॥ इति।

---

१४९. वैचित्र्यं for वैचित्यं C. N.

१५०. एत्थं for अत्थि N.; जं after एदं N. णरिंदं for णरेन्द° O.; वयणा for वअणा° O.; णरेंदवअणोनुरोहेण for णरे—णा Kl., °णानु° for °णाणु° Bh., °रोधेण N. °रोधिणा O. for रोहिणा; णन्दणस्स अमच्चेण for अम–°णस्स O.; Kl. N. om. अमच्चेण.

१५१. पडिपण्णा B. C. Kl. K2. पडिण्णादा N. प्पडिवण्णा O. for पडिवण्णा; °दीति for °दित्ति K2; सयलो for सअलो O.; एव्व D. एव Kl. K2. after सअलो; B. om. अमच्चं; जुगछेदि O. जुगुत्थदि Kl. K2. जुउञ्छइ N. जुगुच्छदि Bh. for जुगुच्छेदि.

१५२. Kl. om. माल°–तादेण; B. Bh. om. स्वगतम्; कहं for कधं D. K2. N.; उप° for उव° O.; °कदम्मि for °किदम्मि Bh. K2; तातेण for तादेण K2.

काम० । आश्चर्यम् ।

गुणापेक्षाशून्यं कथमिदमुपक्रान्तमथ वा
१५५ कुतोपत्यस्नेहः कुटिलनयनिष्णातमनसाम् ।
इदं त्वैदंपर्यं यदुत नृपतेर्नर्मसचिवः
सुतादानान्मित्रं भवतु स हि नो नन्दन इति ॥

माल० । स्वगतम् । राआराहणं क्खु तादस्स गुरुअं ण उण मालदी । (क)

१६० लव० । एव्वं जधा भअवदीए आणत्तं । अण्णधा तस्सिं वरे

(क) राजाराधनं खलु तातस्य गुरुकं न पुनर्मालती ।

(ख) एवं यथा भगवत्याज्ञप्तम् । अन्यथा तस्मिन्वरे दुर्दर्शनेति-

१५३–१६० बालत्वात्स्नेहाच्च तातस्य गुणानभिज्ञत्वं मालती न जानातीत्याशयेनाह । गुणेत्यादि । इदं कार्यं गुणनिरपेक्षममात्येन कथमारब्धम् । रूपादिमति पुरजने सति तद्रहितनन्दनाय मालतीदानं कथमुपक्रान्तमिति भावः । अत एवाश्चर्यम् । अथवा पक्षान्तरे । कुटिलनये परवञ्चननीतौ कुशलचित्तानां कुतोपत्यस्नेहः । नैवेत्यर्थः । स्नेहस्य निरुपाध्युपकारेच्छारूपस्य नृपानुरञ्जनादावुपाधावभावादित्यर्थः । इदं यदुपक्रान्तं तदैदंपर्यमिदंपरम् । एतदभिप्रायकमिति यावत् ॥ चतुर्वर्णादित्वादिदंपरशब्दे ष्यञ् ॥ उत निश्चये वितर्के वा । यन्नृपतेर्नर्मसचिवो नन्दनः कन्यादानादस्माकं मित्रमनपकारी भवत्वित्येवमुपक्रान्तम् ॥ निष्णात इत्यत्र निनदीभ्यां स्नातेः कौशल इति षत्वम् ॥ उत निश्चयवितर्कयोरिति धरणिः ॥ कामोपचरणं नर्म । यदाह ।

१५३. आश्चर्यम् twice for आश्चर्यम् K1. K2. N.

१५७. सचिवो Bh. स भवान् N. भगवान् O. सचिवान् C. for सहि नो; मे for नो A.

१५८. B. O. om. स्वगतम्; खु for क्खु K1. K2. O.; वहुमदं Bh. बहुमदं B. C. D. K1. K2. गरुअं O. for गुरुअं; णो for ण N.

१६०. एवं A. B. सच्चं N. for एव्वं; जह for जधा B. Bh. C. O.; N. om. जधा; भअदीए K1. भयवदीए O. for भअवदीए; अण्णदा K1. अण्णहा N. O. अणधा Bh. for अण्णधा.

दुद्दंसणे अदिक्कन्तजोव्वणे किं त्ति ण विआरिदं अमच्चेण । (ख)

माल० । स्वगतम् । हा हदाम्हि समुत्थिदाणत्थवज्जपडणा मन्दभाइणी । (क)

लव० । ता भअवदि पसीद परित्ताहि इमादो जीविदमरणादो पिअसहिं तवावि एसा दुहिदा जेव्व । (ख) १६५

काम० । अयि सरले किमत्र मया भगवत्या शक्यम् । प्रभवति

क्रान्तयौवने* किमिति न विचारितममात्येन ।

( क ) हा हतास्मि समुत्थितानर्थवज्रपतना मन्दभागिनी ।

( ख ) तद्भगवति प्रसीद परित्रायस्वास्माज्जीवितमरणात्प्रियसखीं तवाप्येषा दुहितैव ।

उपचारः स्त्रीपुंसयोर्मनोजन्मनिबन्धनः ।
स एवात्र परिज्ञेयो नर्मसंज्ञः प्रयोक्तृभिः ॥

इति भरतः ।

१६१–१७० इतीति दुर्दर्शनादिकम् । अत्र जीवितमपि निष्फलत्वदुःखबहुलत्वाभ्यां मरणकल्पं जीवितमरणम् । उक्तप्रबन्धेन मालतीनैराश्यं विधायाह । अयीति ॥ भगवत्येति कृत्यानां कर्तरि वेति तृतीया

१६१. दुदंसणी K1. K2. दुईसणो Bh. for दुदंसणे; जोवणेत्ति Bh. °जोव्वणेत्ति B. °जोबणी K1. K2. for जोव्वणे; किंग्ति K2. किंति O. किंत्ति Bh. K1. for किंत्ति A. om. त्ति; विआरितं Bh. विआरिअं A. विभाविदं D. for विआरिदं; O. om. अमच्चेण.

१६२. समुवत्थिदाणत्थ° A. K1. K2. समुत्थिदणत्थ° B. समुवत्थिदं अणत्थ° Bh. समुट्ठिदाणत्थ° D. समुपत्थिदाणत्थ° N. समुवट्ठिदाणत्थ° O. for समुत्थिदाणत्थ°; °पदणा A. N. °वेदना B. वडणं Bh. °वडणा C. K1. K2. O. for °पडणा.

१६३. °भाइणीए for °भाइणी Bh.; अहं after °भाइणी. B.

१६४. K1. om. ता; पसीददु भअवदी A. N. पसीद भअवदि Bh. प्पसीद भयवदी O. for भअ°—सीद; पसीद twice for पसीद K1. K2.; परित्ताअहि N. परित्ताएहि O. for प—हि; अध K1. अज्ज K2. before इमादो; N. om. इमादो; एत्तो for इमादो O.; जीवण A. जीव N. जीवित O. for जीविद.

१६५. पिय° K1. प्पिय° O. for पिअ°; सहीं for °सहिं A. B. K1. K2.; तवावि K1. K2. O. तुहावि N. for तवावि; दुहिद Bh. O. दुहिदिआ K1. K2. for दुहिदा; ज्जेव्व A. Bh. C. D. O. ज्जेव B. एव्व N. for जेव्व.

१६६. अपि for अयि C. D.; भवत्या मया for म—त्या Bh.; D. K1. K2. N. O. om. मया; भवत्या K1. K2. भगवत्याः O. for भगवत्या.

* °यौवने इति Com.

प्रायः कुमारीणां जनयिता दैवं च । यच्च किल कौशिकी शकुन्तला दुष्यन्तमप्सराः पुरूरवसं चकम इत्याख्यानविद आचक्षते वासवदत्ता च संजयाय राज्ञे पित्रा दत्तमात्मानमुदयनाय प्राय-
१७० च्छादित्यादि तदपि साहसाभासमित्यनुपदेष्टव्य एवायमर्थः ।

सर्वथा

राज्ञः प्रियाय सुहृदे सचिवाय कार्या-
द्दत्वात्मजां भवतु निर्वृतिमानमात्यः ।

---

न तु षष्ठी । अशक्यमित्यकारप्रश्लेषसंभवात् ॥ गान्धर्वविवाहे कन्यावरौ प्रभवत इति प्रायःपदतात्पर्यम् । जनयितेति । न राजेति भावः । माधवविवाहे भूरिवसुरेव सानुग्रहः । अत एव सरल इत्युक्तम् । किल प्रसिद्धौ । कौशिकी कुशिकवंशजा । चकमे कामयते स्म । आख्यानं पुरावृत्तम् । इहाख्याननामा नाट्यालंकारः । यदाह ।

आख्यानं तु तदुद्दिष्टं यत्पुरावृत्तकीर्तनम् ॥ इति ।

निदर्शननामा नाट्यालंकारोपि । यदाह ।

कथनादन्यचेष्टानां साध्यसिद्धिर्निदर्शनम् ॥ इति ।

कल्पपदेनोपदेष्टव्यत्वसूचनम् ।

---

१६७. D. om. प्रायः; प्रायशः Bh. हि Kl. K2. for प्रायः; तद्वंशज° Kl. तद्वंशजाः K2. before दैवं; N. om. किल.

१६८. °न्तमुर्वशी चाप्स° D. °न्तमुर्वशी वाप्स° Kl. K2. for °न्तमप्स° °प्सरस उर्वशी पुरू° for °प्सराः पुरू° O.; चारमतेत्या° for चकम इत्या° N.

१६९. Kl. om. च; प्रदत्तम् Bh. C. दत्ताम् D. for दत्तम्; दत्ता आत्मा° for दत्तमात्मा° Kl. K2.; D. om. आत्मानम्.

१७०. D. Kl. om. तदपि; साहसिकयम् A. Kl. K2. साहसकल्पम् D. N. for साहसाभासम्; N. Kl. om. इति; °देष्टव्यकल्पं A. °देष्टव्यकल्प एवायमर्थः Bh. °देष्टव्यमेतत् D. °दिष्टमेतत् Kl. K2. °देष्टव्यमेव N. देष्टव्यकल्पोयमर्थः O. for °देष्टव्य—र्थः.

१७१. Kl. K2. om. सर्वथा.

१७२. भार्यां for कार्याद् C.

दुर्दर्शनेन घटतामियमध्यनेन
धूमग्रहेण विमला शशिनः कलेव ॥ १७५

मालo । सास्रं स्वगतम् । हा ताद तुमं पि मम णाम एव्वं त्ति सव्वधा जिदं भोअतिह्लाए । (क)

अवo । चिराइदं भअवदीए । णं भणामि अस्सत्थसरीरो महाभाओ माहवो त्ति । (ख)

कामo । इदं गम्यते । वत्से अनुजानीहि माम् । १८०

---

(क) हा तात त्वमपि मम नामैवमिति सर्वथा जितं भोगतृष्णया।

(ख) चिरायितं भगवत्या । ननु भणाम्यस्वस्थशरीरो महाभागो माधव इति ।

---

१७२–१८४ अधुना साहसेपि प्रवृत्त्यर्थं मालत्यनुशयाय पितुर्वरस्य च दोषमाह । राज्ञ इति । कार्यादाराधनादेर्न त्वदृष्टार्थमित्यर्थः । अनेन सचिवेन । वार्धक्यात्कौरूप्याच्च दुर्दर्शनेन । धूमग्रहेण राहुणोत्पातधूमग्रहेण वा । पीडाकारित्वाद्दुर्दर्शनेन वा । ग्रहणं ग्रहः । मालती जातानुशयाह । [ हा तातेति ] एवं निःस्पृह इत्यर्थः । भोगेति । स्वभोगाय त्वमेवं करोषीत्यर्थः । अत्र चिरायितं बहुकालमागतम् । इतीति । अतः शीघ्रं गम्यतामिति भावः । जनान्तिकमिति ।

उक्तस्याश्रवणं कार्यात्पार्श्वस्थैः स्याज्जनान्तिकम् ॥

---

१७६. N. O. om. सास्रं; K1. K2. om. स्वगतम्; वि for पि N.; B. om. मम; मह for मम N.; णाम मम for मम णाम Bh.; एव्वत्ति Bh. एवं ति O. for एव्वं त्ति; ति for त्ति K1.

१७७. सव्वहा for सव्वधा N.; भोग° for भोअ° K1. K2. O.; तिह्णीए C. तिह्नाए K1. for तिह्लाए.

१७८. चिरायिदं for चिराइदं K2. O.; भअवत्या K2. भयवदीए O. for भअवदीए; माहवो before णं instead of before त्ति N.; असुत्थ° A. असत्थ° B. Bh. C. D. K1. K2. for अस्सत्थ°; °चित्तो for °सरीरो N.; क्खु D. सो K1. K2. N. before महा°.

१७९. °णुभावो N. °माअ O. for °माओ.

१८०. A. om. इदं; K2. om. वत्से; गमनाय after माम C. D. K1. K2. N.

लव० । जनान्तिकम् । सहि मालदि संपदं भअवदीसआसादो तस्स महाणुभावस्स उग्गमं जाणीमो । (क)

माल० । सहि अत्थि मे कोदूहलं । (ख)

लव० । प्रकाशम् । को एसो माहवो णाम जस्स भअवदी

१८५ सिणेहगुरुअं अत्ताणं धारेदि । (ग)

काम० । अप्रास्ताविकी महत्येषा कथा ।

---

( क ) सखि मालति सांप्रतं भगवती*सकाशात्तस्य महानुभावस्योद्गमं जानीमः ।

( ख ) सखि अस्ति मे कौतूहलम् ।

( ग ) किं एष माधवो नाम यस्य भगवती स्नेहगुरुकमात्मानं धारयति ।

---

इति भरतः । लवङ्गिका मालतीं साकाङ्क्षयति† [सखि मालतीत्यादि] । उद्गममुत्पत्तिम् । अस्तिमे कुतूहलम् । तत्पृच्छेत्यर्थः । अत्र [लव० वा०] यस्य कृत इति शेषः ।

१८६-१९० सकृत्रिमावहित्थमाह । अप्रास्ताविकीति । अयमा-

---

१८१. N. om. संपदं; संपदि for संपदं O.; भअवदीए A. Bh. D. N. भयवदी O. for भअवदी°; सयासादो for सआसादो O.

१८२. °णुभाअस्स A. Bh. C. K1. °भाअस्स D. °णुहावस्स N. for °णुभावस्स.

१८३. अपवार्य before सहि B. C.; तहेव before सहि B.; तथैव अत्थि सहि for सहि अत्थि Bh.; सखि for सहि K2.; एत्थ before मे N.; कुदूहलं for कोदूहलं K2.

१८४. K1. om. लव०; भअवदि A. भयवदि O. before को; एस for एसो O.; O. om. णाम; जोअं (छाया-यस्य) K1. जं K2. जस्सिं N. जेण O. for जस्स; भयवदी for भअवदी O.; एव्वं after °वदी N.

१८५. सणेह for सिणेह K1. K2.; गरुअं B. Bh. C. D.; उरुअं K1. गरुयं O. for गुरुअं; अत्ताणअं Bh. C. D. अप्पाणअं K1. K2. for अत्ताणं.

१८६. अप्रस्ताविकी A. C. D. K2. अप्रस्ताविनी Bh. अप्रस्तावनीया N. for अप्रास्ताविकी; एव after महती D.

* भगवत्याः Com. † Com. follows A.

लव० । तधावि आचक्खदु भअवदी । पसादं करेदु । (क)

काम० । श्रूयताम् । अस्ति विदर्भाधिपस्य नरपतेरमात्यः समग्रधुर्यपुरुषप्रकाण्डचक्रचूडामणिर्देवरातो नाम यमशेषभुवनमहनीयपुण्यमहिमानमात्मनः सतीर्थ्यं पितैव ते जानाति १९० योसौ यादृशश्चेति । अपि च ।

व्यतिकरितदिगन्ताः श्वेतमानैर्यशोभिः
सुकृतविलसितानां स्थानमूर्जस्वलानाम् ।

---

[ क ] तथाप्याचष्टां *भगवती । प्रसादं करोतु ।

---

शयः । माधवगुणस्तुतावुपाधिमाशङ्क्य मालत्या अनादरे मम तटस्थता न घटेत । अतः सानुबधं पृच्छत्विति सानुबन्धमियमप्याहेति । समग्रः संपूर्णः । धुरि कार्यभारे साधुर्धुर्यो मन्त्री । प्रकाण्डं प्रशस्तम् । चूडामणिरिव चूडामणिः श्लाघ्यः । सर्वमन्त्रिप्रधानमित्यर्थः । महनीयं पूज्यम् । पुण्यं प्रशस्तम् । यद्वा । महनीयौ पुण्यमहिमानौ यस्य तम् । सतीर्थ्य एकगुरुः । समानं तीर्थमुपाध्यायो यस्य । तीर्थे इति [ समानतीर्थे वासीति? ] यत्प्रत्ययः ।

१९२–१९५ व्यतिकरितेत्यादि । इह जगति कथमपि शापादिना तादृशाः स्वर्गिणः संभवन्ति । कीदृशाः । यशोभिर्व्याप्तदिक्स्वरूपाः ।

---

१८७. तथावि B. K2. तहवि D. N. तहावि K1. for तधावि; चक्खदु B. अक्खदु Bh. आक्खेदु K1. आचक्खेदु K2. आचक्खिअदु N. कहेदु O. for आचक्खदु; मे before भअवदी A. B. Bh.; भयवदी for भअवदी O.; मे after पसादं B.; करेदु-प्पसादं for पसा-दु O. ; करोड for करेदु K2.

१८८. °धिपतेरमा° for °धिपस्य नरपतेरमा° A. D. N., स after °रमात्यः K1.

१८९. समस्त° for समग्र° B. D. K1. K2. O. ; B. Bh. C. N. O. om. धुर्य; N. om. चक्र.

१९०. B. om. आत्मनः सतीर्थ्यं; स्वतीर्थ्यात् for सतीर्थ्यं N.

१९१. D. om. योसौ; तादृशः after यादृशः B. Bh. * कथयतु Com.

अकलितमहिमानः केतनं मङ्गलानां

१९९ कथमपि भुवनेस्मिंस्तादृशाः संभवन्ति ॥

माल० । जनान्तिकम् । सहि तं क्खु भअवदीगहिदणाम-हेअं सव्वदा तादो सुमरेदि । (क)

लव० । सहि समं किल विज्जाहिगमो किदो त्ति तक्कालवे-दिणो मन्तअन्ति । (ख)

---

(क) सखि तं खलु भगवतीगृहीतनामधेयं सर्वदा तातः स्मरति ।

(ख) सखि समं किल विद्याधिगमः कृत इति तत्कालवेदिनो मन्त्रयन्ते ।

---

श्वेतमानैरिति वर्तमाननिर्देशेन तेषामभिनवयशोयोगित्वमुक्तम् । बल-वतां पुण्यविपाकानां त एव स्थानम् । त एव महासुकृतिन इत्यर्थः । यद्वा । पुण्यविलासानां बलवतां च त एव स्थानम् । तथा च पुण्यवन्तो बलवन्तश्च त एवेत्यर्थः । अत एवाधिकमहत्त्वाः । मङ्गलानामर्थसिद्धीनां केतनं निवासः ॥ केतनं तु ध्वजे कार्ये निमन्त्रणनिवासयोरिति विश्वः ॥

१९६–१९९ अत्र नामाग्रहणं श्वशुरत्वेनाङ्गीकारात् । गुरोर्नाम न गृह्णीयादिति स्मृतेः । तं देवरातम् । अत्र समं तुल्यं यथा तथा पाठः कृतो देवरातभूरिवसुभ्याम् । मन्त्रयन्ते कर्णाकर्णिकया वदन्ति ।

---

१९६. अपवार्य D. K1. for जनांतिकं; A. B. Bh. C. K2. O. om. ज–कं after माल०; एदे for तं K1.; N. om. क्खु; खु for क्खु Bh. K1. K2. O.; भयववदी for भअवदी O.; °वदीए for °वदी N.; गहिअ B. घहीद K2. गहीद O. for गहिद; °धेअं A. C. D. K1. °धेयं Bh. K2. °हेयं O. for °हेअं; सव्वहा for सव्वदा N.; तातो for तादो K2.

१९७. सुमरादि for सुमरेदि K1.

१९८. B. om. किल; क्खु A. खु K1. for किल; भअवदीए तित्थसआसादो after किल N.; विज्जधि° B. Bh. K1. K2. विज्जाधि° C. for विज्जहि°; कदो for किदो A. Bh. C. D. K1. N.; संवेदिनो A. वेदी जणो B. Bh. C. वेदिनो K1. for वेदिणो.

१९९. मन्तान्ति A. O. मन्तेदि. B. Bh. C. मन्तेन्ति K1. मन्तयते K2. for मन्तअन्ति.

काम०। तत उदयगिरेरिवैक एव
स्फुरितगुणद्युतिसुन्दरः कलावान्।
इह जगति महोत्सवस्य हेतु-
र्नयनवतामुदियाय बालचन्द्रः॥ २००

लव०। जनान्तिकम्। सहि अवि णाम माहवो भवे। (क)

काम०। असौ विद्याधारः शिशुरपि विनिर्गत्य भवना-
दिहायातः संप्रत्यविकलशरच्चन्द्रमधुरः। २०५

(क) सखि अपि नाम माधवो भवेत्।

२००-२०३ प्रकृतसिद्ध्यर्थं पितृगुणानुक्त्वा नायकगुणानाह तत इत्यादि। ततो देवरातादेक एव बालश्चन्द्र उदियाय। एको बालो जात इत्यर्थः। यद्वा। बालश्चन्द्र इव बालचन्द्रः। एकापत्यतया स्नेहाधिक्यसूचनार्थमेकग्रहणम्। धरायामेकाधिपत्यकथनाय वा। कीदृशः। स्फुरिता व्यक्तीकृता गुणानां शीलादीनां या द्युतिरौज्ज्वल्यं तया सुन्दरः। यद्वा। स्फुरितगुणद्युतिश्चासौ सुन्दरश्चेति। कलावाँश्चतुःषष्टिकलायुक्तः।

नायके वर्णयेद्दूती कलावत्त्वं च रम्यताम्॥

इति भरतः। नयनवतां चक्षुष्मतां महोत्सवस्य कारणम्। नेत्रप्रीतिजनकत्वात्। यथोदयगिरेरेको बालचन्द्रोऽभिनवशश्युदेति सोऽपि स्फुरितगुणोन्मीलन्नैर्मल्यादिका या द्युतिः प्रभा तया सुन्दरः कान्तः कलावान्नेत्रानन्दहेतुश्च भवति।

२०५-२०९ बालत्वादितस्तदनागमनमाशङ्क्याह। असावित्यादि। असौ शिशुरपि बालोऽपि संप्रतीहागतः। अस्तीति शेषः। कीदृशः। विद्याधारः। त्रयीतदङ्गविद्यावित्। बालः पञ्चदशवर्षवयस्कः। बालो वाप्यूनषोडश इति वचनात्। भवनाद्विनिर्गत्य बहिर्भूय। अनेन

२०४. K2. om. सहि; सो after माहवो B.; हवे for भवे N.

यदालोकस्थाने भवति पुरमुन्मादतरलैः
कटाक्षैर्नारीणां कुवलयितवातायनमिव ॥

अत्र बालसुहृदा मकरन्देन सह विद्यामान्वीक्षिकीमधिगच्छति । एष माधवो नाम । २१०

माल० । सानन्दं जनान्तिकम् । सहि सुदं तुए । (क)

लव० । सहि कुदो वा महोदहिं वज्जिअ पारिजादस्स उग्गमो त्ति । (ख)

---

(क) सखि श्रुतं त्वया ।
(ख) सखि*कुतो वा महोदधिं वर्जयित्वा पारिजातस्योद्गम इति ।

---

पथिकत्वमपास्तम् । यौवनमाह । अविकलः पूर्णो यः शारदशशी तस्मान्मनोज्ञस्तद्वद्वा मनोज्ञः । यद्दृष्टिविषये पुरं नारीणां कटाक्षैः संजातनीलनलिनगवाक्षमिव भवति ॥ कुवलयितमित्यत्र तारकादित्वादितच् ॥ कीदृशैः । उन्मादतरलैः कामावेशचपलैः । यदायं रथ्यया याति तदोन्मादान्विता युवत्यो वातायनेनैनं पश्यन्ति । तत्तु तन्नयनैः संजातकुवलयमिव लक्ष्यत इत्याशयः । अनेन विद्यावत्त्वनूतनत्वरम्यत्वादिकमुक्तम् । विद्यामित्यनेन विद्यावशेनायात इत्यनौद्धत्यं संबन्धार्थदेवरातप्रस्थापनगोपनं च कृतम् ।

२११–२१३ सखि श्रुतं त्वया । एतेनाभिलाषं दर्शयति ।

---

२०७. °मुद्दाम for °मुन्माद N.

२०९. तद् for अत्र N.; एव after अत्र O.; N. om. सह; अधीते for अधिगच्छति Kl. N. O.

२१०. स before एष Bh., Kl. K2. O.; एव for एष A. C.; इति after नाम A. N. O.

२११. लवंगिए after सहि D. Kl. K2. N. O.; कहं महाउलप्पसूदो सो महाभाओ after सुदं N.; तुमए A. तए Kl. for तुए; N. O. om. तुए.

२१२. जनांतिकं before सहि N.; तह ज्जेव B. तथैव Bh. त एव Kl. before सहि Kl. om. वा, °दधिं C. O. °अहिं Kl. N. for °दहिं; उज्झिअ B. वज्जिय O. for वज्जिअ; °आअस्स A. Bh. C. Kl. °जाअस्स N. °जायस्स O. for °जादस्स; आअमो B. आगमो C. for उग्गमो.

२१३. Kl. N. om. त्ति. * Com. om. सखि.

नेपथ्ये शङ्खध्वनिः ।

काम° । अहो कालातिपातः । संप्रति हि । २१५

क्षिपन्निद्रामुद्रां मदनकलहच्छेदसुलभा-

मवाप्तोत्कण्ठानां विहगमिथुनानां प्रथमतः ।

दधानः सौधानामलघुषु निकुञ्जेषु घनता-

मसौ संध्याशङ्खध्वनिरनिभृतः खे विचरति ॥

वत्से सुखं स्थीयताम् । इत्युत्तिष्ठति । २२०

---

लवङ्गिकैतद्द्रढयति । [ कुतो वेति ] । अनेन महाकुलीनत्वं न तु कामन्दक्याः कल्पनेति दर्शितम् ।

२१५–२१९ कालातिपातः कालक्षेपः । क्षिपन्नित्यादि । संप्रति गगनेयं संध्याशङ्खध्वनिः संध्याकालसूचकः शङ्खशब्दो विचरति श्रूयते। किं कुर्वन्विहगमिथुनानां चक्रद्वन्द्वानां प्रत्यासन्नविरहात्सोत्कण्ठानाम्। निद्रेव मुद्रा। संभाषणप्रतिरोधात्। तां प्रथमतः क्षिपन्हरन् । कीदृशीम्। मदनकलहः सुरतं तस्य च्छेदोवसानं तेन सुलभाम् । यद्वा ॥ मदनकलहश्छिद्यतेनेनेति घञ् । पुंसि संज्ञायामिति वा घः ॥ मदनकलहच्छेदो रतं ततः सुलभाम् । सुरतश्रमजनितामित्यर्थः । संप्रति धवलगृहाणां महत्सु गह्वरप्रदेशेषु प्रतिध्वनितो घनतां दधानः । अत एवानिभृतः प्रौढः सन्विचरति । यद्वा । प्रथमतः खे विचरति तदनु दिवाकेलिकलह-

---

२१४. K1. N. om. नेप°—निः.

२१५. वेला° for काला° D.

२१६. हरन् for क्षिपन् K1.; सुभगा° for सुलभा° Bh.

२१७. °मुपात्तोत्कण्ठानां N. मुपात्तोत्कम्पानां O. for °मवाप्तोत्कण्ठानाम्.

२१९. अतिभृतः for अनिभृतः A.

२२०. तदुत्तिष्ठामः for वत्से-ताम् A. B. Bh. C. D. K2. Bh. om. इति; C. N. om. इत्यु-ति; उत्तिष्ठन्ति for उत्तिष्ठति A. D. K1.

माल० । अपवार्य । कधं उवहारीकिदम्हि राइणो तादेण राआराहणं क्खु तादस्स गुरुअं ण उण मालदी । सास्रम् । हा ताद तुमं पि णाम मम एव्वं त्ति सव्वधा जिदं भोअतिह्णाए । सानन्दम् । कधं महाकुलप्पभवो वि सो महाभाओ । सुभणिदं पिअसहीए २२५ कुदो वा महोदहिं वज्जिअ पारिजादस्स उग्गमो त्ति । अवि णाम तं पुणो वि पेक्खिस्सं । ( क )

( क )*कथमुपहारीकृतास्मि राज्ञस्तातेन राजाराधनं खलु तातस्य गुरुकं न पुनर्मालती । हा तात त्वमपि नाम ममैवमिति सर्वथा जितं भोगतृष्णया । कथं महाकुलप्रभवोपि स† महाभागः । सुभणितं प्रियसख्या कुतो वा‡महोदधिं वर्जयित्वा पारिजातस्योद्गम इति । अपि नाम तं पुनरपि प्रेक्षिष्ये ।

च्छेदात्सौधसमीपतरुनिवासकलविङ्कमिथुनानां निद्रामुद्रां क्षिपन्विचरति । ते हि प्रबलशङ्खध्वनिनिबोधिताः कलकलं कुर्वन्तीति भावः ।

२२१-२२९ अपवार्य निभृतम् ।
निगूढभावसंयुक्तमपवारितकं भवेत् ॥

२२१. सानंदं स्वगतं for अपवार्य N.; सास्रं सहि after अपवार्य D.; N. om. कधं—सानंदं (l. 223); कहं for कधं D.; कदम्हि for किदम्हि A. Bh. D. K1. K2.; D. om. तादेण; परा° for राआ° K1.

२२२. °राधणं for °राहणं K1.; खु for क्खु K1. K2. O.; गरुअं B. Bh. D. K1. बहुमदं K2, गरुयं O. for गुरुअं; न for ण O.; मालती for मालदी Bh.; D. K2. om. सास्रं.

२२३. तुवम्मि for तुमंपि K1.; वि for पि Bh. O.; मम णाम for णाम मम K1. O.; B. om. मम; एव्वत्ति Bh. एवत्ति K1. एवन्निK2. O. for एव्वं त्ति; B. om. त्ति; सव्वदा for सव्वधा K2; भोग for भोअ K1. K2.; तह्णाए for तिह्णाए K1.

२२४. B. Bh. C. om. कधं; कहं for कधं K1. K2. N.; उल for कुल N.; प्पहवो D. K2. द(प)हवो K1. प्पसूदो N. O. for प्पभवो; N. om. वि; B. Bh. C. om. वि सो; हि for वि D.; °णुभागो A, भागो B, for भाओ; सुट्ठु for सु D. N. O.; प्पिय for पिअ O.

२२५. तदो व for कुदो वा K1.; °दधिं C. O. °अहिं K1. N. °दधि K2. for °दहिं; उज्झिअ B. वज्जिय O. for वज्जिअ; आअस्स A. Bh. C. K1. °जाअस्स N. °जायस्स. O. for °जादस्स; आअमो B. अगमो C. for उग्गमो.

२२६. K2. om. तं; उणो for पुणो; N.;N. O. om. वि; पेख्खे N. प्पेक्खिस्सं O. for पेक्खिस्सं.

* सखि कथम् Com. † प्यसौ Com. ‡ Com. om. वा.

लव० । अवलोइदे इदो इदो एदिणा सोवाणेण ओदरम्ह । (क)

काम० । अपवार्य । साधु संप्रति मया तटस्थयैव मालतीं प्रति निसृष्टार्थदूतीवृत्तस्य लघूकृतो भारः । तथा हि ।

वरेऽन्यस्मिन्द्वेषः पितरि विचिकित्सा च जनिता
पुरावृत्तोद्गारैरपि च कथिता कार्यपदवी । २३०

---

( क ) अवलोकिते इत इत एतेन सोपानेनावतरावः ।

---

इति भरतः । अधुना मनःप्रविष्टसाहसवाञ्छया ब्रूते [ कथं महाकुले इत्यादि] । [लव० वा०] संजननेनेति पाठे संजननं सोपानमेव । तटस्थतया घटितकत्वेन साधुत्वम् । निसृष्टार्थेति ।

स्त्रीपुंसयोराशयमादधाना स्वयं च कार्यं प्रतिपादयन्ती ।
सृष्टार्थिका सा परदारयोगे दूती नियोज्या बहुधा सुधीभिः ॥

इति भरतः । मालतीं प्रतीत्यनेन मदयन्तिकां प्रति विद्यत एवेति भावः ।

२३०—२३५ प्रकृते निष्पन्नं स्वव्यापारमाह । वर इत्यादि । अन्यस्मिन्वरे नन्दने द्वेषः कारितः । पितरि निन्दा जनिता । पुरावृत्तोद्गारैः शकुन्तलादीनां पितृनिरपेक्षात्मदानकथनैः कार्यपरिपाटी कथिता ।

---

२२७. अव° for लव° N. ; N om. अव–इदो इदो; A. K1. K2. om. one इदो; एहि before एदिणा A. C. K1. K2. O. ; एदेण for एदिणा N. ; शंजवणेण K1. सञ्जवणेन K2. सोपाणमग्गेण N. for सोवाणेण ; उदरम्ह Bh. ओसरम्ह. K1. अवयरम्ह O. for ओदरम्ह.

२२८. अवलोकिते before साधु N.

२२९. दूतीकृत्यस्य A. दूतीकल्पस्य C. O. दौत्यस्य N. for दूतीवृत्तस्य; लघु° for लघू° D. ; Bh. K1. K2. O. om. तथाहि; कुतः for तथाहि N.

२३०. कृता for वरे N. ; तु for च K1.

२३१. वृत्तोद्गारै° C. वृत्तोद्धातै° N. वृत्तोद्गातै° O. for वृत्तोद्गारै°.

स्तुतं माहाभाग्यं यदभिजनतो यच्च गुणतः
प्रसङ्गाद्वत्सस्येत्यथ खलु विधेयः परिचयः ॥

इति निष्क्रान्ताः सर्वे ।

२३५ ॥ धवलगृहो नाम द्वितीयोऽङ्कः ॥

---

माहात्म्यं महत्त्वं तस्य स्तुतं यत्कुलाद्यच्च गुणात्तदपि । इति हेतोः । अनन्तरं वत्सस्य परिचयः समागमो विधातुः कर्तव्यः । एतेनाङ्कावतारोपि सूचितः । प्रसङ्गाद्व्याजादन्यापदेशादिति सर्वत्र योज्यम् । धवलगृह इति धवलगृहोपलक्षित इत्यर्थः ॥

असूत यं रत्नधरोनवद्योनवद्यरूपा दमयन्तिका च ।
जगद्धरं तत्कृतटिप्पणेङ्कोगमद्वितीयो रससाशित्रासः ॥

॥ इति द्वितीयोऽङ्कः ॥

---

२३२. तन्माहात्म्यं for माहाभाग्यं A. B. Bh. C. D.

२३३. विधि for खलु A. B. Bh. C. D.

२३४. परिक्रम्य after इति B. Bh. C.; सर्वाः for सर्वे D.

२३५. इति मालतीमाधवे A. मालतीमाधवे Bh. C. before धवल; K1. K2. N. O. om. ध—म; गृहं Bh. गृह C. for गृहो.

# तृतीयोऽङ्कः ।

ततः प्रविशति बुद्धरक्षिता ।

बुद्ध० । आकाशे । अवलोइदे अवि जाणासि कहिं भअवदित्ति । (क)

प्रविश्य । अवलोकिता । उपसृत्य । बुद्धरक्खिदे किं पमुद्धासि । को विअ कालो भअवदीए पिण्डवादवेलं वज्जिअ मालदिं ५ अणुवट्टमाणाए । (ख)

(क) अवलोकिते अपि जानासि क्व भगवतीति ।

(ख) बुद्धरक्षिते किं प्रमुग्धासि । कोप्यकालो [क इव कालो] भगवत्याः पिण्डपातवेलां वर्जयित्वा मालतीमनुवर्त्तमानायाः ।

परिचयस्यान्योन्यदर्शनालापादिरूपसमागमात्मकतया तदारम्भस्य प्रतिज्ञातत्वेन तन्निर्वाहिकाया मदयन्तिकायाः सूचनाय तत्संबन्धाद्बुद्धरक्षिताप्रवेशः । यद्वा । नियुक्तैव मया बुद्धरक्षितेत्यनेन प्रथमाङ्के द्वितीये च मालतीं प्रति लघूकृतो भार इत्यनेन सूचितो बुद्धरक्षितायाः प्रवेशः ।

४–७ अत्र प्रमुग्धा प्रस्मृता । पिण्डपातः सौगतान्नम् ।

१. K2. om. ततः; the portion of the leaf of K2. containing two letters corresponding to विशति बु° torn off; it probably read प्रविश्य for प्रविशति.

२. K2. om. बुद्ध°; K1. om. आकाशे; bfore परिक्रम्य आकाशे A. B. Bh. C. D. अवलइए for अव–दे K1.; आकाशे इदो २ before अवि K1.; B. om. अवि; णाम N. णं O. after अवि; जानासि for जाणासि K2.; कहं for कहिं Bh.; गदा after कहिं. K2.

३. भय° for भअ° O.; °वदी A. B. K2. °भदिं K1. for °वदि.

४. अवलोकिता twice Bh. K1.; A. K1. N. om. उपसृत्य; रक्षिते for रक्खिदे Bh. K2.; किं सि पमुद्धा K1. किं सि तुमं प्पमुद्धा O. for किं—सि; प्पमु° A. पबु° ? Bh. for पमु°.

५. वि A. N. विय O. for विअ; आलो for कालो A.; भय° for भअ° O.; पाद D. पाण N. for वाद; वेलां for वेलं K2.; उज्झिअ B. विसज्जिअ O. for वज्जिअ; मालदीं for मालदिं A. C. D. K2.

६. वत्त° for वट्ट° A. Bh. C. K1. K2.

बुद्ध० । हुं तुमं उण कहिं पत्थिदासि । (क)

अव० । अहं क्खु भअवदीए माहवसआसं अणुप्पेसिदा । संदिट्ठं अ तस्स संकरघरसंबद्धं कुसुमाअरं णाम उज्जाणं
१० गदुअ कुज्जअणिउञ्जपेरन्तरत्तासोअगहणे चिट्ठ त्ति । गदो अ तत्थ माहवो । (ख)

---

(क) हुं त्वं पुनः कुत्र प्रस्थितासि ।

(ख) अहं खलु भगवत्या माधवसकाशमनुप्रेषिता । संदिष्टं च तस्य *शंकरगृहसंबद्धं कुसुमाकरं नामोद्यानं गत्वा कुब्जकनिकुञ्जपर्यन्तरक्ताशोकगहने तिष्ठेति । गतश्च तत्र माधवः ।

---

कोप्यकालो निषिद्धकालः । तथा च सदैव मालतीसमीपे भगवती वर्तत इत्यर्थः । हुमनुमतौ स्मरणे वा ।

१०–२० अत्र कुब्जकं कूआ [ कआ कहूयआ पाठान्त० ] इति ख्यातस्तरुविटपः । कुब्जकव्याप्तरक्ताशोकवनस्य दुःसंचारत्वाद्विजनत्वं सूचितम् । पर्यन्तो मध्यम् ॥ काननं गहनं वनमित्य-

---

७. स्मरणे before हुं Kl.; N. om. हुं; तुवं for तुमं Kl.; पुण for उण Bh. Kl; गया आसि Kl. गच्छसि N. पच्छिदासि O. for प—सि.

८. खु for क्खु Bh. Kl. K2. O.; माधव Kl. माहवस्स N. for माहव; सयासं for सआसं O.; पुणो पेसिदा O. Bh. अणुपेसिदा D. for अ–दा.

९. सन्दिट्ठं for संदिट्ठं Kl. K2.; B. N. om. अ; च D. Kl. य O. for अ; भअवदीए after च or अ D. Kl. K2.; तए for तस्स Bh.; B. D. om. तस्स; माहवस्स after तस्स O.; जधा after तस्स A.; हर Bh. D. पुर Kl. K2. N. for घर Bh. C. D. K2.; °अरुज्जाणं N. °यरुज्जाणं O. for अरं–णं.

१०. गदुय for गदुअ O.; कुञ्ज A. C. कुब्ज B. कुज्ज Bh. Kl. N. कुज्जइ K2. कुज्जय O. for कुज्जअ; णिकुञ्ज for णिउञ्ज K2.; पेरन्तासो° for पेरन्तरत्तासो° Bh.; चिट्ठदु A. चिट्ठसु Bh. तिट्ठसु D. चिट्ठसु Kl. चिट्ठेहि N. चिट्ठउ O. for चिट्ठ; A. om. त्ति; ति for त्ति Kl.; गदो य for गदो अ O.

* तया for तस्य Com.

बुद्ध° । किं त्ति तहिं माहवो अणुप्पेसिदो । (क)

अव° । अज्ज कसणचउद्दसित्ति भअवदीए समं मालदी संकरघरं गमिस्सादि तदो एवं किल सोहग्गं वड्ढदि त्ति देवदाराहणणिमित्तं सहत्थकुसुमावचअं उद्दिसिअ लवङ्गिआदुदीअं १५

---

(क) किमिति तत्र माधवोनुप्रेषितः ।

( ख ) अद्य कृष्णचतुर्दशीति* भगवत्या समं मालती शांकरगृहं गमिष्यति† । तत एवं किल सौभाग्यं वर्धत इति देवताराधननिमित्तं स्वहस्तकुसुमावचयमुद्दिश्य लवङ्गिकाद्वितीयां मालतीं भगवत्येव

---

मरः ॥ अत्र किलालीके सौभाग्यवृद्धिप्रयोजनस्य व्याजत्वात् । एवमिति । स्वहस्तत्रोटितपुष्पैर्देवताः पूजयेत्यर्थः । आनेष्यतीति । मालतीमाधवयोरतर्कितदर्शनेन विजने तयोरनुरागो वर्धतामिति भगवत्या आशय इति भावः । अत्रामन्त्रिताहूता । गच्छामि मदयन्तिकास्थानमिति शेषः ।

---

१२. अवलोइदे after बुद्ध० । Bh. D. K1. K2. N.; किन्ति Bh. किन्ति किन्ति K1. K2. for किं त्ति; त्ति for त्ति O.; माहवो तत्थ for त– वो K1. K2.: तत्थ for तहिं B. Bh. D. N.; अणुप्पेसिदो माहवो for मा–दो O.; अणुपेसिदो. B. Bh. K2. गओ N. for अणुप्पेसिदो.

१३. किसण for कसण N. O.; °हसी for °हसि A. C.; तत्थ A. तहिं K1; तेहिं K2. after त्ति; जणणीए for भअवदीए B. Bh. N.; जणणीए before भअ° O. अ after °दीए O.

१४. B. om. संक— रं ; उरं for घरं K1. K2. N. O.; त्ति after °स्सादि Bh. C. D. O.; किल एदं for ए– ल O.; B. Bh. C. om. एवं; एव्वं; K1. N. एव्व K2. for एवं सोहग्गं K1. सौहागं K1. for सोहग्गं वड्ढदि B. N. O. वड्ढेदि C. वड्ढदि K1. K2. for वड्ढदि; त्ति for त्ति K1. K2.

१५. °राधण for °राहण D. K2. O.; °त्तअं for °त्तं B. Bh. C.; स्वहत्थ for सहत्थ. K2.; °मावचयं Bh. K2. °मावआयं O. for °मावचअं; उद्दिस्सिअ K1. K2. उद्दिस्सिय G. for उ—अ; °ङ्गिका for °ङ्गिआ K2.; दुदिआ A. दुदिअं B. Bh. C. द्वितीयां K2 for दुदीअं.

* तत्र before भग° Com. † Com. adds इति.

मालदिं भअवदी जेव्व कुसुमाअरुज्जाणं आणइस्सदि तदो अण्णोण्णदंसणं भोदु त्ति । तुमं उण कहिं पत्थिदा । (ख)

बुद्ध० । अहं क्खु संकरघरं जेव्व पत्थिदाए पिअसहीए मदअन्तिआए आमन्तिदा । तदो भअवदीए पाअवन्दणं कदुअ
२० तहिं गच्छामि । (क)

---

कुसुमाकरोद्यानमानेष्यति ततोन्योन्यदर्शनं भवत्विति । त्वं पुनः क्व प्रस्थिता ।

(क) अहं खलु शंकरगृहमेव प्रस्थितया प्रियसख्या मदयन्तिकयामन्त्रिता । ततो भगवत्याः पादवन्दनं कृत्वा तत्र गच्छामि ।

---

२१–२७ [अव० वा०] मकरन्दमदयन्तिकापरिणये किं वृत्तमिति भावः । अत्र विस्रम्भो विश्वासः । ईदृशस्तादृश इति मकरन्दगुणप्रकाशनमित्यर्थः । तस्या मदयन्तिकायाः । तं मकरन्दम् ।[साध्विति] त्वया भगवतीभारो लघूकृत इति भावः ।

---

१६. °लदीं for °लदिं A. C. D. K1. K2. O.; भअवदि Bh. भगवदी. K2. भयवदी O. for भअवदी; B. om. भअवदी; तं after °वदी K1.; D. om. जेव्व; ज्जेव्व Bh. C. ज्जेव्व K2. O. एव्व N. for जेव्व; °करु° K2. °यरु° O. for °अरु°; अणइस्सदि Bh. आणयिस्सदि K2. आणेइस्सदि N. for आणइस्सदि; त्ति after स्सदि D. K1. K2.; O. om तदो.

१७. अण्णोण for अण्णोण्ण K1.; होदु B. C. होदि N. for भोदु; पथ्थिदासि N. प्पत्थिदा O. for पत्थिदा.

१८. अवलोइदे before अहं; C. om. अहं; खु for क्खु K1. K2. O.; हरं Bh. उरं K1. K2. O. पुरं N. for घरं; ज्जेव B. O. ज्जेव्व C. एव्व N. for जेव्व (एव्व and the three varieties of writing जेव्व occur throughout, they will not be noticed hereafter); प्पत्थिदाए for पत्थिदाए O.; प्पिय for पिअ O.

१९. °यन्तियाए for °अन्तिआए O.; आमंतिदा for आमन्तिदा O.; अदो for तदो N.; भग° K2. भय° O. for भअ°; B. Bh. C. om. पाअ; पाद for पाअ A. K2. O.; कदुय for कदुअ O.

२०. जेव्व after तहिं A. D. K1. K2.; गछामि for गच्छामि O.

अव० । तुमं क्खु भअवदीए जस्सिं पओअणे णिउत्ता तत्थ को वुत्तन्तो । (क)

बुद्ध० । मए क्खु भअवदीए समादेसेण तासु तासु वीसम्भ-कधासु ईरिसो तारिसो त्ति मअरन्दस्स उअरि पिअसहीए मद-अन्तिआए दूरं आरोविदो परोक्खाणुराओ । एसो अ से मणो- २९
रहो अवि णाम तं पेक्खामि त्ति । (ख)

---

(क) त्वं खलु भगवत्या यस्मिन्प्रयोजने नियुक्ता तत्र को वृत्तान्तः ।
(ख) मया खलु भगवत्याः समादेशेन तासु तासु विस्रम्भकथास्वीदृशस्तादृश इति मकरन्दस्योपरि प्रियसख्या मदयन्तिकाया* दूरमारोपितः परोक्षानुरागः। एष च तस्या मनोरथोपि नाम तं प्रेक्ष इति ।

---

३१–३६　तथेत्यादि । तथा तेन प्रकारेण विनयनम्रानुद्धताकारतया नम्रा मालती कतिपयदिनैरुपायाच्छकुन्तलादिकथया मया सख्यामिव विश्वासबुद्धिप्रवर्तनेन सेव्यतां शालीनत्वादिपरिहारं नीता । अत्रापिशब्द एवार्थे । यद्वा । अविनयनम्रापीत्यकारप्रश्लेषः ॥ कतिपयाहोभिरित्यत्राह्नो जातिपरतया न समासान्तविधिः ॥ सखीचिह्नं

---

२१. खु for क्खु Bh. K1. K2. O.; भय° for भअ° O.; तस्सिं for जस्सिं O.; पओजणे N. प्पय्योयणे O. for पओअणे; उत्ता for णिउत्ता K1.

२२. उत्तंतो for वुत्तन्तो K1. K2. N.

२३. खु Bh. O. वि D. K1. K2. for क्खु; भय° for भअ° O.; देसेन for देसेण K2.; K1. om. one तासु; विस्सम्भ A. Bh. D. K1. N. विस्रम्ब K2. for वीसम्भ.

२४. कहासु B. N. संकधासु Bh. for कधासु; for ईदिसो तादिसो for ईरिसो तारिसो K1. K2. N.; तस्स after त्ति D. K1. K2.; मय° for मअ° O.; उवरि for उअरि K1. K2. N. O.; प्पिय for पिअ O.; B. Bh. K1. K2. om. मद—ए.

२५. °यन्तियाए for °अन्तिआए O; परोक्खाणुराओ तह विदूरं आरोविदो for दूरं-राओ N.; हिअअं for दूरं D.; परो before परो° Bh.; °क्खोअणु° for °क्खाणु K2.; °रायो for °राओ O.; त्ति after °राओ B. Bh. C.; जइ for एसो अ N.; B. Bh. D. K1. K2. om. अ; वि for अ O.; ज्जेव्व for अ C.

२६. °रथः for °रहो K2.; णामि for णाम K1.; जणं after तं Bh. पेक्खिस्सं for पेक्खामि A.; ति for त्ति K1.

* Com. om.

अव० । साहु बुद्धरक्खिदे साहु । (क)

बुद्ध० । एहि गच्छम्ह । (ख)

इति परिक्रम्य निष्क्रान्ते । प्रवेशकः ।

१० ततः प्रविशति कामन्दकी ।

काम० । तथा विनयनम्रापि मया मालत्युपायतः ।
नीता कतिपयाहेन सखीविस्रम्भसेव्यताम् ॥
संप्रति हि । व्रजति विरहे वैचित्यं नः प्रसीदति संनिधौ
रहसि रमते प्रीत्या वाचं ददात्यनुवर्तते ।

---

(क) साधु बुद्धरक्षिते साधु ।
(ख) एहि गच्छावः ।

---

दर्शयति । व्रजतीत्यादि । संप्रति यतोस्माकं विरहे दौर्मनस्यं गच्छति नः संनिधौ प्रसन्ना भवति । विजने रमते मया सहेति शेषः । प्रीत्या दायं सोल्लुण्ठनमुत्तरं ददाति । यद्वा । दायं कर्पूरादिदेयं ददाति । गमनसमये मामनुवर्ततेनुगच्छति । ततः कण्ठे लग्ना सती पुनःपुनर्निरुध्य मां शपथैः प्रणम्य तत्क्षणमेव प्रत्यावृत्तिं पुनरागमनं याचते च । सख्योप्येवं कुर्वन्ति । अतः सखीत्वं गता सा मे मनोगतं करिष्यतीति भावः ॥ देये दाने च दायः स्याद्दायः सोल्लुण्ठभाषण इति मेदिनीकरः ॥

---

२७. साधु for साहु in both places A. D. K1. K2. N.; वुद्ध for बुद्ध Bh.; साधु for second साहु O.

२८. बुद्धरक्खिदे for बुद्ध° । K1.; सहि for एहि N.; गछम्ह Bh. O. गच्छामि N. for गच्छम्ह.

२९. D. K1. K2. N. om. परिक्रम्य.

३०. K1. K2. N. O. om. ततः; प्रविश्य for प्रविशति A. D. K1. K2. N. O.

३१. O. om. काम.°

३२. °याहोभिः for °याहेन A. D. N.; विश्रंभ for विस्रम्भ Bh. O.

३३. च K1. K2.; A. B. Bh. C. D. om. हि after संप्रति.

३४. ददाति for रमते C.; दायं for वाचं A. B. C. D.

गमनसमये कण्ठे लग्ना निरुध्य निरुध्य मां ३५
सपदि शपथैः प्रत्यावृत्तिं प्रणम्य च याचते ॥

इदं च तत्र साधीयः प्रत्याशानिबन्धनम् ।

शाकुन्तलादीनितिहासवादान्प्रस्तावितानन्यपरैर्वचोभिः ।
श्रुत्वा मदुत्सङ्गनिवेशिताङ्गी चिराय चिन्तास्तिमितत्वमेति ॥

तदद्य माधवसमक्षमुत्तरमुपक्रमिष्ये । ४०

नेपथ्याभिमुखम् । वत्से इत इतः ।

---

३७-४१ साधीयः साधु । निबन्धनं कारणम् । शाकुन्तलादीनित्यादि । इयं शाकुन्तलादीनितिहासवादान्पुरावृत्तान्यन्यपरैर्वचोभिरन्यकथाप्रसङ्गेन प्रस्तावयति । शकुन्तलादिभिः पितृनिरपेक्षमेवात्मा दत्त इति भगवति किं सत्यमिति मां पृच्छतीति भावः । अत्रान्यपदेनाखेटकाश्रमवर्णनशुश्रूषादेःसाक्षादुद्देश्यत्वं साहसकरणं चाशयस्थमिति सूचितम् । एवमिति श्रुत्वा चेतोधृतनायकानुस्मरणान्मदीयक्रोडे निवेशितशरीरा भवति । ततः किमेवं करोमीति चिन्तास्तिमितत्वं निश्चलत्वं चिरकालमेति । चिन्तेत्युपलक्षणं निःश्वासादिनापि लक्षिता भवतीत्यर्थः । यद्वा । मदिति पञ्चमी । मत्सकाशाच्छ्रुत्वैवं करोतीत्यर्थः । समक्षं प्रत्यक्षम् । उत्तरमनन्तरकृत्यम् । इत आगच्छेति शेषः ।

---

३५. कण्ठा° for कण्ठे O.; लग्ना कण्ठे for क-ग्ना K1. K2.; च मां बलात् for निरुध्य मां D. K1. K2.

३६. सपथैः for शपथैः K1.

३७ संप्रत्या° A. प्रीत्या° B. for प्रत्या°.

४०. अथ C. अत्र O. for अद्य; N. om. माधव; °मिष्यामि B. Bh. °मिष्यामि C. D. K1. K2. O. for °मिष्ये.

४१. अवलोक्य after °मुखम् D. N.; वत्से वत्स इतः for व-तः C.

ततः प्रविशति मालती लवङ्गिका च ।

माल० । कधं उवहारीकिदम्हि इत्यादि पूर्वोक्तं पठति ।

लव० । सहि एसो क्खु महुरमहुरसोल्लोल्लमञ्जरीकवलणके-

---

(क) सखि एष खलु मधुरमधुरसार्द्रार्द्रमञ्जरीकवलनकेलिकल-

---

४४–५० अत्रैष खलु कुसुमाकरोद्यानमारुतस्त्वां परिष्वजतीति संबन्धः । कीदृशः । अतिमधुरमधुरसेनात्यार्द्राया मञ्जर्याः कवलने भक्षणे केलिः क्रीडा तया कलमव्यक्तध्वानं यत्कोकिलकुलं तस्य कोलाहलेनाकुलितादतिसुरभिचूतशिखरादुड्डीनश्चटुलो मनोज्ञो यो भ्रमरसमूहस्तस्य संपर्केण विकसितपुटस्यात एव करालस्य दन्तुरस्य चम्पकस्याधिवासेन गन्धेन मनोहरः । एतेन शैत्यसौगन्ध्ये दर्शिते । सहकारमञ्जरीणां कोकिलाकुलत्वं भ्रमरस्य तत्त्यागे हेतुः । मरालो हस्ती हंसो वा तस्य मांसलजघनपरिणाहोद्वहनेन मन्थरावलसौ यावूरू । त्वदीयाविति भावः । तयोर्गौरवेण विसंष्ठुलं विषमं

---

४२. D. K1. K2. om. ततः; प्रविश्य for प्रविशति K1.

४३. A. Bh. C. add स्वगतम् after माल०; °कदह्मि for °किदह्मि A. Bh. C. D.; the whole speech in B. C. instead of इ–ति ; also in N. with the readings already noticed except पुणो here for उणो; also in Bh. up to °मो त्ति with the readings already noticed, but with सास्र°– °ह्लाए omitted, मालदी as in text, कधं not omitted, वि only omitted, महाणु° for महा°; also in K1. up to °मो त्ति with the readings already noticed, but with रा· आराहणं as in text, सास्र°—ह्लाए omitted, कधं as in text, वि omitted, सुट्ठु for सु, कुदो वा as in text, °अहिं omitted, °जादस्स as in text; also in K2. with the readings already noticed, but with राइणो as in text, तातेण for तादेण, गरुअं for गुरुअं, सास्र°—ह्लाए omitted, कधं as in text, पहवो for प्पभवो, वि omitted, सुट्ठु for सु, °दहिं as in text, उदग्गमो for उग्गमो, तं as in text, पुणरावि for पुणो वि, पेक्खिसे for पेक्खिस्सं ; also in O. up to °मो त्ति with the readings already noticed but with कइं for कधं, किदा for किदह्मि, with रायिणो for राइणो, राया° for राआ°, ण as in text, पुण for उण, with सास्र°–°ह्लाए omitted, वि omitted, महाणुभावो, for महाभाओ, °दहिं as in text.

४४. K1. K2. om. सहि; पेक्ख B. Bh. C. प्पेक्ख O. after सहि ; खु for क्खु K1. K2. O. ; °ल्लोल for °ल्लोल्ल Bh. K1. K2. O. ; कवल for कवलण C. D. O.

लिकलकोइलउलकोलाहलाकुलिदसहआरसिहरुड्डीणचडुलच- ४५
ञ्चरीअणिअरव्वइअरुद्दलिदलकरालचम्पआहिवासमणोहरो
मरालमंसलजहणपरिणाहुव्वहणमन्थरोरुभरविसंठुलक्खलिद-
चलणसंचारमसिणगमणोवणीदसेअसीअरसुहाबिन्दुइज्जन्तमु-
द्धमुहअन्दचन्दणाअमाणसीअलफंसो तुमं परिस्सअदि कुसु-
माअरुज्जाणमारुदो ता पविसम्ह । (क) परिक्रम्य प्रविशतः। ५०

कोकिलकुलकोलाहलाकुलितसहकारशिखरोड्डीनचटुलचञ्चरीकनि-
करव्यतिकरोद्दलितदलकरालचम्पकाधिवासमनोहरो मरालमांसलज-
घनपरिणाहोद्वहनमन्थरोरुभरविसंष्ठुलस्खलितचरणसंचारमसृणगम-
नोपनीतस्वेदशीकरसुधाबिन्दूयमानमुग्धमुखचन्द्रचन्दनायमानशीत-
लस्पर्शस्त्वां परिष्वजति कुसुमाकरोद्यानमारुतस्तत्प्रविशावः* ।

यथा तथा स्खलितस्य चरणस्य संचारेण मसृणं मन्दं यद्गमनं

४५. कलहकुविद् for कल O.; °इला for °इल Bh.; °इलाकुलिद for °इ-लिद O.; B. Bh. C. D. K1. K2. om. उल; कुल for उल N.; कलकला° for कोला-हला° N.; कुलिअ for कुलिद B.; °आग K1. °यार O. for °आर; ड्डीन for डीण K1.; चटुल for चडुल A. C. O.

४६. °रीप for °रीअ O.; °अरु K2. °यर O. for °अर°; °वइअरु° Bh. N. व्ववइअरु° K2. °व्वयियरु° O. for °व्वइअरु; °राकुलिद B. D. °रुद्दलिअ N. for °रुद्दलिद; O. om. दल; दर for दल C. K1.; ° काहि B. °आधि D. K1. °काधि K2. °याधि O. for °आहि; मणहरो for मणोहरो N.

४७. O. om. मराल; मांसल for मंसल K2.; N. om. मंसल; जघण for जहण D.; विसंठुल Bh. विसंटुल C. D. विसंधुल K1. विसंस्थुल K2. for विसंट्ठुल; खलिद A. D. स्कलिद K1. स्खलिद K2. ख्खलिअ N. for क्खलिद.

४८. K2. om. चलण—णदि; चरण for चलण C. N. O.; वियंभियपरिस्समो for मसि—णो O.; N. om. संचारमसिण; °चाल for °चार K1.; संचरणो° for ग-मणो° N.; °णोप° B. Bh. D. °णोपिर C. °णुव्य° K1. for °णोव°; सेद for सेअ B. Bh. K1. K2. O.; सोअर Bh. सीयर O. for सीअर, सुधा for सुहा Bh. C. D. K1. K2. O.; विंदुज्जलंत Bh. विंदुज्जल C. K1. K2. (noticed in the margin of O.) विंदुज्जन्त D. बिंदुज्जलंत N. for बिन्दुइज्जन्त.

४९. मुहचन्द A. मुहयंद O. for मुहअन्द; मुहचन्दणा° for मु-णा° K2;. °णाय° for °णाअ° K2. O.; सीदल B. Bh. C. K1. सीतल K2. सीयल O. for सीअल; प्फरसो A. प्फंसो D. K1. K2. प्परिसो N. for फंसो; °स्सजदि K1. °स्सणदि K2. °सज्जदि N. °स्सयदि O. for °स्सअदि; विअ before कुसु° N.; कुसुअरु° for कुसुमाअरु° Bh.

५०. °यरु° for °अरु° O.; एहि C. इदो N. after ता; परिक्कमामो N. प्पविसम्ह O. for पविसम्ह; °इति before परिक्रम्य A. B. Bh. C. D.; °विश्यतः K1. °विशंति O. for °विशतः.

* उपविशावः Com.

ततः प्रविशति माधवः ।

माध० । सहर्षम् । हन्त परागता भगवती । इयं हि मम आविर्भवन्ती प्रथमं प्रियायाः सोच्छ्वासमन्तःकरणं करोति । संतापदग्धस्य शिखण्डियूनो वृष्टेः पुरस्तादचिरप्रभेव ॥

५५ दिष्टया लवङ्गिकाद्वितीया मालत्यपि ।

आश्चर्यमुत्पलदृशो वदनामलेन्दु-
सांनिध्यतो मम मुहुर्जडिमानमेत्य ।

---

तेनोपनीतेन स्वेदशीकरेणामृतबिन्दुसदृशे मुग्धमुखचन्द्रे । अर्थात्तव । चन्दनायमानः शीतलस्पर्शौ यस्य सः । अनेन मान्द्यं शैत्यमपि ध्वनितम् ॥ सहकारोतिसौरभ इत्यमरः । चञ्चरीकोलिगीतयोरिति धरणिः । करालो दन्तुर इत्यमरः । मरालो हंसगजयोर्मरालो विस्तृते शुभ इति विश्वः ॥ तेन मरालस्य विस्तृतस्य शुभस्येति वा योज[illegible] ॥ मसृणं चिक्कणं सममित्यमरः ॥

५२–५४ हन्त हर्षे । परागतायाता । आविरित्यादि । इयं भगवती प्रियायाः पुरस्तादाविर्भवन्ती प्रथमं मम चित्तं सविकासं करोति । कीदृशस्य । संतापदग्धस्य कामाग्निदग्धस्य । यथा विद्यु-द्वृष्टेः पुरस्तादाविर्भवन्ती मयूरतरुणस्य चित्तं सोच्छ्वासं करोति निदाघतप्तस्य । युवग्रहणमुन्मादहेतुद्योतनाय ॥ प्रियाया इत्यत्र षष्ठ्यतसर्थप्रत्ययेनेति षष्ठी ॥ अत एव प्रियायाः प्रथममिति न योजना । प्रथमपदयोगे षष्ठ्यभावात् । अनेन प्रियाप्यागमिष्यतीति सूचितम् ।

५५–५९ मालतीत्यत्रापिशब्दो गौरवे । निपातानामनेकार्थ-त्वात् । आश्चर्यमित्यादि । अस्याः पद्माक्ष्या मुखनिर्मलचन्द्रसंनिधौ

---

५२. K1. K2. om. माध० ।
५५. दृष्ट्वा । अये for दिष्टया A. B. Bh. C. D.
५७. पुनर् for मुहुर् B.

जात्येन चन्द्रमणिनेव महीधरस्य
संधार्यते द्रवमयो मनसा विकारः ॥

संप्रति रमणीयतरा मालती। १०
ज्वलयति मनोभवाग्निं मदयति हृदयं कृतार्थयति चक्षुः।

---

वारंवारं जडिमानं सर्वकार्याप्रतिपत्तिरूपं प्राप्य जाड्येन जडिम्ना करणेन मम मनसा विकारः स्वरूपान्यथाभावः संधार्यते। कीदृशः। द्रवमय इव द्रवमयः। हृदयद्रवीकरणात्स्वेदादिमत्त्वाच्च। अन्यस्याः समागमाद्द्रवमयो विकारोस्यास्तु सांनिध्यादेवेति कर्मातिशयदर्शनादाश्चर्यम्। यदाह भरतः।

कर्मातिशयनिर्वृत्तो भवेद्विस्मयसंभवः।
सिद्धिस्थानेष्वसौ साध्यः प्रहर्षपुलकादिभिः॥

यथामलेन्दुसंनिधौ जडिमानं शैत्यमासाद्य शैत्येनैव चन्द्रकान्तेन शैलस्य द्रवमयो विकारः द्रवत्वं संधार्यते। अत्र महीधरसादृश्येन माधवस्य धीरत्वादिगुणावष्टम्भसंभार उक्तः। जात्येनेति पाठे जात्येन जातिमता। उत्कृष्टेनेति यावत्। चन्द्रकान्तेनेत्यस्य परं विशेषणं द्रष्टव्यम्। यद्वा मनोविशेषणमपि। जात्येनाभिजनवतापि। अत्रापिरध्याहार्यः। अत एवाश्चर्यम्।

६०–६२ संप्रतीति। पुरा कामवेगस्याङ्कुरावस्थया रमणीया। अधुना तु तस्य पल्लवितत्वेन रमणीयतरा। इदमेव स्फोटयति। ज्वलयतीत्यादि। संप्रति मालत्यङ्गैः कामाभिमुद्दीपयति। चिर्ष्णं

---

५८. जाड्येन for जात्येन A.

५९. संवार्यते K1. संचार्यते K2. for संधार्यते; ध्रुवमयो for द्रवमयो C.; मनसो for मनसा A. Bh.; Bh. om. विकारः.

६०. हि after संप्रति K1. K2.

परिमृदितचम्पकावलिविलासलुलितालसैरङ्गैः ॥

माल० । सहि इमस्सिं कुज्जअणिउञ्जे कुसुमाइं अव-चिणुम्ह (क)

६९ माध० । प्रथमप्रियावचनसंश्रवस्फुर-

त्पुलकेन संप्रति मया विडम्ब्यते ।

(क) सखि *अस्मिन्कुब्जकनिकुञ्जे कुसुमान्यवचिनुवः ।

सोन्मादं करोति । नेत्रं कृतप्रयोजनं विधत्ते । ममेति शेषः । कीदृशैः । परिमृदितचम्पकमालावद्विलासैर्ललितैश्च । अलसैर्मन्दैर्लज्जया निभृतत्वेनेति भावः ।

यानस्थानासनादीनां नेत्रवक्त्रादिकर्मणाम् ।
उपयातविशेषो यः स विलासो मतो बुधैः ॥

इति भरतः ।

हस्तपादाङ्गविन्यासभ्रूनेत्रोष्ठप्रयोजितम् ।
सुकुमारविधानेन ललितं तन्निगद्यते ॥

इति भरतः । यद्वा । परिमृदितचम्पकमालाविलासानि म्लानानि । ललितानीतस्ततः क्षिप्तानि । अलसानि मन्दानि । ततस्त्रिपदकर्मधारयः ॥ ललधातुश्चाञ्चल्यार्थेपि । धातोरनेकार्थत्वात् ॥ लुलितालसैरिति पाठे लुलितानीतस्ततः क्षिप्तानीत्यर्थः ।

६९–७० प्रथमेत्यादि । संप्रति मया मेघमालानवजलसेचनेन

६२. °मलित for °मृदित O. ( मृदित noticed in margin ); °काली for °कावलि C.; ललित for लुलित D. K1.; °लकै° for °लसै° K1.

६३. कुञ्ज A. B. कुज्ज Bh. C. K1. K2. N. कुज्जय O. for कुज्जअ ; णिउंजए B. निउंजे K1. for णिउञ्जे.

६४. °चिणम्ह B. C. K1. K2. O. चिणिम्ह Bh. for चिणुम्ह.

६९. प्रथमं for प्रथम B. O.; संस्तव for संश्रव K1. K2.; Bh. om. स्फुर°.

६६. मयावलम्ब्यते for मया विडम्ब्यते D. N. *एतस्मिन् Com.

घनराजिनूतनपयःसमुक्षण-
क्षणबद्धकुड्मलकदम्बडम्बरः ॥

लव०। सहि एवं करेम्ह। (क) पुष्पावचयं नाटयतः।

माध०। अपरिमेयाश्चर्यमाचार्यकं भगवत्याः। ७०

माल०। इदो वि अण्णस्सिं अवचिणुम्ह। (ख)

काम०। मालतीं परिष्वज्य। अयि विरम निःसहासि जाता।

---

(क) सखि एवं कुर्वः।
(ख) *इतोप्यन्यस्मिन्नवचिनुवः।

---

क्षणबद्धकलिकनीपस्य डम्बरः साम्यं प्रपञ्चो वावलम्ब्यते। कीदृशेन। प्रथमप्रियावचनसंश्रवणाद्यक्तरोमाञ्चेन। संस्तवेति पाठे संस्तवः परिचयः। तदनेन दृष्टान्तेन सर्वाङ्गीणं पुलकं तस्य च स्थैर्यमुक्तम्॥ घनजीमूतमुदिरेत्यमरः॥ अपरिमेयेत्यादि। पुष्पत्रोटनकाले मालतीस्तनमुकुलादिदर्शनादानन्दसंदोहेन माधवस्य संतोषप्रकाश इति भावः।

७२–७७ अज्ञातमाधवसंनिधानां मालतीं श्रमोपन्यासव्याजेन कामन्दकी श्लिष्टनर्मवचनमाह। अयीत्यादि। निःसहा परिश्रान्तासि त्वमतो विरम त्यज खेदमिति शेषः। यद्वा। विरम पुष्पावचयात्। उपविशेति भावः। पक्षे निःसहा कामाद्ग्लाना त्वं जातासि ततो वि-

---

६७. समुच्छ्वसत् B. Bh. C. K1. K2. समक्षण D. for समुक्षण.

६८. प्रतिबद्ध for क्षणबद्ध D. K1. K2. O.

६९ B. C. om. सहि; एव्वं for एवं Bh. K1.; करुह्म for करेह्म K2.; इति after करेम्ह. C. D. O.

७१. सहि before इदो O.; पि for वि K2.; अणस्सि Bh. अस्सि D. अवस्सि K1. अवरास्सि K2. N. for अण्णस्सि; °चिणिह्म Bh. °चिणह्म K1. K2. O. for चिणुह्म.

७२. अपि K1. K2. अइ N. for अयि; त्विरम° for विरम K1.; K1. K2. om. जाता. * सखि इतोपरस्मिन् Com.

तथाहि ।

स्खलयति वचनं ते संसयत्यङ्गमङ्गं

७५ जनयति मुखचन्द्रोद्भासिनः स्वेदबिन्दून् ।

मुकुलयति च नेत्रे सर्वथा सुभ्रु खेद-

स्त्वयि विलसति तुल्यं वल्लभालोकनेन ॥

मालती लज्जते ।

लव० । सोहणं भअवदीए आणत्तं । (क)

( क ) शोभनं भगवत्याज्ञप्तम् ।

शेषेण रमस्व ॥ आशंसायां लोट् ॥ स्खलयतीत्यादि । हे सुभ्रु शोभनभ्रूयुते वल्लभालोकनेन समं यथा तथा त्वयि खेदो विलसति स्वव्यापारं कुरुते । यथा वल्लभालोकनं तथा खेद इति भावः । पक्षे वल्लभेनावलोकनं खेदश्च । अत एव सर्वथेति तुल्यत्वम् । तदेवाह । खेदो वचनं तव स्खलयति । प्रत्यङ्गं संश्रयत्याश्रयति । संसयतीति पाठे शिथिलयति । आस्यशशिनो निःसरत्स्वेदकणाञ्जनयति । नयनद्वयं मुकुलयति च ।

रतान्ते च श्रमे चैव सुखसंभोगभावने ।

गन्धे स्पर्शे च हर्षे च मुकुला दृष्टिरिष्यते ॥

इति भरतः । वल्लभालोकनेऽप्येवं भवति । इह वल्लभालोकनं त्वयि वर्तत इति भावः ।

७९-९४ [ आज्ञप्तमित्यत्र ] विरम्यतामित्याशयः । चिबुक-

७३. Bh. D. N. O. om. तथाहि; यतः for तथाहि K1. K2.
७४ संश्रयति for संसयति A. B. Bh. C. D. K1. K2. O.
७५. °न्द्रोल्लासि ° for °न्द्रोद्भासि° K1. K2.
७६. गात्र for सुभ्रु O.
७७. °स्तव for °स्त्वयि O.; तुभ्यं Bh. नित्यं K2. for तुल्यं.
७८. लज्जां नाटयति for लज्जते N.
७९. सोभणं for सोहणं D.; भय° for भअ° O.; आण्णत्तं K2. भणिदं O. for आणत्तं.

माध० । हृदयंगमः परिहासः । ८०

काम० । तदास्यतां किंचिदाख्येयमाख्यातुकामास्मि ।

सर्वा उपविशन्ति ।

काम० । मालत्याश्चिबुकमुन्नमय्य । शृणु विचित्रमिदं सुभगे ।

माल० । अवहिदम्हि । (क)

काम० । अस्ति तावदेकदा प्रसङ्गतः कथित एव मया माधवाभिधानः कुमारो यस्त्वमिव मामकीनस्य मनसो द्वितीयं निबन्धनम् । ८५

लव० । सुमरामो । (ख)

काम० । स खलु मन्मथोद्यानयात्रादिवसात्प्रभृति दुर्मनायमानः परवानिव शरीरोपतापेन । ९०

यदिन्दावानन्दं प्रणयिनि जने वा न भजते
व्यनक्त्यन्तस्तापं तदयमतिधीरोपि विषमम् ।

---

(क) अवहितास्मि ।
(ख) स्मरामः ।

---

मधरतलावयवमुन्नमय्योत्तोल्य । सुभग इत्यनेन माधवचित्ताकर्षणेन त्वमेव सौभाग्यवतीति ध्वनितम् । कुमार इत्यनेन विस्मय उक्तः । निबन्धनमालम्बनम् । परवानस्वतन्त्रः । यदित्यादि । शरीरोपतापेनायं

---

८१. तदा तस्या for तदास्यतां Bh.; B. om. आख्येयम्.

८२. K1. K2. om. सर्वा.

८३. चुबुकमु° for चिबुकमु° N.; K2. om. शृणु-°हिदम्हि; चित्रमि° for विचित्रमि° Bh.

८५ °देकतः for °देकदा K2.; प्रसंगात् for प्रसङ्गतः B.; D. N. om. मया माधानो मया for म-नः K1. K2.

८६. धान for धानः A.; D. om. कुमारो; नाम after कुमारो B. Bh.; °कीन for °कीनस्य K1. K2.; °तीयामिव Bh. तीय इव K1. °तां र K2. for °तीयं.

८७. धनं Bh. बंधनं N. for निबन्धनम्.

८९. मदनो° for मन्मथो° N.; B. om. दिवसात्.

९०. स्मरशरोप° for शरीरोप° O.; तथाहि after °तापेन B.

प्रियङ्गुश्यामाङ्गप्रकृतिरपि चापाण्डुमधुरं
वपुः क्षामं क्षामं वहति रमणीयश्च भवति ॥

९५ लव० । एदं पि तस्सिं अवसरे भअवदिं तुवरावन्तीए अव-
लोइदाए उदीरिदं आसी अस्सत्थसरीरो माहवो त्ति। (क)

काम० । यावदशृणवं मालत्येवास्य मन्मथोन्मादहेतुरिति ।
ममापि स एव निश्चयः ।

---

(क) *एतदपि तस्मिन्नवसरे भगवतीं त्वरयन्त्यावलोकितयोदीरि-
तमासीदस्वस्थशरीरो माधव इति ।

---

परवानिव । यद्यस्माच्चन्द्रे प्रणयिनि जने वानन्दं प्रीतिं न भजते न
लभते। तत्तथार्थे । तथापि धैर्ययुक्तोप्ययं दुःसहमन्तस्तापं प्रकाशयति।
फलिनीश्यामशरीरस्वभावोप्यापाण्डुमधुरमीषत्पाण्डुमनोहरमतिक्षीणं
वपुर्वहति च यथा यथा तथा तथा रम्यश्च भवति । अपिर्विस्मये ।
चकारः समुच्चये । अपिचेति समस्त एव समुच्चये वा । तदिह रागा-
वस्थायां यथोचितं विधेहीत्याशयः ॥ प्रियङ्गुः फलिनीत्यमरः ॥

९७-१०२ यावदवधारणे । मालत्येव हेतुरित्येवाशृणवमित्यर्थः ।
अशृणवमश्रौषम् । अनुभवमित्यादि । अयं वदनेन्दुरस्य महात्मनो

---

९४. क्षामक्षा° for क्षामं क्षा° Bh. K2. N. O.; च मनोज्ञश्च for रमणीयश्च B.

९५. एवं for एदं A. B. C. D.; वि for पि N.; Bh. om. पि; एदस्सिं for तस्सिं B.; भय° for भअ° O.; °वदीं B. C. K2. °वदी K1 for °वदिं; तुवरन्तीए B. तुरअन्तीए Bh. तुवरअन्तीए K2. तुवराअंतीए A. C. D. K1. तुवरायन्तीए O. for तुवराअन्तीए.

९६. °रितं B. C. K2. °रिअं N. °रियं O. for °रिदं; आसि for आसी A. Bh. C. D. K1. K2.; जधा C.D. K1. K2. O. जह N. after आसी or आसि; Bh. om. अस्स-त्ति; असत्थ for अस्सत्थ K2.; शरीरो for सरीरो O.,; माभ° for माह° K2.

९७. अहं after यावद् N.; तावन् before माल° B. Bh. C.; °थोन्माथ Bh. O. °थोन्माथे C. D. °थसंताप K1. K2. for थोन्माद.

९८. हि after °पि K1. K2. O.; कुतः after निश्चयः N.

* एवं Com.

अनुभवं वदनेन्दुरुपागम-
न्नियतमेष यदस्य महात्मनः । १००
क्षुभितमुत्कलिकातरलं मनः
पय इव स्तिमितस्य महोदधेः ॥

माध०।अहो उपन्यासशुद्धिः।अहो महत्त्वारोपणे यत्नः।अथवा
शास्त्रेषु निष्ठा सहजश्च बोधः
प्रागल्भ्यमभ्यस्तगुणा च वाणी । १०१
कालानुरोधः प्रतिभानवत्त्व-
मेते गुणाः कामदुघाः क्रियासु ॥

निश्चितमेवानुभवमुपागमदुपागतः । यत्कारणादस्य स्तिमितस्य स्थिरस्य मनो विचलितम् । तदेवं ममापि स एव निश्चयः । किं भूतम् । उत्कण्ठाचपलम् । यथा स्तिमितस्य निश्चलस्य महात्मनोगाधस्य समुद्रस्य चन्द्रानुभवात्कल्लोलचपलं जलं क्षुभ्यति ॥ कथितोत्कलिकोत्कण्ठाहेलासलिलवीचिष्विति मेदिनीकरः ॥

१०३-१०७ शुद्धिरक्लिष्टता । दूतीगुणानाह । शास्त्रेष्वित्यादि । निष्ठेदमित्थमेवेति निर्णयः । तत्र सहजो बोधो नैसर्गिकं ज्ञानम् । ज्ञाने सति प्रागल्भ्यं वावदूकता । अभ्यस्ता गुणाः श्लेषादयो यत्र तादृशी वाणी । यद्वा । अभ्यस्तमभ्यासस्तदनुगुणा वाणी च । कालावबोधः

९९. अनुगमं for अनुभवं K2.

१००. °मेव for °मेष A. D.

१०३. बुद्धिः C. विशुद्धिः K1. K2. N. for शुद्धिः; मयि after अहो N.; महत्या° for महत्त्वा° B.; °रोहणे for °रोपणे K2.; बुद्धिः B. प्रयत्नः K1. K2. O. for यत्नः

१०४. शास्त्रे प्रतिष्ठा for शास्त्रेषु निष्ठा K1. K2. N.

१०६. °लावबोधः प्र° C. D. K1. °लानुरोधप्र° N. for °लानुरोधः प्र°.

१०७ दुहः for दुघाः Com.

काम० । अतस्तेन जीवितादुद्विजमानेन दुष्करमपि न किंचिन्न क्रियते । असौ हि

११० धत्ते चक्षुर्मुकुलिनि रणत्कोकिले बालचूते
मार्गे गात्रं क्षिपति बकुलामोदगर्भस्य वायोः ।
दाहप्रेम्णा सरसबिसिनीपत्रमात्रान्तराय-
स्ताम्यन्मूर्तिः श्रयति बहुशो मृत्यवे चन्द्रपादान् ॥

---

समयज्ञानम् । प्रतिभानमनुरूपं तात्कालिकस्मरणं तद्योगित्वम् । एते गुणाः सर्वकर्मसु प्रकरणाद्दूतीकृत्येषु वा कामदुहोभिलषितप्रदाः । तत्र शास्त्रनिष्ठया पटुत्वं प्रागल्भ्येन धाष्टर्यं प्रतिभानवत्त्वेनेङ्गितज्ञत्वं दूतीगुण उक्तम् । यदाह ।

पटुता धृष्टता चेतीङ्गितज्ञत्वं प्रतारणम् ।
देशकालज्ञता चैव दूतीकृत्ये गुणा मताः ॥

कामदुह इत्यत्र सत्स्वित्यादिना क्विप् ॥

१०८–११२ जीवितादुद्विजमानेनेति प्रद्वेषः प्राणितव्येष्विति भरतानुसरणम् । न क्रियत इति पाठे नः शिरश्चालने । दुष्करमेवाह । धत्त इत्यादि । तेन दुष्करं क्रियते । यस्मादयं नवाम्रे कलिकायुक्ते ध्वनत्कोकिले मृत्यवे मरणाय नेत्रं धत्ते । बकुलगन्धबन्धोर्वातस्य वर्त्मनि शरीरं क्षिपति स्थापयति । अत्र मार्गपदेनानागतेन वायुना येन पथा समागन्तव्यं तत्सूचितम् । बकुलामोदपदेन स्वकार्यक्षम-

---

१०८. यतः B. Bh. O. ततः K1. K2. for अतः; B. om. न; K1. K2. om. न किंचिन्न.

१०९ किंचन for किंचिन्न. D.; A. om. न; तथा for असौ N.

११०. रवत् for रणत् Bh.

११२. दाव for दाह K2.; पद्मपत्रा° for पत्रमात्रा° K1.; मात्रांतरीय° for मात्रान्तराय° N.

माध० । अन्य एवाक्षुण्णः कथाप्रकारो भगवत्याः ।

माल० । स्वगतम् । अदिदुक्करं करेदि । (क)　　　　　　११९

---

( क ) अतिदुष्करं करोति ।

---

ता । गर्भपदेन बाह्यान्तरभावनादृढतोक्ता । दावप्रेम्णा वनवह्निप्रीत्या चन्द्रकिरणान्वारंवारं श्रयति । एतेन चन्द्ररश्मीनां दाहकत्वमुक्तम्। अत्र प्रेमपदेन नायिकानुरागस्य च विरोधिविमर्शशून्यत्वं तृतीयया चाङ्गसङ्गहेतुत्वं च ध्वनितम् । कीदृशः । सरसपद्मिनीपत्त्रमात्रान्तरितो ग्लायमानकायः । सर्वत्र मृत्यव इति योज्यम् । तथा च मरणाय कृतोद्यम इति भावः । यद्वा । अन्तरायो मरणे विघ्नः । तत्र पद्मिनीपत्त्रहेतुत्वम् । तदिह चन्द्रपादादीनां कामोद्दीपकतयानर्थहेतुत्वेन विप्रलम्भस्योत्कर्षः सूचितः । किं च मनोविकार इन्द्रियजन्य इत्यनेनेन्द्रियाणां शान्तिः कृता । नवचूतदर्शनेन नेत्रस्य । चूतैरानद्धत्वमुकुलितत्वाभ्यामतिदुःखदत्वम् । कोकिलरवाकर्णनेन श्रोत्रस्य । बकुलगन्धसंबन्धेन घ्राणस्य । वायुचन्द्रकरयोः स्पर्शेन त्वच इति ।

११४-११७ अक्षुण्णोऽन्याननुभूतः कथाप्रकारः कथनक्रमः । [अतिदुष्करं करोति ] बालचूतदर्शनादेरतिपीडाकरत्वेन मालत्यापि ज्ञानादेवमुक्तमिति भावः । अन्यत्रेत्यादिना त्वय्येव प्रथममनुरक्तोऽयमिति दर्शितम् । तपस्व्यनुकम्प्यः ॥ तपस्वी तापसे चानुकम्प्ये चेति विश्वः ॥ अनेन वैदेशिकोऽयं वराक इति मयैतदुच्यते न तु कारणादित्युक्तम् । शक्यामिति । तथा च त्वमनुरागिणी भवेत्यर्थः ।

---

११४. N. om. माध० ।— भगवत्याः; अयम् after एव K1. K2. O.; °वती for °वत्याः Bh.

११९. O. om. अदि; अति for अदि Bh. K1. K2. N.; दुष्करं for दुक्करं Bh. K1. K2.; स before करेदि K1. K2.

काम०। तदेवं प्रकृत्या सुकुमारः कुमारः कदाचिदप्यन्यत्रा-परिक्लिष्टपूर्वस्तपस्वी यतोऽधुना शक्यमनेन मरणमप्यनुभवितुम्।

माल०। जनान्तिकम्। सहि अत्तणो कारणादो तस्स सव्वलो-आलंकारभूदस्स किं पि आसङ्कन्तीए भअवदीए भीदाविदम्हि। १२० ता किं दाणिं एत्थ पडिवज्जिस्सं। (क)

माध०। दिष्ट्यानुकम्पितोऽस्मि भगवत्या।

---

(क) सखि आत्मनः कारणात्तस्य सर्वलोकालंकारभूतस्य किमप्याशङ्कमानया भगवत्या भीतायितास्मि। तत्किमिदानीमत्र प्रतिपत्स्ये।

---

११८-१२१ अत्रात्मनो मम। किमपीत्यमङ्गलतयावचनीयं मरणमित्यर्थः॥ भीतायितेत्यत्राचारे क्यङ्॥ किमिति। तज्जीवनाय ममापि तत्रानुराग इति वक्तुमुचितमपि कुमारीत्वेनानुक्तमतस्त्वं वदेति भावः। कामन्दकीं प्रति जनान्तिकमिदम्। माधवश्च गुप्तः। स श्रुत्वाह दिष्ट्येत्यादि।

---

११६. B. D. N. om. कुमारः; B. Bh. K1. K2. O. om. अपि.

११७. B. Bh. K2. om. यतः; अनुकंपनीयः after °पस्वी N.; तदिदम् for यतः N.; B. om. अपि.

११८. पिअ before सहि K1. K2.; अतणो for अत्तणो K2.; N. om. तस्स; सवे K2. मच्च O. for सव्व.

११९. °कालं for ° आलं K1. K2.; भूतस्स for भूदस्स O.; सुहगज्जम्मलाएस्सापि K1. सुहगजम्मलाइस्सापि K2. after °दस्स; तस्स before किं N.; वि for पि N.; आ-संकंती भूदाविद्मा विअ ण आणामि किं पडिवज्जिस्सादेत्ति for आस—ज्जिस्सं N.; णिवेद-न्तिए for आसङ्कन्तीए D.; B. om. भअवदीए; भय° for भअ° O; भीसिदा अम्हि B. भीसिदम्हि D. भाविदाम्हि O. for भीदाविदम्हि.

१२०. ण आणामि किं एत्थ for ता—एत्थ K1. K2.; भीदा विय ण याणामि किं पडिवज्जिस्सं ति for ता—ज्जिस्सं O.; दाणीं for दाणिं D.; B. Bh. om. एत्थ; वजिस्सं for वज्जिस्सं K2.

१२१. B. K1. K2. O. om. भगवत्या.

लव०। भअवदी एव्वंवादिणित्ति आचक्खीअदि। अम्हाणं पि भट्टिदारिआ भवणासण्णरच्छामुहमुहुत्तमण्डणस्स तस्स ज्जेव्व बहुसो अणुभूददंसणा भविअ रविकिरणासिलिट्ठमुद्धकमलिणी-कन्दसुन्दरावअवसोहाविभाविदाणङ्गवेअणाधिअदररमणीआ वि १२५

(क) भगवत्येवंवादिनीत्याख्यायते। अस्माकमपि भर्तृदारिका भवनासन्नरथ्यामुखमुहूर्तमण्डनस्य तस्यैव बहुशोनुभूतदर्शना भूत्वा रविकिरणाश्लिष्टमुग्धकमलिनीकन्दसुन्दरावयवशोभाविभावितानङ्ग-वेदनाधिकतररमणीयापि परिजनं दुनोति। नाभिनन्दति केलिकलाः

---

१२२-१२९ अत्र एवंवादिनीत्यत्र कामावस्था गुरुजने लज्जया वक्तुमनर्हापि मालतीनिमित्तमाधवावस्थाश्रवणात्सापि तन्निमित्ता कथ्यत इति भावः। अस्माकं भर्तृदारिका परिजनं दुनोतीत्यन्वयः। आश्लिष्टं स्पृष्टम्। मुग्धो बालः। कन्दं बिसम्। बालकमलिनीमूलं मृदुतरं रविकरस्पर्शान्म्लानं च भवति। तदनेन दृष्टान्तेन निःसह-

---

१२२. भयं for भअ° O.; °णी त्ति for °णि त्ति A. D.; आअक्खीअदि A. अक्खीअदि Bh. आयख्खीयदि O. for आचक्खीअदि; वि for पि A. C. D. N.; K1. om. पि.

१२३ भट्ट for भट्टि B. Bh. C. D. K1. O.; भवण्णास for भ—ण्ण K1.; रत्था B. K2. रछा Bh. for रच्छा; D. N. om. मुह; °मुहुत for मुहुत्त C.

१२४. वहुसो for बहुसो Bh.; अनु for अणु K1.; हूद for भूद Bh.; संदसणा C. दंसणं K2. for दंसणा; भविय for भविअ O.; रइ for रवि K2.; किरणालिट्ठ B. Bh. D. K1. किरणावलिट्ठ C. किरणाश्लिट्ठ K2. अरासिलिट्ठ N. यरालिद्ध O. for किरणा-सिलिट्ठ; °लिनी for. °लिणी K1. O.

१२५. °वयव for °वअव K1. K2. O.; साहा for सोहा Bh.; विहारिदा° C. भा-विदा° K1. विभाविआ° N. विहाविदा O. for विभाविदा; वेयणा° for °वेअणा,° O.; °णाधिकअर K2. °णावइअर N. णाधियदर O. for °णाधिअदर; °णीया for °णीआ O.

परिअणं दुम्मेइ। णाभिणन्ददि केलिकलाओ केवलं कमलाअन्तकन्तहत्थपल्हत्थगण्डमण्डला दिअसं गमेदि। अवि अ। विअसिआरविन्दमअरन्दणीसन्दसुन्दरेण दरदलिदकुन्दमाअन्दमहुबिन्दुसंदोहवाहिणा भवणुज्जाणपेरन्तमारुदेण उत्तम्मदि। (क)

---

केवलं कमलायमानकान्तहस्तपर्यस्तगण्डमण्डला दिवसं गमयति। अपि च। विकसितारविन्दमकरन्दनिःस्यन्दसुन्दरेण दरदलितकुन्दमाकन्दमधुबिन्दुसंदोहवाहिना भवनोद्यानपर्यन्तमारुतेनोत्ताम्यति।

---

त्वतनुत्वे अवयवानामुक्ते। तच्छायामपि सौन्दर्यद्योतनाय सुन्दरपदम्। अधिकतररमणीयापीत्यनेन कामालिङ्गितकायस्य कान्तिप्रकर्ष उक्तः। अत एवापिर्विस्मये। अतिकान्तस्य सुखजनकत्वनैयत्येन दुःखजनकत्वे चित्रात्। दुःखप्रकारमाह। नाभीत्यादि। अत्र यत इत्याध्याहार्यम्। केलिः क्रीडा। कलाश्चतुःषष्टिः। यद्वा। केलीनां कलांश-

---

१२६. °जणं for °अणं B. D. K2.; दूणेदि B. दुम्मेदि Bh. दूतेदि C. दूसेदि D. दुमावेदि K1. K2. दुणोदि N. दूमावेदि O. for दुम्मेइ; नाभि° K1. णाहि° N. for णाभि°; °णंदति Bh. K2. नन्ददि K1. णंदइ N. नंदइ O. for °णंददि; N. om. केलि; कलालीलाओ B. Bh. C. K1. K2. कलाक्कीलाओ O. for केलिकलाओ; केवल for केवलं N.; मिलायंत before कम° O.; कमलाअमाण A. किमिलाअन्त B. कमलायन्त K1. O. मिलायन्त K2. मिलाअंत N. for कमलाअन्त.

१२७. B. Bh. K1. K2. N. O. om. कन्त; हच्छ for हत्थ K1.; पल्लव after हत्थ D.; पल्लत्थ D. O. पल्हच्छ K1. पर्यत्थ K2. वल्हत्थ N. for पल्हत्थ; मुध्ध before गण्ड N.; मण्डलन for मण्डला C.; दिआसाइं A. दिअलं K1. दिअइं K2. दिअहइ N. O. for दिअसं; गमेइ for गमेदि N.; अविच K2. अवि य O. for अवि अ.

१२८. विकसिआ° K2. वियसिया° O. for विअसिआ°; मक° Bh. मय° O. for मअ°; णिस्स° for णीस° A. C.; Bh. om. दर-देण; K2. O. om. दर; दल for दर K1.; दलिअ for दलिद A. N.; मायन्द for माअन्द O.

१२९. मभणुज्जाण A. भवण ज्जाण C. भवणोज्जाण K2. for भवणुज्जाण; प्पेरंत for पेरन्त O.; मारुएण for मारुदेण O.; उत्तमदि B. Bh. C. K2. O. उत्तमेदि K1. उत्तम्मइ N. for उत्तम्मदि.

जं च तस्सिं जत्तादिअहे णिअमहूसवाब्भुदअदंसणपडिव- १३०
ण्णरूवस्स भअवदो कामस्स विअ कामकाणणालंकारआरिणो

---

(क) यच्च तस्मिन्यात्रादिवसे निजमहोत्सवाभ्युदयदर्शनप्रति-
पन्नरूपस्य*भगवतः कामस्येव कामकाननालंकारकारिणस्तस्य विवि-

---

मात्रम् । कथं तर्हि दिनानि गमयतीत्याह । केवलमित्यादि । कम-
लायमानं प्रसारितम् । इदं भरतानुमतम् । यदाह ।

अप्राप्ते च प्रिये कार्यः स्त्रीभिर्गण्डान्वितः करः ॥

पर्यस्तं क्षिप्तम् । निःस्यन्दः क्षरणम् ॥ ईषदर्थे दराव्ययमित्यमरः ॥
दलितं विकसितम् । माकन्दश्चूतः । पुष्पपरमत्र ॥ माकन्दः सह-
कारेस्त्रीति मेदिनी ॥ एतेन वायोस्त्रैगुण्यमुक्तम् ।

१३०–१३९ यच्च प्रियसख्या यात्रादिने तस्य दर्शनसुखं स-
मासादितं तत आरभ्य सा कमलिनीव प्रम्लायतीत्यन्वयः । प्रतिप-
न्नरूपस्य कृतदेहपरिग्रहस्य । कामस्यानङ्गत्वात्पुरातनत्वाच्च । महो-
त्सवदर्शनार्थमिदमुक्तमिति भावः । अद्भुतप्रतिपन्नरूपस्येत्याहिता-
ग्न्यादिः । विविधविलासैरभिरामम् । यद्वा । विविधभ्रमणमभिरा-

---

१३०. अण्णं च B. जेव्व C. अण्णं अ N. for जं च ; N. om. जत्ता; दिअसे K1. K2. दियहे O. for दिअहे [O. has in the Prakrit य, या, &c., almost all throughout for the vowel which remains after the dropping of a consonant. Readings differing from the text only in this particular will not be further noticed. ]; °वाब्भूदअ° A.B. °वमहब्भुदअ Bh. °वभूदे C. °वभ्भुद-अ D. °वब्भुदअ N. °व्वभ्भुदय O. for °वाब्भुदअ; K2. N. om. दंसण; अडि for पडि K1.; °अण्ण for वण्ण K1. K2.

१३१. रूपस्स B. K2. N. हिअअस्स D. for रूवस्स; अस्स before भअ° K1.; N. om. भअवदो कामस्स; कामदेवस्स for कामस्स K2; K2. om. विअ; णिअका° for कामका° B. Bh. C. कानणा° for काणणा° K2.; °लंकारिणो for °लंकारआरिणो K2. N.; °कारिणो for °आरिणो B. K1. O.

* Com., *i. e.*, the Chhâyâ in the Com. agrees with the text, but Jagadhara's reading appears to be °महोत्सवदर्शनाद्भुतप्रतिपन्नरूपस्य.

तस्स विविहविब्भमाहिरामं अणुरूआणुराआणुबन्धमहग्घीकि-
दजोव्वणारम्भं अण्णोण्णदिट्ठिविणिवादवञ्चणावसरजूरविदचि-
त्तुवरन्तकोदूहलं समुल्लसिदसद्धसत्थम्भमन्थराव अवपडिल-
१३५ ग्गसेअपुलअउक्कम्पसुन्दरं आणन्दिदसहीअणं पिअसहीए पर-

---

धविभ्रमाभिराममनुरूपानुरागानुबन्धमहार्घीकृतयौवनारम्भमन्योन्यदृ-
ष्टिविनिपातवञ्चनावसरखिद्यमानचित्तत्वरमाणकौतूहलं समुल्लसि-

---

मोभिरतिर्यत्र तत् । वञ्चना दर्शनाभावः । त्वरमाण शीघ्रमुपजाय-
मानम् । कथं पश्यामीति कुतुकं तयोश्चित्तेभवदित्याशयः । आन-
न्दितसखीजनं कामसंपत्त्येति भावः । विजृम्भमाणो वर्धमानः ।
उद्दामो महान् । दारुणो भयंकरः । मरणशङ्कयेति भावः । दशा
कामावस्था । यथा क्षणमात्रप्राप्तचन्द्रोदया कमलिनी म्लायति तथे-
यमपि प्राप्तपूर्णचन्द्रोदया म्लायति । चन्द्रकरमपि सोढुमक्षमेति भावः।
यद्वा । यथा प्राप्तचन्द्रोदया पद्मिनी म्लायति तथा प्राप्तदर्शनसुखेयं

---

१३२. भअवदो मअणस्स before तस्स N.; विभ्भमा° for विब्भमा° N. O.; °भिरामं for °हिरामं A. B. Bh. D. K1. K2.; N. om. °हिरामं अणुरूआ°; O. om. °णुरूआ °णुरूपा° B. °णुरूव Bh. for °णुरूआ;° रूवा° for णुराआ° Bh.; C. om. °णुराआ; महधाविध Bh. महद्धीकिद. C. D. for महग्घीकिद.

१३३. ज्जोव्वणा° C. ज्जोव्वणा° K1. for जोव्वणा°; °रंभा for रम्भं Bh.; अण्णोण for अण्णोण्ण K2; पडि ° fo विणि° K1. K2.; पाद K1. K2. पाअ N. for वाद; °रखिज्जंत B. D. °रखेदित K1. K2. °रुचालिअ N. for °रजूरविद.

१३४. तुअरन्त K1. K2. °मुद्धरन्त O. for तुवरन्त; हलसमुल्लसि° B. हलं उल्लसि° K1. K2. O. हलुल्लसि° N. for हलं समुल्लसि°; ° सिअ for °सिद N.; सद्धस B. Bh. N. O. साद्धस K1. K2. for सद्धस; °वयवो K1. °वयव K2. O. for वअव; प्पाडि for पडि O.

१३५. °हल्लिअ for °लग्ग N.; स्सेअ for सेअ O.; पुलआ उक्क° K2. पुलउक्क° O. for पुलअ उक्क°; कंपाणंदि for उक्कम्पसुन्दरं आणन्दि° N.; °न्दिअ for °न्दिद K2. N.; णणं for अणं K1. K2. N.; प्पिय for पिअ O.

प्परावलोअणसुहं समासादिदं तदो पहुदि सविसेसदूसहाआस-विअम्भमाणुद्दामदेहदाहदारुणं दसापरिणामं अनुभवन्ती मुहुत्तमेत्तसंपत्तपुण्णचन्दोदआ विअ बालकमालिणी पम्मलाअदि । (क)

---

तसाध्वससस्तम्भमन्थरावयवप्रतिलग्नस्वेदपुलकोत्कम्पसुन्दरमानन्दितसखीजनं प्रियसख्या परस्परावलोकनसुखं समासादितं ततः प्रभृति सविशेषदुःसहायासविजृम्भमाणोद्दामदेहदाहदारुणं दशापरिणाममनुभवन्ती मुहूर्तमात्रसंप्राप्तपूर्णचन्द्रोदयेव*बालकमलिनी प्रम्लायति।

---

म्लायतीत्यर्थः । ननु चन्द्रेण विरोधात्पद्मिन्या म्लानिर्युक्ता । अस्यास्तु माधवानुरागात्तद्दर्शने कथं म्लानिरिति । मैवम् । यथा शीतस्पर्शत्वेन चन्द्रः क्षणं पद्मिनीं सुखयति तथा माधवो मालतीमिति विवक्षितत्वात् । यद्वा । मुहूर्तपदेनेह प्रथमचन्द्रोदय उक्तः । एवं चाभिनवोदिते चन्द्रं रक्ततया सूर्याभं दृष्ट्वा भ्रान्त्या मुहूर्तं पद्मिनी तिष्ठत्यथ प्रम्लायति तथेयमपीत्यर्थः ।

---

१३६. परोप्परा° for परप्परा° Bh.; समादितं K2. समासादिअ N. for समासादितं; प्पहुदि for पहुदि O.; °सहवि° Bh. K1. K2. O. सहमअणवि°; N. for °सहाआसवि.°

१३७. विअम्भमाणू° A. विअम्हणु° Bh. C. विअंभणु° N. वियंभणु° O. for विअम्भमाणु°; Bh. K1. K2. N. O. om: देह; Bh. D. K1. K2. N. O. om. दाह; दारुण for दारुणं K2.; परिणाअं A. विपाकं K1. K2. for परिणामं; अणु Bh. K2. N. O. अच्चा K1. for अनु; होंती for भवन्ती N.

१३८. K1. N. om· मेत्त; सपत्त (?) for संपत्त K1.; पुण. for पुण्ण C. D. K2; अन्दो° B. Bh. यन्दो O. for चन्दो°; K1. K2. om. विअ; बाल for बाल K1; °लिणी विअ प° A. K2.; °लिणी इअं प° C. °लिणिव्व इअं प D. °लिनी विअ प° K1. for °लिणी प°; पम्मलअदि A. पम्माअदि B. Bh. पम्मलीअदि C. परिमाअदि K1. परिमलाअदि K2. पमिलाअदि N. पम्मयदि O. for पम्मलाअदि.

* इव after कमलिनी Com.

अन्तर्मोदानुभवमसृणं स्तम्भनिष्कम्पपक्ष्म
१० व्यक्तं शंसत्यचिरमनयोर्दृष्टमाकेकराक्षम् ॥

न्दम् । अनेन संकल्पसंगतानङ्गस्य पराङ्मुखशङ्कितेयं दृगित्युक्तम् । यदाह । शङ्कायां शङ्किता ज्ञेयेति । कुञ्चितप्रान्तमाकुञ्चितापाङ्गम् । मदयन्तिकाया जडत्वान्मकरन्दस्यान्यदर्शनसासूयत्वाज्जिह्मा दृष्टिः । यदाह ।

जिह्मा दृष्टिरसूयायां जडतालस्ययोस्तथा ॥ इति ।

दृष्टिद्वयेन सुरतप्रागवस्थोक्ता । प्रेम्ण उद्रेकादतिपरिपाकात्स्तिमितं स्थिरं लुलितमर्धमुकुलितं च । अर्धमुकुलितेयं दृक् । यदाह ।

अङ्गादिष्वर्धमुकुला गन्धस्पर्शसुखादिषु ।
अर्धव्याकोषपक्ष्माग्रा स्रस्तार्धमुकुलैः पुटैः ॥
स्मृतार्धमुकुला दृष्टिः किंचिन्मीलिततारका ॥

अनेन रताभोग उक्तः । नखदशनक्षतादिशङ्कया मानं सूचयति । किंचिदाकुञ्चिते अनमिते भ्रुवौ यत्र तत् । एकस्या एव भ्रुव उत्क्षेपणं कुञ्चनमिह । यदाह ।

एकस्या एव उत्क्षेपो भ्रुवः कुञ्चनमुच्यते ॥

कोपे चास्य प्रयोगः । यदाह ।

कोपे वितर्के हेलायां लीलादौ सहजे तथा ।
दर्शने ग्रहणे चैव भ्रुवमेकां समुत्क्षिपेत् ॥

मानस्याल्पत्वसूचनार्थमाङ्प्रयोगः । रतावसानमाह । हृदये हर्षानुभवेन मसृणं स्निग्धं मन्दं वा । रतान्ते लज्जामाह । स्तम्भं लज्जान्विततया पतितोर्धपुटत्वात् । कथं पुनः संभोगो भावीति चिन्तया निष्कम्पम् । शून्यतया निष्कम्पं वा । तादृशं पक्ष्म यत्र । तद्विच्छेदमाह । आकेकर-

६९. °मोहा° for °मोदा° N.; मसृण for मसृणं C. N.; तम्भ Kl. K2. स्रस्त N. O. for स्तम्भ.

पुरुषः । वत्से इत इतः ।

मद० । सहि बुद्धरक्खिदे अवि पुणो वि दीसइ एस जीविदप्प-
दाई पुण्डरीअलोअणो । (क)

बुद्ध० । जइ देव्वमणुऊलं भविस्सादि । (ख) पुरुषेण
निष्क्रान्ते । ७५

माध० । अपवार्य । चिरादाशातन्तुस्त्रुटतु बिसिनीसूत्रभिदुरो
महानाधिव्याधिर्निरवधिरिदानीं प्रसरतु ।

(क) सखि बुद्धरक्षिते अपि* पुनरपि दृश्यत एष जीवितप्रदायी
पुण्डरीकलोचनः ।

(ख) यदि दैवमनुकूलं भविष्यति ।

मक्षि यत्र तत् । आकेकरा त्वरालोके विच्छेदे प्रोषितेषु चेत्याद्युक्तम् ।
तदिहाकेकरलक्षण आकुञ्चितेत्यादि प्रथमपदेनोक्तम् । द्वितीयेन मुहु-
र्व्यावृत्ततारेत्युक्तम् । तृतीयेन हर्षितार्धेत्याद्युक्तम् । अपि नाम संभा-
वनायाम् । अव्ययसमुदायत्वात् ।

७६–७९ करुणावस्थामाह । चिरादित्यादि । चिरशङ्कित आशा-
तन्तुर्मालतीप्राप्त्याशारूपहृदयावलम्बनं संप्रति भिद्यताम् । बिसिनीसूत्र-

७१. A. om. वत्से.

७२. अपवार्य after मद० । N.; K1. om. सहि; °रक्खिए N. for रक्खिदे; णाम after अवि A. D. K1. K2.; N. om. वि; दाव after वि A. Bh. C. D. O.; दीसिदइ Bh. दीसीअदि K1. K2. दीसाविस्सदि O. for दीसइ; स K1. K2. एसो N. for एस; °विअ for °विद N.

७३. प्पदो A. C. D. दायी K1. प्पआई N. स्वदाई O. for प्पदाई.

७४. जादि for जइ K2. N.; दिव्वं K1. K2. for देव्वं; °कूलं A. Bh. C. °उलं K1. for °ऊलं; °ऊलइस्सदि N. °कूलियस्सदि O. for °ऊलं—स्सादि; A. B. C. D. K1. add त्ति after °स्सादि; K1. K2. N. O. om. पुरुषेण; B. adds सह after पुरुषेण.

७५. इति before निष्क्रा° K1. K2.; निष्क्रान्ताः K1. K2. निष्कामति N. निः-क्रामंति O. for निष्क्रान्ते.

७७. आधिर्व्या° for आधिव्या° B. C. O.

* Com. follows A. D., &c., and has दृश्यते for दृश्यते.

प्रतिष्ठामव्याजं व्रजतु मयि पारिप्लवधुरा
विधिः स्वास्थ्यं धत्तां भवतु कृतकृत्यश्च मदनः ॥
८० अथ वा । समानप्रेमाणं जनमसुलभं प्रार्थितवतो
विधौ वामारम्भे मम समुचितैषा परिणतिः ।
तथाप्यस्मिन्दानश्रवणसमयेऽस्याः प्रविगल-
त्प्रभं प्रातश्चन्द्रद्युति वदनमन्तर्दहति माम् ॥

---

वह्निदुरो भेदनस्वभावो यतः॥ भिदेः कर्मकर्तरीति कुरच् ॥ संभूय त्रुटितत्वेन मृणालतन्तुसाम्यम् । नैराश्यान्मरणमाह । आधिर्मनोऽव्यथा तद्रूपो व्याधिरनवच्छिन्नोत एव महान्व्याप्नोतु । इह महत्त्वनिरवधित्वाभ्यां मरणमाह । आशाच्छेदानन्तरं च मरणमुचितमेव । यदाह ।

सर्वैः कृतैः प्रतीकारैर्यदा नास्ति समागमः ।
कामाग्निना समाप्तस्य जायते मरणं ततः ॥

स्त्रीहेतुमरणादधीरत्वमाशङ्क्यानुज्ञोत्तरमाह।पारिप्लवधुरा चपलकक्षा सत्यं स्थितिं मयि बध्नातु । अभीष्टलाभेन विधिर्निराकुलो भवतु । मालतीं विना दुःसहवेदनादायी मनोभूः कृतकृत्यो भवतु । मरणादधिकं किं कर्तव्यमस्येत्यर्थः । एतदुपालम्भगर्भं वच उद्वेगात् । यदाह ।

हाहाहचिन्तानिःश्वासग्लानिखेदप्रजागरैः ।
रोदनैर्मन्दभणितैर्दैवोपालम्भनेन च ॥ इति ।

८०-८३ समानेत्यादि । वामारम्भे प्रतिकूले विधौ ममैषा परिणतिः पूर्वोक्ता युक्तैव । कीदृशस्य । तुल्यप्रीतिं दुष्प्रापं जनं याचितवतः । वामे हि विधौ सुलभमपि न लभ्यते किं पुनरसुलभमिति भावः ।

---

७८. निर्व्याजं K1. K2. °मव्याजां N. for °मव्याजं; धुरं for धुरा K1. K2.
७९. धत्तां स्वास्थ्यं for स्वा—त्तां O.
८१. °दितैषा for °चितैषा K1.
८२. परि° for प्रवि° O.

काम०। स्वगतम्। एवमतिदुर्मनायमानः पीडयति मां वत्सो माधवो वत्सा मालती च दुष्करं निराशा प्राणिति। प्रकाशम्। ८५ पृच्छामि तावदायुष्मन्तम्। अपि भवानमंस्त यथा भूरिवसुरेव मालतीमस्मभ्यं दास्यति।

माध०। सलज्जम्। न हि न हि।

काम०। न तर्हि प्रागवस्थायाः परिहीयसे।

मक०। भगवति दत्तपूर्वेत्याशङ्क्यते। ९०

---

दृष्टकारणस्यानुपलम्भाद्विधेर्वामत्वम्। असुलभत्वं परतन्त्रत्वात्। यद्यपि युक्तेऽर्थे खेदो नास्ति तथाप्यस्या मालत्यास्तादृशं मुखं मामन्तर्दहति। एतन्मुखं वीक्ष्य मनस्तापो मे भवतीति भावः। अस्मिन्दानश्रवणसमये नन्दनाय मालती दातव्येति श्रुत्वा खेदात्कान्तिशून्यत्वम्। अत एव प्रातश्चन्द्रकान्ति क्वापि विगतकान्ति भवति। अथ च प्रातश्चन्द्रोपमया रागध्वनेर्विधिं प्रति मालतीकोपोऽपि सूचितः।

८५-९९ दुष्करं यथा तथा प्राणिति जीवति। अमंस्त मन्यते स्म। प्रागवस्था मालतीप्राप्तिलक्षणा। तदा तस्याज्ञानमिति भावः। दत्त-पूर्वा पूर्वं दत्ता॥ सुप्सुपेति समासः॥ इदं च तापहेतुः। वागिति वाचि

---

८४. जनान्तिकं for स्वगतम् K1. O.; K2. om. स्वगतम्।

८५. K1. K2. N. om. माधवो; च after वत्सा K1. K2. N. O.; K1. N. O. om. च after °लती; K2. N. O. om. प्रकाशम्.

८६. प्रकाशं after °युष्मन्तम् K2. N. O.; अथ किं for अपि N.; K1. K2. N. O. om. यथा; B. om. एव.

८७. अस्मभ्यं मालतीं for मा–भ्यं K1. K2.; न before दास्यति C.; इति after °स्यति B. K1. K2. N. O.

८८. N. om. this and the next three lines; O. om. one नहि.

८९. Bh. om. काम०।; A. Bh. om. न; किं for न O.; °स्थया for °स्थायाः Bh.

९०. माध०। for मक०। K1. K2.; B. om. भगवति; अदत्त for दत्त B.; °शंकते for °शङ्क्यते B.

काम० । जानामि तां खलु वार्त्ताम् । इदं तु प्रसिद्धमेव यथा नन्दनाथ मालतीं प्रार्थयमानं भूरिवसुर्नृपतिमुक्तवान्प्रभवति निजस्य कन्यकाजनस्य महाराज इति ।

मक० । अस्त्येतत् ।

९९ काम०। अद्य च स्वयं राज्ञैव दत्ता मालतीति पुरुषेणावेदितम् । तद्वत्स वाक्प्रतिष्ठानि देहिनां व्यवहारतन्त्राणि वाचि पुण्यापुण्यहेतवो व्यवस्थाः सर्वेषां जनानामायतन्त इति । सा च भूरिवसोर्वागनृतात्मिकैव न खलु महाराजस्य मालती निजा कन्यका कन्यादाने च नृपतयः प्रमाणमिति नैवंविधो

१०० धर्माचारसमयस्तस्मादविमर्शितव्यमेतत् । कथं च वत्स मामनवधानां मन्यसे ।

---

सर्वं प्रतिष्ठितमिति भावः । अनृतात्मिकासत्या । धर्माचारसमयो धार्मिकसिद्धान्तः ॥ समयाः शपथाचारकालसिद्धान्तसंविद इति विश्वः ॥

---

९१. K2. om. काम०।; जानासि for जानामि A. C. D. K2.; O. om. तां; न before तां C; न after तां K1. K2.; तावत् for तु K1. K2. O.

९२. किं तु before नन्द° N.; नर° for नृ° O.; एवम् before उक्तवान् C. K2. O.; यथा before प्रभवति B. Bh. C. O.

९३. निज for निजस्य B. Bh. C. K1. K2.

९५. एव after अद्य A.; C. om. च; N. om. राज्ञा; मालती दत्तेति for द–ति K1. K2. N. O.; संप्रत्येवं K1. संप्रत्येव K2. N. after इति; अविदितं पुरुषेण for पु–तम् N.

९६. हृदि for वाक् A. K1.; A. B. C. D. add °बन्धनानि after °ष्ठानि; °रान्तराणि for °रतन्त्राणि K1. K2.

९७. च after वाचि K1. K2.; सर्वथा N. for सर्वेषां; हेतवो व्यवस्थिताः सर्वं च वचनानामायत्तं for हेतवो–इति A. B. Bh. C. D.; N. om. इति.

९८. अनृता B. अनृतात्मका N. अमृतात्मिका O. for अनृतात्मिका; मालती निजमहाराजस्य K1. K2. मालती महाराजस्य O. for महा–तीं; कन्यका मालती for माल–का N.

९९. निजं for निजा C O.; K1. K2. om. निजा; निज before कन्या° N.; कन्यका for कन्या B. N.; K2. om. कन्या; प्रदाने for दाने A. K1. K2. N. O.; K1. om. च; विषयः for समयः K1.

१००. तद् for तस्माद् D.; विमर्शितव्यं A. D. अमर्शितव्यं C, विमर्षितव्यं K1. विमर्षनीयं K2. अव्यवस्थितं N. अविचिकित्स्यं O. for अविमर्शितव्यम्; एव before एतत् N.; वा before वत्स K1.; K2. om. वत्स.

पश्य। मा वा सपत्नेष्वपि नाम तद्भू-
त्पापं यदस्यां त्वयि वा विशङ्क्यम्।
तत्सर्वथा संगमनाय यत्नः
प्राणव्ययेनापि मया विधेयः॥ १०५

मक०। सुष्ठु युज्यमानमादिश्यते युष्माभिः।

अपि च।

दया वा स्नेहो वा भगवति निजेऽस्मिञ्शिशुजने
भवत्याः संसाराद्विरतमपि चित्तं द्रवयति।

१०२-१०५ निजावधानमाह। मा वेति। अस्यां मालत्यां त्वयि च यत्पापं विवाहानिर्वाहे मरणरूपं शङ्कनीयं विप्रयोगजन्यदुःखादि वा तच्छत्रुष्वपि नाम प्राकाश्ये मा वा भून्मैव भविष्यति। वाशब्द एवार्थे। स्वकर्तव्यमाह। तदिति। तस्माद्युवयोः संबन्धाय सर्वप्रकारेण जीवत्यागेनापि मया प्रयत्नः कार्यः। यदि बुद्धिकौशलेन न सिद्धिस्तदा प्राणव्ययेनापि साध्यमित्यपेः स्वरसः। मरणादेरमङ्गलतया पापपदेनोपन्यासः। शत्रुष्वपि मा भूदिति लोकोक्तिच्छायालंकारः।

१०८-११२ दयेत्यादि। हे भगवति अस्मिञ्शिशुजने बालजने माधवे मालत्यां च दया करुणा स्नेहो ममता च संसाराद्विरक्तमपि भगवत्याश्चित्तं द्रवयत्यार्द्रीकरोति। भवत्या इति दयाद्यन्वयि चित्तान्वयि च। काकाक्षिगोलकवत्। वाशब्दौ चार्थे। अत एव चित्तद्रवणात्। व्रत-

१०२. वां for वा Bh. K1.; मा for तद् Bh.

१०३. °चि शङ्क्यम् for विशङ्क्यम् K1. K2. (in K2. वि written above चि).

१०६. सर्वं before सुष्ठु N.; सर्वं for सुष्ठु O.; सर्वं after सुष्ठु K1. K2.; इदं after °मानम् Bh.; भवतीभिः for युष्माभिः B.

१०८ जने for निजे O.

१०९ चेतो for चित्तं B.

११० अतश्च प्रव्रज्यासुलभसमयाचारविमुखः

प्रसक्तस्ते यत्नः प्रभवति पुनर्दैवमपरम् ॥

नेपथ्ये । भअवदि कामन्दइ एसा भट्टिणी विण्णवेदि मालदिं घेऊण तुरिदं आअच्छदु त्ति । ( क )

काम° । वत्से उत्तिष्ठ । सर्वे उत्तिष्ठन्ति ।

११५ मालतीमाधवौ सकरुणानुरागमन्योन्यमवलोकयतः ।

( क ) भगवति कामन्दकि एषा भट्टिनी विज्ञापयति मालतीं गृहीत्वा त्वरितमागच्छत्विति ।

ग्रहणपूर्वकसर्वैषणानिवृत्तिः प्रव्रज्या । तस्यां सुलभोवश्यंभावी समयाचारोनुष्ठानविशेषो ध्यानादिविषयस्तत्र विमुखो निरुद्धो यत्नस्ते प्रसक्तोविच्छिन्नः सन्प्रभवति । च एवार्थे । कार्यासिद्धिरदृष्टविलम्बात् । तत्र न भवत्या दोष इत्याह । अपरं पुनर्दैवं प्रभवति । ईश्वरस्त्रीषु राज्ञीपदोपचारेण भट्टिनीत्युक्तम् । भरतोप्याह ।

राजस्त्रियस्तु संभाष्याः सर्वाः परिजनेन तु ।

भट्टिनी स्वामिनीत्येवं नाट्ये प्राहुर्विचक्षणाः ॥

११० समयसुलभा° for सुलभसमया° A. Bh. C.; समुदा° for समया° K1. K2.

११२. भगवति Bh. भगवदि K2. for भअवदि; कामन्दइ भयवदि for भ–इ O.; विण° for विण्ण° K1.; A. B. Bh. C. D. add जधा after °वेदि.

११३. °लदीं A. D. °लदी B. C. for °लदिं; घेत्तूण B. घेत्तूण Bh. N. O. गेह्निअ K1. for घेऊण; तुरिअं for तुरिदं N.; आगछेत्ति D. आअच्छदित्ति K1. आगच्छदित्ति K2. आअच्छुत्ति N. for आअ–त्ति.

११४. उत्तिष्ठ twice B.; B. om. सर्वे–न्ति; सर्वा for सर्वे N.; उत्थाय परिक्रामन्ति for उत्तिष्ठन्ति K1. K2. N. O.

११५. °रागौ for °रागम् K1.; K1. K2. om. अन्योन्यम्; आलोक° for अवलोक° B.

माध०। स्वगतम्। कष्टमेतावती लोकयात्रा मालत्या समं माधवस्य। अहो नु खलु भोः।

सुहृदिव प्रकटय्य सुखप्रदः
प्रथममेकरसामनुकूलताम्।
पुनरकाण्डविवर्तनदारुणः
प्रविशिनष्टि विधिर्मनसो रुजम्॥ १२०

माल०। स्वगतम्। महाभाअ लोअणाणन्द एत्तिअं दिट्ठोसि। (क)

---

(क) महाभाग लोचनानन्द* एतावद्दृष्टोसि।

---

११६-१२१ लोकयात्रा दर्शनादिकम्। अहो नु खलु भो इत्यव्ययसमुदायो निर्वेदे। सुहृदित्यादि। एकत्रैव रसो रतिर्यस्यास्ताम्। यद्वा। एक एव रसः शृङ्गारो यस्यां ताम्। निरन्तरां वानुकूलतामानुकूल्यं प्रथमं प्रकाश्य सुखप्रदो विधिः पुनर्मनसो रुजं पीडां प्रविशिनष्टयतिशयितां करोति। कीदृशः। अकाण्डादकस्माद्विवर्तनेना-

---

११६. K1. K2. N. O. om. स्वगतम्; कथम् for कष्टम् K1. K2. O.; हि after °वती K2. N.; माधवस्य मालत्या समं लोकयात्रा K1. O. मालत्या समं लोकयात्रा K2. माधवस्य मालत्या सह लोकयात्रा N. for लोक–वस्य.

११७. निर्वेदे before अहो K1.; Bh. om. नु; मोहः for भोः Bh.

११८. प्रदां for प्रदः N. O.

११९. प्रकटीय्य° for प्रकटय्य A.; °रसाद् for °रसाम् K1. K2.

१२१ विधिरहो विशिनष्टि मनोरुजं for प्रवि–जम् A. Bh. C. D.; परि° for प्रवि° K1. N. O.

१२२. अपवार्य for स्वगतम् K1. K2. N. O.; महानुभाअ K1. महानुभाव N. महाणुभाव O. for महाभाअ; लोचणा° B. लोअना° K2. for लोअणा°; °णंदअ B. °नंद O. for °णन्द; एत्तिके for एत्तिअं K1.

* °नन्दक एतावदेव Com.

लव० । हद्धी हद्धी सरीरसंसअं जेव्व णो पिअसही आरोविदा अमच्चेण । ( क )

१२५ माल० । स्वगतम् । परिणदं मे दाणिं जीविदतिह्णाए फलं । णिव्वूढं अ णिक्करुणदाए तादस्स कावालिअत्तणं । पडिट्ठिदो

---

( क ) हा धिक् हा धिक् शरीरसंशयमेव नः प्रियसख्यारोपितामात्येन ।

---

न्यथाभावेन विरुद्धवर्तनेन वा दारुणो दुःखदायी । सुहृदिव । यथा मित्रमानुकूल्यमुत्पाद्य सुखप्रदं सदकाण्ड एव विरुद्धाचरणान्मनःपीडां करोति तथेत्यर्थः ।

१२२-१२६ [माल० वा०] पुनर्दर्शनं न भवितेति भावः । अत एवैतावदित्यनेन करुणा । नयनानन्देत्यनेनानुरागः । अत्र पुरा विरहदशायां माधवप्रतिच्छन्दकादिदर्शनाद्धारितस्य जीवितस्य पर्यवसानं वृत्तमिति परिणतपदस्यार्थः । कापालिकत्वं नृशंसता । अघोरघण्टस्य सूचनमप्येतत् ।

---

१२३. O. om. one हद्धी; प्पिय for पिअ O.; समारोविदा K1. K2. आरोइदा for आरोविदा.

१२४. मालदी after अमच्चेण K1. K2.

१२५. A. K1. K2. N. om. स्वगतम्; A. N. om. मे; दाणिं मे for मे दाणिं Bh. K1. K2.; जीव for जीविद Bh.; सार्स after फलं A. K1. K2.

१२६. च for अ D.; Bh. K1. om. अ; °ताए for °दाए O.; कावालिअत्तणं तादस्स for ता-त्तणं K1. K2.; A. B. Bh. C. D. add वि after तादस्स; परिसेसिदो B. Bh. परिसेविदो C. परिट्ठिदो K1. पदिट्ठिदो K2. परिणिट्ठिदो N. पडित्थिदो O. for पडिट्ठिदो.

दुट्ठदेव्वस्स दारुणसमारम्भसरिसो परिणामो । कं एत्थ उवाल-
हामि मन्दभाइणी कं वा असरणा सरणं पडिवज्जामि । (क)

लव० । सहि इदो इदो । (ख) इति कामन्दक्या सह निष्क्रान्ते ।

माध० । स्वगतम् । नूनमाश्वासनमात्रमेतन्माधवस्य सहजस्ने- १३०
हकातरा करोति भगवती । सोद्वेगम् । हन्त सर्वथा संशयितज-
न्मसाफल्यः संवृत्तोस्मि । तत्किमिदानीं कर्तव्यम् । विचिन्त्य । न

(क) परिणतं म इदानीं जीविततृष्णायाः फलम् । निर्व्यूढं च
निष्करुणतया तातस्य* कापालिकत्वम् । प्रतिष्ठितो दुष्टदैवस्य
दारुणसमारम्भसदृशः परिणामः । कमिहोपालभे मन्दभागिनी कं
वाशरणा शरणं प्रतिपद्ये ।

(ख) सखि इत इतः ।

१३१-१३४ जन्मसाफल्यं मालतीप्राप्त्या । महामांसेति भाव्य-
ङ्कसूचनम् । वीरहस्तान्मांसं गृहीत्वा वीरायाभिमतवरदानमिति श्म-
शानसिद्धयोगिनीमतम् । यद्वा । उभयथा मरणमुपस्थितम् । महामांसवि-
क्रये मालतीलाभोपि शङ्क्यत इति तत्करणम् । मांसविक्रयस्य मकर-

१२७. अ after °दो K2.; दुद्देव्वस्स Bh. देव्वहदअस्स N. दद्धदेव्वस्स O. दुद्धदे-
व्वस्स A. B. C. D. K2. for दुट्ठदेव्वस्स; अदि before दारुण K1. K2.; दारुणो
for दारुण O.; N. om. सरिसो; ता before कं N.; एच्छ K1. इत्थ K2. वा O.
for एत्थ; B. Bh. D. N. om. एत्थ; उवलम्भामि K1. उवलहामि K2. उवालंभामि
N. उवालंहामि O. for उवालहामि.

१२८. °भाइ K1. °भाइआ N. °भाआ O. for °भाइणी. दाणी before कं K1.; B.
om. असरणा; वडिवज्जामि Bh. पज्ज्वजामि O. for पडिवज्जामि.

१२९. K1. om. one इदो; K1. N. O. om. इति; A. D. K1. K2. N. O.
om. कामन्दकया सह; समं for सह Bh.; निष्क्रामन्ति A. D. K1 K2. परिक्रामति N.
परिक्रामंति O. for निष्क्रान्ते.

१३०. °श्वासना Bh. K2. °श्वसना K1. °श्वास O. for °श्वासन; एव before एतद्
A. D. K1. K2.; एव for एतद् N.

१३१. कातरां for कातरा C.; °वतीं for °वती C.; B. Bh. C. om. सर्वथा.

१३२. °साकल्यं for °साफल्यः C.; B. om. तत्-र्तव्यं; N. om. इदानीं; अत्र for
इदानीं K1. K2.; इति before विचिन्त्य K1. K2.

* Com. तातस्य after °कत्वं.

खलु महामांसविक्रयादन्यमुपायं पश्यामि । प्रकाशम् । वयस्य मकरन्द अपि भवानुत्कण्ठते मदयन्तिकायाः ।

१३९ मक० । अथ किम् ।

तन्मे मनः क्षिपति यत्सरसप्रहार-
मालोक्य मामगणितस्खलदुत्तरीया ।
त्रस्तैकहायनकुरङ्गविलोलदृष्टि-
राश्लिष्टवत्यमृतसंवलितैरिवाङ्गैः ॥

१४० माध० । सुलभैव बुद्धरक्षिताप्रियसखी भवतः । अपि च । प्रमथ्य क्रव्यादं मरणसमये रक्षितवतः
परिष्वङ्गं लब्ध्वा तव कथमिवान्यत्र रमताम् ।

---

न्द्रसंनिधावशक्यत्वान्मकरन्दं मदयन्तिकां प्रत्युत्कण्ठयति । वयस्येति । मदयन्तिकायाः कृत इति शेषः । यद्वा ॥ अधीगर्थेति कर्मणि षष्ठी ॥

१३५-१३९ अथ किं स्वीकारे । तन्म इत्यादि । तन्मम चित्तं हरति यदेतादृशैरङ्गैर्मामालिङ्गितवती । सरसः सरक्तः प्रहारो यत्र तादृशं मामवलोक्य । अत एव त्वरयागणितं स्खलत्प्रभ्रश्यदुत्तरीयं स्तनावरणवासो यस्याः सा । एतेन निरन्तरस्तनस्पर्शः सूचितः । अत एवानन्दसंदोहदायित्वादमृतसिक्तैरिव । भयवत्त्वेन त्रस्तैकवर्षीयहरिणस्येव चञ्चला दृष्टिर्यस्याः सा ॥ वर्षोऽब्दो हायनोऽस्त्रीत्यमरः ॥

१४०-१४४ त्रासेन त्वदालिङ्गनं न तु स्नेहादिति शङ्कापनोदाय दूतीसुलभतयानुरागमेवाह । सुलभेति । प्रमथ्येत्यादि । सा तवालिङ्गनं प्राप्यान्यत्र कथं रमताम् । अपि तु नैव । इवशब्दोनवक्लृप्तौ । कुलीने-

---

१३३. अन्यद् for अन्यम् A. Bh. C. D. K1. K2. N.; उपायान्तरं for उपायं A. Bh. C. D. N.

१३४. °त्कण्ठसे for °त्कण्ठते Bh.; °कायां for °कायाः N.

१३६. सहसा for सरस C.

१३९. °तैरपाङ्गैः for °तैरिवाङ्गैः B.

१४०. दुर्लभा न D. O. न दुर्लभा N. for सुलभा; N. O. om. एव; °क्षितायाः for °क्षिता K2.; B. om. प्रिय; N. om. भवतः.

तथा च व्यापारः कमलनयनाया नयनयो-
स्त्वयि व्यक्तस्नेहस्तिमितरमणीयश्चिरमभूत् ॥

मक॰। तदुत्तिष्ठ पारासिन्धुसंभेदमवगाह्य नगरीमेव प्रविशा- १४५
वः। उत्थाय परिक्रामतः ।

माध॰ । अयमसौ महानद्योः संभेदः । य एषः
जलनिबिडितवस्त्रव्यक्तनिम्नोन्नताभिः
परिगततटभूमिः स्नानमात्रोत्थिताभिः ।

---

कमालिङ्ग्य नान्यत्र रमत इति भावः । कीदृशस्य । क्रव्यमाममांसम-
त्तीति क्रव्याद्व्याघ्रः । तं विनाश्य मरणकाले तां रक्षितवतः । एतेन
कृतोपकारितोक्ता । अतोपि नान्यत्र रमते । पश्चादस्याश्चक्षुषोस्तथा तेन
प्रकारेण त्वयि व्यापारश्च व्यक्तः स्नेहात्स्तिमितो मन्दोत एव रमणी-
यश्चिरमभूत् । रागेण तया साभिलाषमालोकितोसीति भावः । एतेनानु-
राग उक्तः । यदाहानुरागप्रकरणे ।

तुष्यत्यस्य कथाभिस्तु सस्नेहं च निरीक्षते ॥

क्रव्यमामिषमुद्दासमिति हारावली ॥

१४५–१५१ पारा च सिन्धुश्च ते नद्यौ तयोः संगमः । अव-
गाह्य विलोड्य । स्नात्वेति यावत् । क्रमशान्तिहेतुतया महामांसादा-
नहेतुतया च स्नानम् । व्यतिकरः संगमः । जलेत्यादि । वधूभिर्नारीभिः
सेविततटदेशः । कीदृशीभिः। जलेन निबिडितमङ्गलग्नं यद्वासस्तेन व्य-

---

१४३. °वदनाया for °नयनाया Bh. C.

१४४. स्तिमिर for स्तिमित B. K1.

१४५. D. N. om. मक॰ । ; वरदा for पारा N.; नगरमेव for नगरीमेव K2.

१४६. परिक्रम्य for परिक्रामतः B. Bh. C.

१४७. मक॰ for माध॰ N. O.; Bh. om. माध॰ । ; व्यतिकरः for संभेदः Com. K1. K2. N. O; अथ for यः O.

१४९. स्नात for स्नान N.

१५० रुचिरकनककुम्भश्रीमदाभोगतुङ्ग-
स्तनविनिहितहस्तस्वस्तिकाभिर्वधूभिः ॥

इति निष्क्रान्ताः सर्वे ।

॥ शार्दूलविभ्रमो नाम चतुर्थोऽङ्कः ॥

---

क्तौ निम्नोन्नतौ जघनादिस्तनाद्यौ यासाम्।अत एव स्नानमात्रोत्थिताभिः। मात्रपदेन स्नानार्द्रवस्त्रापरित्यागः सूचितः । अत एव चाह्लादहेतुतया स्नानमपि । तौ दृष्ट्वा तासां लज्जामाह । मनोज्ञस्वर्णघटशोभावानाभोगः परिपूर्णता ययोरुच्चकुचयोस्तयोर्विनिहितौ दत्तौ हस्तावेव स्वस्तिकौ याभिस्ताभिः। हस्ताभ्यां स्वस्तिकोन्योन्यवामदक्षिणविन्यासः। यदाह ।

मणिबन्धनविन्यस्तावरालौ स्त्रीप्रयोजितौ ।
उत्तानौ वामपार्श्वस्थौ स्वस्तिकः परिकीर्तितः ॥

अरालश्चैवम् ।

आद्या धनुर्लताकारा कुञ्चितोङ्गुष्ठकस्तथा ।
शेषा भिन्नोर्ध्ववलिता अरालेङ्गुलयः करे ॥

कनकेत्यादिना तासां गौरीत्वमुक्तम् । मङ्गलकलशानामिवैषां दर्शनेनेष्टसिद्धिरपि सूचिता ।

असूत यं रत्नधरो द्विजेशो द्विजेशकन्या दमयन्तिकापि ।
जगद्धरं तत्कृतटिप्पणेङ्कोगमच्चतुर्थो रसराशिवासः ॥

॥ इति चतुर्थोङ्कः ॥

---

१५०. मद्दा° for मदा° O.

१५२. निःक्रान्तौ for निष्क्रान्ताः Bh.; Bh. om. सर्वे.

१५३. मालतीमाधवप्रकरणे चतुर्थोङ्कः संपूर्णः for शा-ङ्कः D; A. K1. K2. N. O. om. शा-म; संभ्रमो Bh. संक्रमो C. for विभ्रमो; समाप्तः after अङ्कः A.

# पञ्चमोऽङ्कः ।

ततः प्रविशत्याकाशयानेन भीषणोज्ज्वलवेशा कपालकुण्डला ।

कपा° । षडधिकदशनाडीचक्रमध्यस्थितात्मा
हृदि विनिहितरूपः सिद्धिदस्तद्विदां यः ।

---

संप्रति प्रमथ्य क्रव्यादमित्यनेनाघोरघण्टकपालकुण्डलाप्रवेशे सूचिते महामांसविक्रयप्रतिज्ञया च माधवस्य श्मशानप्रवेशे सत्यङ्कावतारः।

१-५ आकाशयानेन प्रवेशो योगसिद्धिसूचनाय । भीषणा भयंकरी । उज्ज्वलवेशा विशुद्धशरीरा । एतदपि योगिनीत्वादेव । षडधिकेत्यादि । स शक्तिनाथः शिवो जयति जययुक्तो भवति ॥ कालसामान्ये भवन्ती वक्तव्येति भाष्यकारवचनात्कालत्रितयेपि वा लट् ॥ श्मशाननाथस्य जयेन श्मशानसाधनसिद्धिः सूचिता । कीदृशः। अविचलितं निःस्पन्दीभूतम् । विषयान्तरव्यावृत्तमिति यावत् । मनो येषां तैः साधकैर्मृग्यमाणोऽन्विष्यमाणः । अनेन ध्यानानुष्ठानमुक्तम् । यदाह ।

रूपवर्णप्रमाणाढ्यं परिकल्प्य सुबुद्धिना ।
तथा ध्यायेत देवेशं यथा चित्तं स्थिरं भवेत् ॥

चित्तस्थैर्यं तु निर्विषयतयैव । यदाह ।

मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धस्य विषयासङ्गि मुक्तेर्निर्विषयं मनः ॥

तथा च निराकारोप्ययं सहसैव न साक्षात्कारविषयो भवतीति न योग्यानुपलम्भमात्रेण निरस्य इत्यपि कटाक्षितम् । शक्तिभिर्ब्राह्मीमाहेश्वरीकौमारीवैष्णवीवाराहीमाहेन्द्रीचामुण्डाचण्डिकाख्याभिरष्टाभिः परितो नद्धो वेष्टितो भैरवमूर्तित्वात् । यद्वा । शक्तिभिर्ज्ञानेच्छामयत्वात्मिकाभिः परिणद्ध उपचितः । अत एव शक्तीनामणिमादीनां नाथः प्रभुः ।

---

१. °उज्वला for °उज्ज्वलवेशा A. Bh. C. K1. K2. O.

अविचलितमनोभिः साधकैर्मृग्यमाणः
५ स जयति परिणद्धः शक्तिभिः शक्तिनाथः ॥

---

अत एव जयति सर्वोत्कृष्टो वर्तते । कीदृशः । षट्सु कर्णनाभिहृत्कण्ठतालुभ्रूमध्यवर्तिषु शिवशक्तिसंघट्टस्थानेषु नाडीसंघट्टेषु हृदाद्यधिष्ठितप्राणविशेषचलनयोगाच्चक्रेष्विव मध्येऽधिकं प्रधानं यद्दशनाडीचक्रमिडापिङ्गलासुषुम्णागान्धारीहस्तिजिह्वापूषायशालम्बुषाकुहूशङ्खिन्याख्या दश नाड्यो हृद्द्वैकोत्तरशतसंख्यासु तिर्यगूर्ध्वाधोगतनाडीषु प्रधानतमास्तासां चक्रं तस्य मध्ये पद्ममध्यवर्तिसूक्ष्माकाशदेशे प्राणाद्याधारे स्थित आत्मा कूटस्थो नित्यो यस्य स तथा । तत्र प्रमाणम् ।

आशिरश्चरणं देहं यद्यपि व्याप्य तिष्ठति ।

तथाप्यस्य परं स्थानं हृत्पङ्कजसमुद्गकम् ॥ इति ।

स्थितिरपि तस्य तत्र परमात्मतत्त्वाविर्भाव एव । यद्वा । षड्भिरधिका दश नाड्यः षोडशसंख्यास्तासां चक्रं तत्र मध्ये स्थितश्चासावात्मा चात्मस्वरूपः । तदुक्तम् । सर्वं शिवमयं मतमिति । यद्वा । षडधिकं यद्दशनाडीचक्रम् । मतभेदेनैते पक्षाः । हृदि हृत्पद्मे विनिहितरूपो ध्यातमूर्तिः सन्यस्तद्विदां शिवशक्तिसाक्षात्कारवतां सिद्धिदोऽणिमाद्यैश्वर्यप्रदः । अत्र मानम् ।

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ॥

सकलं चिन्तयेत्तस्मात्सिद्ध्यर्थं सततं शिवम् ॥

ध्यानेन तत्परं गच्छेत्सर्वैश्वर्यगुणाष्टकम् ॥

महिमा लघिमाणुत्वं प्राकाम्यं वशितेशिता ।

प्राप्तिः कामावसायित्वं शम्भोरैश्वर्यमष्टधा ॥

मृग्यमाणोऽप्ययं केनापि ज्ञायते न तु सर्वेण । यदाह ।

इयमहमिदानीं

नित्यं न्यस्तषडङ्गचक्रनिहितं हृत्पद्ममध्योदितं
पश्यन्ती शिवरूपिणं लयवशादात्मानमभ्यागता ।

यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ इति ।

यद्वा । तद्विदां ताः सिद्धीरुपायदेशकालप्रमाणेतिकर्तव्यताभिर्ये विदन्ति तेषां सिद्धिदोभिलषितसिद्धिद इत्यर्थः ।

९-१० आत्मनि योगसिद्धिमाह । नित्यमित्यादि । इयमहमिदानीमभ्यागताभीष्टस्थानाभिमुखमागता श्रीपर्वतादित्याक्षेपात् । कीदृशी । शिवस्वरूपमात्मानं पश्यन्ती । लयवशाच्चित्तैकाग्रतया । अनेन सर्वेषां तत्प्रकाशोपास्तः । कीदृशम् । नित्यमविनाशिनम् । न्यस्तानि देहे मन्त्रन्यासेनार्पितानि यानि षडङ्गानि हृदयशिरःशिखानेत्रकवचास्त्राणि तेषां चक्रे समूहे निहितमारोपितं मन्त्रन्यासेन । यदाह ।

षडङ्गमेतत्कथितं सर्वसिद्धिप्रदायकम् ।
न्यसेद्वै भक्तियुक्तात्मा साधको ज्ञानचिन्तकः ॥
त्रिकालमेककालं वा शरीरे विन्यसेद्बुधः ॥

अनेनाङ्गावरणमुक्तम् । नित्यन्यस्तेति पाठे नित्यं प्रत्यहं न्यस्तानीत्यर्थः । हृत्पद्ममध्ये हृत्कमलकर्णिकायां ध्यानाभ्यासात्सूर्यवदुदितम् । यदाह ।

पद्मसंकाशसंस्थानं हृदयं तत्र दृश्यते ।
सूक्ष्मो हि पुरुषो ज्ञेयः परमात्मा हृदि स्थितः ॥
अभ्यासात्पश्यते सूर्यं परमात्मानमात्मना ।

नाडीनां पूर्वोक्तानामिडापिङ्गलादीनामुदयक्रमेण वायुपूरणपरिपाटया जगतः शरीरस्य पञ्चभूतात्मकस्य पञ्चामृतानां पृथिव्यप्तेजोवाय्वाका-

९. नित्य for नित्यं K2. noticed by Com.; षडंघ्रि for षडङ्ग B.

नाडीनामुदयक्रमेण जगतः पञ्चामृताकर्षणा-

१० दप्राप्तोत्पतनश्रमा विघटयन्त्यग्रे नभोम्भोमुचः ॥

---

णानां योगर्द्धिबलाद्य आकर्षस्तस्मादप्राप्तोलब्ध उत्पतनेनाकाशयानेन श्रमो यया सा । यद्वा । अमृतमिवामृतं देहस्थितिहेतुत्वात् । तत्पुनर्बिन्दुस्थानात्कुण्डलिनीस्रावणेन स्रवद्रसविशेषो रसनाधःस्थितरन्ध्रस्रवद्रसविशेषो वा । स हि व्यापकत्वेन पञ्चशब्दवाच्यः । तदाकर्षणात् । यद्वा । जगतः शरीरस्य पञ्च यान्यमृतानि शिवशक्त्यात्मकानि रूपरसगन्धस्पर्शशब्दलक्षणानि स्थूलमहाभूतमात्रापरिपोषकाणि योगिनीनां तेषामुपयोगात्तदाकर्षणेन सामर्थ्यादिकं योगिनीनामिति भावः । न च लयवशत्वेन निष्क्रियतयोत्पतनं न संभवतीति वाच्यम् । लयस्यान्यत्रापि सामर्थ्यात् । यदाह ।

मनोप्यन्यत्र निक्षिप्तं चक्षुरन्यत्र पातितम् ।

तथापि योगिनां योगो ह्यविच्छिन्नः प्रकीर्तितः ॥ इति ।

उत्पतनादिमाहात्म्यादेवाग्रेभुवःपुरोवर्तिनो मेघान्विघटयन्ती द्विधा कुर्वती । अग्रे नभ इति पाठे । आकाशमेघानग्रे विघटयन्तीत्यर्थः । न च नभःपदवैयर्थ्यम् । वनपर्वतादावपि मेघसद्भावेन तद्विघटन आकाशगामित्वोत्कर्षाप्रतिपादनात् । यद्वा । अग्रेनभो नभसि मेघान्विघटयन्ती ॥ अग्रेशब्दो विभक्तिप्रतिरूपको निपातः । तस्य विभक्त्यर्थेव्ययीभावः ॥ अनेन श्लोकद्वयेन शान्तो रस उक्तः । अत्र भरतोपि शान्तस्तु नवमो रस इत्याह । स च विषयवैरस्यादुपजायते । यदाह ।

शान्तो विषयवैरस्याद्रसः संजायते पुनः ॥ इति ।

---

१०. अग्रेभुवो° for अग्रे नभो° K1. K2. noticed by Com.

अपि च । उल्लोलस्खलितकपालकण्ठमाला-
संघट्टक्वणितकरालकिङ्किणीकः ।
पर्याप्तं मयि रमणीयडामरत्वं
संधत्ते गगनतलप्रयाणवेगः ॥

तथा हि । १९

विष्वग्वृत्तिर्जटानां प्रचलति निबिडग्रन्थिबद्धोऽपि भारः
संस्कारक्वाणदीर्घं पटु रटति कृतावृत्तिखट्वाङ्गघण्टा ।

---

११–१४ कपालकुण्डलायाः पूर्वोक्तभीषणोज्ज्वलत्वमुपपादयति । उल्लोलेति । गगनतलगमनवेगो मयि सकलं रमणीयडामरत्वं रमणीयत्वं मनोहरत्वं डामरत्वं भीषणत्वमुद्भटत्वं वा केलिसंरम्भनिर्भरत्वं वा संधत्ते समर्थं कुरुते ॥ डामरोड्डामरौ भीमे केलिसंरम्भनिर्भर इति रत्नकोशः ॥ वेगबलादुल्लोलेन यातायातेन स्खलिता या कपालानां कण्ठवर्तिनी माला तस्याः संघट्टक्वणितेनान्योन्यकपालसंघृष्टिध्वनिना कराला मूका क्षुद्रघण्टिका यत्र सः । कपालमालोच्चध्वनिना तद्ध्वनेरश्रवणान्मूकत्वमिव मूकत्वम् । यद्वा । तथाविधक्वणितेन कराला दन्तुरा । विषमेति यावत् । किङ्किणी यत्र सः । कुलयोगिनीनां किङ्किण्यादिध्वनिना सानन्दत्वम् । यदाह ।

समुद्रघोषसंभारकिङ्किणीघण्टिकास्वनैः ।
सदानन्दो भवेद्योगी न निद्रा न क्षुधा तृषा ॥ इति ।

१६–१९ तदेवाह । विष्वगिति । जटानां भारः समूहो निबिडं दृढं यथा तथा ग्रन्थिबद्धोऽपि विष्वग्वृत्तिः सर्वतोव्यापी सम्प्र-

---

११. उद्वृत्त Bh. N. उद्भिन्न O. for उल्लोल.
१६. प्रचलित for प्रचलति Bh.; नद्धोऽपि for बद्धोऽपि A. B. Bh. C. D.
१७. षट्वा° for खट्वा° Bh.

ऊर्ध्वं धूनोति वायुर्विवृतशवशिरःश्रेणिकुञ्जेषु गुञ्ज-
न्नुत्तालः किङ्किणीनामनवरतरणत्कारहेतुः पताकाः ॥
२० परिक्रम्यावलोक्य च । गन्धमाघ्राय । इदं तावत्पुराणनिम्बतैला-
क्तपरिभृज्यमानरसोनगन्धिभिश्चिताधूमैः पुरस्ताद्विभावितस्य म-

चलति । गगनगमनवेगादित्यर्थात् ॥ विष्वक्शब्दो नानार्थः सुषमा-दिषु पठ्यते तेन षत्वम् ॥ कृतावृत्तिः कृतगतागता कृतमण्डलभ्रमणा खट्वाङ्गसहिता घण्टा संस्कारेण संतानेन यः क्वाणो ध्वननं तेन दीर्घं पटु रमणीयं च यथा तथा रटति शब्दायते । एतेन डामरत्वमुक्तम् । खट्वाङ्गं वाद्यभेदः । वायुरूर्ध्वं पताका धूनोति कम्पयति ॥ धूञ् कम्पने । दीर्घान्तः स्वरतीत्यादिसूत्रे न्यासकारेणोक्तः ॥ कीदृशः । विवृतानि यानि निर्मांसतया शवशिरांसि तेषां श्रेणयः पङ्क्तयस्तासां यानि कुञ्जानि गहनाः प्रदेशास्तेषु गुञ्जन्ध्वनन् । अत एवोत्ताल उद्भटध्वनिः क्षुद्रघण्टिकानामजस्रणत्कृतिहेतुश्च । अनेन रमणीयत्वमुक्तम् ॥ निक्वाणो निक्वणः क्वाणः क्वणः क्वणनमित्यपीत्यमरः ॥ यद्वा । पटुरटनेन रमणीयत्वं पताकाकम्पनेन डामरत्वमत्रोक्तम् ।

२०-२८ पुराणेत्यादिना चिताधूमानां स्वभावाख्यानम् । अक्तं म्रक्षितम् । परिभर्जनं वह्निमध्यनिक्षेपपाकः । अम्लरसेनैकेनोनं प-

१८. शिव for शव K1.

१९. पताका K1. K2. पताकां N. O. for पताकाः.

२०. अथो विलोक्य for परि-च N.; K1. K2. om. परि-च; O. om. च; N. om. गन्धमाघ्राय; अवलोक्य after आघ्राय K1. K2.; च after इदं N. O.; तत् for तावत् K1. K2. N.; O. om. तावत्; बिंबि for निम्ब Bh.; अभ्यक्त for अक्त K1. O.; B. om. अक्त.

२१. ब्वज्य° for भृज्य° K1 ; नरमांस Bh. रस C. N. O. after रसोन; अधस्ताद् for पुरस्ताद् K1. K2. N. O. ; विभाव्यमानस्य for विभावितस्य K1. K2. महा for महतः N.

इतः श्मशानवाटस्य नेदीयः करालायतनं यत्र पर्यवसितमन्त्र-साधनस्यास्मद्गुरोरघोरघण्टस्याज्ञया सविशेषमद्य पूजासंभारो मया संनिधापनीयः । कथितं च मे गुरुणा वत्से कपालकुण्डले अद्य भगवत्याः करालायाः प्रागुपयाचितं स्त्रीरत्नमुपहर्तव्यम् । २५ तदत्रैव नगरे विदितमास्त इति तद्विचिनोमि । सकौतुकमवलोक्य । तत्कोऽयमतिगम्भीरमधुराकृतिरुत्तम्भितकुटिलकुन्तलः कृपाणपाणिः श्मशानवाटमवतरति । य एषः

---

ञ्चरसं रसोनम् ॥ लसून इति ख्यातम् । वट्यते वेष्ट्यतेऽनेनेति वाटः ॥ हलश्चेति घञ् ॥ पन्था वाटः पथो माथ इति भागुरिः ॥ नेदीयो निकटम् । पर्यवसितं समाप्तं विनष्टं च । मन्त्रसाधनं पुरश्चरणजपादि । संभारः समूहः । उपयाचितं मनीषितार्थं स्वीकृतम् । यद्दीयते तु देवेभ्यो मनोराज्यस्य सिद्धये । उपयाचितकं तत्तु दोहदं संप्रचक्षत इति हारावली ॥ स्त्रीरत्नमिति ॥ जातौ जातौ यदुत्कृष्टं तद्धि रत्नं प्रचक्षत इति विश्वः । विदितमुपलब्धम् । विचितमिति पाठेऽन्विष्टम् । गम्भीरेत्यादि ।

विकाराः सहजा यस्य हर्षक्रोधभयादिषु ।
भावेषु नोपलभ्यन्ते तद्गाम्भीर्यमुदाहृतम् ॥ इति ।

---

२२. च after यत्र C. D. K1. K2.; B. om. मन्त्र.

२३. मया before पू-रः instead of after, K2.; N. om. मया.

२४. संभावनीयः for संनिधापनीयः B.; हि for च N ; यथा before वत्से O.

२५. N. om. अद्य; B. Bh. C. D. add मया after अद्य; यन्मया before प्रागु° O.

२६. च after तद् K1. K2.; N. om. नगरे; विचितमा° for विदितमा° K2, noticed by Com.; O. om. तद्; N. om. तद्विचिनोमि; अग्रे after स-कम् A. Bh. C. D.

२७. O. om. तत्; K1. K2. om. अति; O. om. मधुर; B. om. कुटिल; °न्तल for °न्तलः K1.

२८. K1. K2. om. °वाट.

कुवलयदलश्यामोऽप्यङ्गं दधत्परिधूसरं
१० ललितविकटन्यासः श्रीमान्मृगाङ्कनिभाननः ।
हरति विनयं वामो यस्य प्रकाशितसाहसः
प्रविगलदसृक्पङ्कः पाणिर्ललन्नरजाङ्गलः ॥

अभ्यासात्करणानां तु श्लिष्टत्वमुपजायते ।
महत्स्वपि विकारेषु तन्माधुर्यमुदीरितम् ॥

इति भरतः । उत्तम्भितो जूटाकारेण बद्धः कुटिलो वक्रः कुन्तलः केशो यस्य सः । एतेन रौद्ररसवत्तोक्ता ।

२९–३५ कुवलयेत्यादि । य एष स्वभावान्नीलनलिनपत्रच्छ्यामोऽपि विप्रलम्भात्सर्वतः पाण्डुरमङ्गं दधत् । ललितो रमणीयो विकटो भीषणो न्यासो देहन्यासो यस्य सः । ललितत्वं स्वभावात् । विकटत्वं रौद्रात् । यद्वा । न्यासः करचरणादिचालनम् । श्रीमानतिरम्यः । मृगाङ्कान्निरतिशया भा यत्र तादृशमाननं यस्य । अत एव हेयत्वार्थं मृगाङ्कपदेनोपन्यासः । यस्य वामः पाणिर्विनयं हरत्यपनयति । अत्र हेतुमाह । प्रविगलदसृक्पङ्कः स्रवद्रुधिरकर्दमः । ललच्चञ्चलं नरजाङ्गलं महामांसं यत्र सः । न हि विनीतो रक्तं महामांसं च धारयति । अत्र पूर्वार्धेन ललितत्वमुत्तरार्धेन विकटत्वमुक्तम् । अत एव व्यक्तसाहसः । महामांसधारित्वेन वीरबीभत्सरसावुक्तौ । यदाह ।

उत्साहाध्यवसायाद्विस्मयहर्षाच्च मोहाच्च ।
विविधाद्गन्धविशेषाद्वीररसो नाम संभवति ॥

२९. पाण्डुरं for धूसरं B.

३० चरण for विकट; A. B. Bh. C. D. K1. K2. न्यास for न्यासः B.; समा° for निभा° N. O.

३१. साहसं for साहसः D.

३२. गलन् for ललन् B. O.

निरूप्य । अये स एष कामन्दकीसुहृत्पुत्रो महामांसस्य पणायिता माधवः । तत्किमनेन । भवतु समीहितं संपादयामि । विगलितप्रायः पश्चिमसंध्यासमयः । तथा हि । संप्रति ३५

व्योम्नस्तापिच्छगुच्छावलिभिरिव तमोवल्लरीभिर्व्रियन्ते
पर्यन्ताः प्रान्तवृत्त्या पयसि वसुमती नूतने मज्जतीव ।
वात्यासंवेगविष्वग्विततवलयितस्फीतधूम्याप्रकाशं
प्रारम्भेपि त्रियामा तरुणयति निजं नीलिमानं वनेषु ॥

---

अनभिमतदर्शनेन च गन्धरसस्पर्शशब्ददोषैश्च ।
उत्तेजनैश्च बहुभिर्बीभत्सरसः समुद्भवति ॥

दधदित्यत्र नाभ्यस्ताच्छतुरिति नुमो निषेधः ॥ जङ्गलं निर्जनस्थाने त्रिलिङ्ग्यां पिशितेस्त्रियामिति मेदिनीकरः ॥ पणायिता विक्रेता । विगलितप्रायो भ्रष्टप्रायः ॥

३६–३९ व्योम्न इत्यादि । गगनस्योपान्ता ध्वान्तलताभिर्व्याप्यन्ते । तमालपुष्पस्तबकपङ्क्तिभिरिव । एवं च पृथिव्युपान्तभागेन नूतने जले मज्जतीव । उत्प्रेक्षेयम् । त्रियामा रात्रिः प्रारम्भे प्रदोषमात्रेपि नीलत्वं निजं वनेषु तरुणयति । कीदृशम् । वातानां समूहो वात्या तस्याः संवेगेन विवर्तनेन विष्वक्चतुर्दिशं वितता विस्तारिता वलयिता वलयाकारा स्फीता गभीरा या धूम्या धूमसमूहो नीहारो वा

---

३३. K1. K2. N. O. om. अये; N. om. स; सुतो for पुत्रो O.; K2. om. महा-ता; पणयिता for पणायिता A. C. K1. N.

३४. N. om. भवतु; यथा before समी° N. O.; विलोक्य after °यामि K1. K2.

३५. च after प्रायः A. B. Bh. C. D. K1. K2.; N. om. तथाहि । संप्रति.

३६. भ्रियन्ते for व्रियन्ते K1.

३८. संगेन B. N. संयोग Bh. for संवेग; विलसित for वलयित O.; प्रकारं for प्रकाशं O.

३९. पदेषु for वनेषु O.

४० परिक्रम्य निष्क्रान्ता । विष्कम्भकः ।

ततः प्रविशति यथानिर्दिष्टो माधवः ।

माध० । साशंसम् ।

प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदया-

स्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि ।

४५ यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणा-

दाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः ॥

---

तत्सदृशम् । एवं चान्धकारोपगमाद्गतप्राया संध्येत्यर्थः ॥ धूम्या धूम-समूहेपि नीहारेपि निगद्यत इति धरणिः ॥

४२-४६ साशंसं सप्रार्थनम् । प्रेमेत्यादि । मुग्धदृशो मालत्या-स्तास्ता अनुभूताश्चेष्टाः संभोगे चुम्बनादयो मयि पुनर्भूयासुः ।

चेष्टाविशेषाः संभोगे चुम्बनालिङ्गनादयः ।

इति कण्ठाभरणम् । कीदृश्यः । प्रथमं प्रेम्णा संभोगप्रीत्यार्द्रा इव तापशान्तिहेतुरोमाञ्चादिजनकत्वात् । ततो विश्वासमुपेत्य चित्तप्र-सादस्पृशः । ततः परिचयात्सुखास्वादभेदादुद्भटरागोद्रेकाः । निस-र्गमधुराः सहजमनोज्ञाः । यास्वाशंसोपनीतास्वपि क्षणान्निरतिशयसु-खघनो लयो लीनता भवति । तासु चेष्टासु मनो लीयत इत्यर्थः । कीदृशः । अन्तःकरणस्य मनसो बाह्येन्द्रियव्यापारावरोधनशीलः । मालतीमयत्वेन तन्मनो बाह्यविषये न व्याप्रियत इत्यर्थः । अत एवानेकशङ्कातङ्कसंकुलेपि तत्र स्थाने माधवस्य न साध्वसादिकम-पीति भावः । यद्वा । तास्ताश्चेष्टा बकुलवीथ्यादिषु यास्तया कृतास्ता-स्ता मयि भवेयुः । तासामेव दुर्लभत्वादाशंसनीयता ।

---

४०. N. om. परिक्रम्य; शुद्ध before विष्क° N.

४१. B. om. य-ष्टो.

४२. सावज्ञं for साशंसम् K1.

४५. विषय for करण N.

४६. °दाशंका for °दाशंसा D.; सान्द्रोदयः for सान्द्रो लयः A. C. D.

किं च । अतिमुक्तमङ्ग्रथितकेसरावली
　　　सततांधिवाससुभगार्पितस्तनम् ।
　　अपि कर्णजाहविनिवेशिताननं
　　प्रियया तदङ्कपरिवर्तमाप्नुयाम् ॥ ५०

अथ वा । दूरे तावदेतत् । इदमेव प्रार्थये ।

---

४७-५० प्रथमप्रीतिहेतुत्वादालिङ्गनमाशास्ते । अतिमुक्तेत्यादि । प्रियया सह तदङ्कपरिवृत्तिमप्यहमाप्नुयाम् । तत्तस्या अङ्के क्रोडे सर्वतोभावेन वर्तनम् । हृदयालिङ्गनमित्यर्थः । अपिर्भिन्नक्रमः । यद्वा । तदङ्के परिवर्तनमूर्ध्वाधःक्रमेण पुरुषायितमाप्नुयाम् । कीदृशः । प्रियया कर्णजाहे कर्णमूले विनिवेशितमाननं यत्र । ममापि सः । प्रथमपक्षे कर्णमूलेऽर्पितमाननं येन सः ॥ तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचाविति मूले जाहच्प्रत्ययः ॥ अतिक्रान्ता मुक्ता यया सातिमुक्ता । मुक्ताहारमपास्य तदर्पणादतिक्रमः । यद्वा । अतिमुक्तातिविरला मालत्यवलोकनव्यासङ्गात् । एतादृशी या मङ्ग्रथिता केसरावली तस्याः सततांधिवासेन सुभगः सुरभिरर्पितस्तनो यत्रेति क्रियाविशेषणम् । अविमुक्तेति पाठो न मनोहरः । अवियुक्तत्वादेव सततांधिवासस्य लब्धत्वात्सततग्रहणस्य व्यर्थत्वात् ।

---

४७. K1. K2. om. किं च; अपि for किं N.; अविमुक्त Bh. O. अपि चारु K1.; for अतिमुक्त; °मुद्ग्रथित B. C. °कग्रथित N. for °मङ्ग्रथित.

४८. °गायित for °गार्पित C.

४९. °ताननः for °ताननं A. B. Bh. C. D. N. O.

५०. तदङ्ग for तदंग B. Bh. C. D. K2.; परिवृत्त° A. परिविलि° K1. परिवृत्ति° K2. N. परिरंभ O. for परिवर्त°.

५१. Bh. K1. K2. om. दूरे तावदेतत्; तावत् before प्रार्थये K1. K2. N. O.

संभूयेव सुखानि चेतसि परं भूमानमातन्वते
यत्रालोकपथावतारिणि रतिं प्रस्तौति नेत्रोत्सवः ।
यद्बालेन्दुकलोच्चयादवचितैः सारैरिवोत्पादितं
५५ तत्पश्येयमनङ्गमङ्गलगृहं भूयोपि तस्या मुखम् ॥

५२—५५ संभूयेत्यादि । तस्यास्तन्मुखं पुनरपि पश्येयमित्येतदेव प्रार्थये ॥ अङ्गप्राप्तेर्दुर्लभत्वादिति भावः । कीदृशम् । कामस्य मङ्गलार्थं गृहम् । तत्र कामो हृष्टो वसतीत्यर्थः । यद्वा । कामस्य मङ्गलघटितं हिरण्यघटितं गृहम् ॥ कल्याणं मङ्गलं विद्यात्काञ्चनं च तदक्षममिति विश्वः ॥ यद्वा । अनङ्गस्य मङ्गलानामुपचयहेतूनां सौकुमार्यादीनां गृहम् । अत एवोत्प्रेक्षते । बालचन्द्रकलोदयाद्गृहीतैःसारैरुत्पादितमिति । अत्रोदयादिति भावेन द्रव्याभिधानान्नवेन्दुकलाया अवचिताः सारास्तैरुत्पादितमिवेत्यर्थः । सकलजनानन्दिनवेन्दुकलातोप्यधिकमनोहरमिति भावः । यद्वा ॥ ल्यबलोपे पञ्चमी ॥ तेन बालेन्दुकलोदयं प्राप्यावचितैरित्यर्थः । यद्वा । बालेन्दुकलोदयात्प्रतिपच्चन्द्रकलोदयादारभ्यावचितैः पूर्णिमापर्यन्तमित्यर्थात् । आरभ्येत्यस्य लाभः पञ्चमीत एव । तथा च पूर्णेन्दुना मुखसाम्यं लभ्यते । क्वचित्कलोच्चयादिति पाठः । तत्रोच्चयात्समूहादित्यर्थः । यत्र मुखे संमुखीभूते सुखानि ॥ कर्तृणि ॥ मिलित्वेव परं भूमानं बाहुल्यं विस्तारयन्ति चित्ते । अनेनान्तःप्रीतिरुक्ता । इवशब्द उत्प्रेक्षायाम् । एवपाठे विस्मय एवशब्दः । बहिःप्रीतिमाह । नेत्रोत्सवोलब्धलाभाभिमानोनुरागं प्रस्तौति स्रवति । रतेर्द्रवमयीत्वात् । समाधिरलंकारः ।

५२. संभूयैव for संभूयेव N.

५३. पथप्रतारिणि for प—णि K1; प्राप्नोति K1. N. प्रस्नौति O. for प्रस्तौति.

५४. कलोदयात् for कलोच्चयात् Com.; °दर्पाचितै for °दवचितैः N.; °रिवासादितं for °रिवोत्पादितं C.

यत्सत्यमधुना तत्संदर्शनेनातिस्वल्पोऽपि न विशेषः। मम हि संप्रति सातिशयप्राक्तनोपलम्भसंभावितात्मजन्मनः संस्कारस्यानवरतप्रबोधात्प्रतायमानस्तद्विसदृशप्रत्ययान्तरैरतिरस्कृतप्रवाहः प्रियतमास्मृतिप्रत्ययोत्पत्तिसंतानस्तन्मयमिव करोत्यन्तर्वृत्तिसारूप्यतश्चैतन्यम्। तथा हि। ६०

---

५६—६० मानसमौत्सुक्यातिशयमाह। मम हीति। मामकीनः प्रियास्मरणरूपज्ञानोत्पत्तेः संतानः परिणतिसमूहः स्मृतिरूप एव मम चैतन्यमात्मतत्त्वं तन्मयमिव करोति। मालतीमयं करोतीत्यर्थः। कीदृशः। प्रतायमानो दीर्घीभवन्। अत्र हेतुः। संस्कारस्य भावनाया अतिशयितप्रबोधादुद्रेकात्। कीदृशस्य संस्कारस्य। सातिशयात्सादरात्स्फुटाकाराद्वा बकुलवीथ्यां पूर्वकालानुभवाल्लब्धजन्मनः। प्रतायमानत्वमेवोपपादयति। तद्विसदृशैर्मालतीविलक्षणविषयैर्ज्ञानान्तरैरतिरस्कृतप्रवृत्तिः। तथा चान्तरा विषयान्तरास्फुरणाच्च प्रवाहतिरस्कार इति भावः। नन्वात्मतत्त्वस्य पुष्करपलाशवन्निर्लेपतया कथं मालतीमयत्वमत आह। अन्तरिति। अन्तःपदमिह बुद्धितत्त्वपरम्। तथा च बुद्धितत्त्वस्य या प्रवृत्तिः सहजसिद्धो व्यापारः सा यत आत्मतत्त्वे भेदाग्रहात्प्रतिभासते तस्मात्। सांख्यदर्शने बुद्धेर्भोक्तृत्वात्। यद्वा। अन्तर्वृत्तिरिति भावप्रधानम्। तथा चान्तर्वृत्तित्वमन्तरवस्थानरूपं सादृश्यमात्मबुद्ध्योस्तस्मात्।

---

५६. B. om. अधुना; N. om. तत्; संदर्शनाद् for संदर्शनेन O. संदर्शिनं नेति Bh. संदर्शनं नेति N. for सं—ति; B. K1. K2. om. अति; वा before स्वल्पो Bh.; Bh. om. न; हि after न N.

५७. K2 O. om. संप्रति; N. om. सातिशय; °मादराद्बकुलवीथ्यां पूर्वकालानुभवाल्लब्धजन्मनः before प्राक्तनो° K2.; °पलंभित N. for °पलम्भ; °तात्मजनः Bh. °तात्मनः N. O. or °ता—नः

५८. प्रबोधनात् C. प्रबोधा° D. for प्रबोधात्; प्रतीयमानः for प्रतायमानः A.Bh. C.; °द्विसदृशैः for °द्विसदृश N. O.; प्रतापा° for प्रत्यया° B.

५९. °भावः for वाहः B.; O. om. अन्तर्; तद्वृत्ति Bh. अत्यन्तवृत्ति D. for अन्तर्वृत्ति.

लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेव च
प्रत्युप्तेव च वज्रलेपघटितेवान्तर्निखातेव च ।

६१—६४ स्वोक्तमेव दर्शयति । लीनेवेत्यादि । सा प्रियास्माकं चेतसि लग्ना संबद्धा । संबद्धत्वे यथासंभवं प्रकारानाह । लीनेव निह्नुतेव । यत्र यस्य संबद्धस्य न प्रत्यक्षोपलम्भस्तत्र तल्लीनमित्युच्यते । यथा पयसि लीनं लवणम् । सर्वत्रात्र लग्नत्वस्य प्रकारभेदेनोपमाभेदाः। पूर्वपूर्वापरितोषाद्वा । तथाहि । लीनत्वस्याप्रतिभासात्स्पष्टप्रतिभासार्थमाह । प्रतिबिम्बितेव । यत्र स्वच्छद्रव्याभिहतं चक्षुः परिवृत्य द्रव्यान्तरं गृह्णाति तत्तत्र प्रतिबिम्बितमित्युच्यते । यथा स्फटिके रक्तपुष्पम् । प्रतिच्छायाया वस्त्वन्तरसंसर्गाधीनत्वेनासाहजिकत्वात्साहजिकत्वोपवर्णनायाह । लिखितेव । यत्प्रशिथिलावयवसंयोगाश्रयेण द्रव्येण घनद्रव्योपरि संस्थानविशेषवन्निर्मीयते तत्तत्र लिखितमित्युच्यते । यथा पत्रे लिपिः । लिखनस्य जलाश्रुपनिपातविनाशितया न चिरस्थायित्वमतस्तदर्थमाह । उत्कीर्णरूपेव । यद्यत्र निबिडद्रव्ये तादृशेन किंचिदवयवविभागः क्रियते तत्तत्रोत्कीर्णम् । यथा टङ्कादिना शिलादि । अस्याप्येकभागवृत्तितया सर्ववृत्तित्वार्थमाह । प्रत्युप्तेव । प्रत्युप्तमर्धरोपितम् । यद्यत्र द्रव्यान्तरसंसर्गि तत्तत्र प्रत्युप्तम् । यथाङ्गुलीयके मण्यादि । अस्यापि शक्योद्धारत्वान्निबिडसंबन्धायाह । वज्रलेपघटितेव । यद्यत्र किंचिद्धनद्रव्याभिघातजन्यकर्मजन्यसंयोगविभागानाश्रयस्तत्तत्र वज्रलेपघटितम् । यथा हीरकादि । तथापि लेपस्य बहिर्वृत्तित्वादन्तःसंसर्गार्थमाह । अन्तर्निखातेव । यद्यत्र संबद्धमूर्ध्वाधःसंयोगादिना धृतं नोपलभ्यते तत्तत्र निखातमुच्यते । यथा भूमौ मूलकादि । निखातत्वं सर्वरोपणमुप्तत्वमर्धरोपणमित्यनयोर्भेदः। निखातस्यापि निर्बन्धातिशयेन शक्योद्धा-

६२. लेख for लेप K1.

सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभि-
श्चिन्तासंततितन्तुजालनिबिडस्यूतेव लग्ना प्रिया ॥

---

रतया विवेकादिदुःशक्यत्वार्थमाह । कामस्य पञ्चभिः शरैः कीलितेव। कीलितस्य प्रतिकीलनोद्धार्यतयाशक्योन्मूलनायाह । चिन्तापरंपरासूत्रसमूहेन गाढं यथा स्यात्तथा स्यूतेव सीवनं प्रापितेव । जालनिबिडसीवनेनानुच्छेदनीयत्वमुक्तम् । इहोपधेयाभेदेऽप्युपाधिभेदादपौनरुक्त्यमित्यवधेयम् । एकमेव हि वस्तु तत्तदुपाधिवैशिष्ट्याद्भिन्नबुद्धिविषयो यथा दण्डिकुण्डलित्वादिः। यद्वा । नोऽस्माकं चेतसि सा लग्ना दृढं संबद्धा । दृढसंबद्ध एव लग्नपदार्थः । शरो लग्न इत्यादौ तथादर्शनात् । दृढसंबद्ध एव नानाप्रकारेण स्थिरीक्रियते । कामबाणपञ्चकेन कीलितेव । चिन्ताप्रवाहरूपतन्तुसंतत्या स्यूतेव । ननु इयमप्यदो न युक्तम् । तया सहान्तरस्य चैतन्यस्य संबन्धाभावात् । अतो विषयविषयिभावप्रकारान्मतभेदेनाह । लीनेवेति । लीनत्वं तदात्मतया संबद्धत्वम् । विषयविषयिणोस्तदात्मरूप एव संबन्ध इति योगाचारमतमनेनोक्तम् । प्रतिबिम्बितेवेति सांख्यमतोपदर्शनम् । लिखितेवेति सौत्रान्तिकमतोपदर्शनम् । तत्र हि ज्ञानेन स्वीयाकारार्पणं विषये क्रियत इति तत्तदाकारस्याभिव्यक्तिः । शिलादौ तुरगादिवदिति लिखनसाम्यम् । उत्कीर्णरूपेवेति विषयाकारेण चैतन्यपरिणाम इहोत्कीर्णरूपता । अतस्त्रिदण्डिमतम् । प्रत्युप्तेवेति पूर्वरूपतिरोधानादन्यरूपाविर्भावेन सुवर्णरचितभाजनादाविव तत्तद्विषयाकारतया ज्ञानविपरिणाम इति पातञ्जलमतम् । वज्रलेपघटितेवेति नैयायिकमतम् । तदीयतामात्ररूपो हि स्वभावभेदःप्रकाशस्य विषयविषयिभावः । अयं च यावद्वस्तुस्थिरतया वज्रलेपघटनातो न भिद्यते । अन्तर्निखातेवेति विज्ञानवादिमतोपदर्शनम् । अत्र हि विज्ञानस्यान्तर्निखननात्स

६९ नेपथ्ये कलकलः ।

माध० । अहो संप्रति प्रगल्भमानकौणपनिकायस्य महती श्मशानवाटस्य रौद्रता । अस्मिन् हि

पर्यन्तप्रतिरोधिमेदुरचयस्त्यानं चिताज्योतिषा-
मौज्ज्वल्यं परभागतः प्रकटयस्याभोगभीमं तमः ।

---

बाह्यवस्तुस्थितिरिति । इहापि तथा । एते च विषयविषयिभावविकल्पा-स्तच्चिन्ताप्रकारस्तत्रान्माधवस्य चित्ते विपरिवर्तन्ते । एवं च चेतसा सह संबन्धः । पश्चात्कीलनेन वा सीवनेन वा गाढसंबद्धतां गता भवति लग्ना । ततश्च तद्दर्शनं महापुरुषानुभूतं तस्येति किमत्र चित्रमिति भावः । अत्र पञ्चभिरित्यनेन युगपत्कामबाणविषयत्वमात्मनो निवेदयता दुःसहद-शाशालित्वं सूचितम् । चेतोभुव इत्यनेन तत्प्रभवस्य तस्य मर्मज्ञता ध्वनिता ।

यथाशक्ति यथायुक्ति यथागति यथामति ।
यथाधीति यथानीति विवेचितमिदं मया ॥

६६—७१ कौणपनिकायो राक्षससमूहः । रौद्रता भीषणत्वम् । प-र्यन्तेत्यादि । तमः ॥ कर्तृ ॥ चिताज्योतिषामौज्ज्वल्यं परभागतो गुणो-त्कर्षाधानात्प्रकटयति व्यक्तीकरोति । तमसि संनिहिते सति तेजसां कान्त्युत्कर्षः स्फुट एवेति भावः । कीदृशं तमः । आभोगात्परिपूर्णतया भीमम् । चितालोकमण्डलस्य पर्यन्ते निकटदेशे प्रतिरोधनशीलं मेदुरं स्निग्धं चयेन संघेन स्त्यानं घनम् । यद्वा । पर्यन्ते यः प्रतिरोधोऽन्धकारस्य प्रसरणनिवारणं तेन मेदुरो मांसलो यश्चयस्तेन घनमित्यर्थः । कटाः

---

६९. आकर्ण्य before अहो N.; K1. K2. om. संप्रति; प्रगल्भता B. K1. K2. वर्धमान N. for प्रगल्भमान; कोणप for कौणप O.; महतः for महती O.

७०. N. om. वाट°; अत्र for अस्मिन् N.

७१. °रोध for °रोधि K1. K2.; घन for चय Bh. N. O.; रोचिषा° for ज्यो-तिषा B.

संसक्ताकुलकेलयः किलकिलाकोलाहलैः संमदा- ७०
दुत्तालाः कटपूतनाप्रभृतयः सांराविणं कुर्वते ॥
भवत्वाघोषयामि तावत् । उच्चैः । भो भोः श्मशाननिकेतनाः कटपूतनाः ।

---

शवाः । पूतनाः श्मशानवासिनो राक्षसास्तत्प्रभृतयोऽन्येपि तत्रत्याः शृगालादयः किलकिलाकोलाहलैः किलकिलारूपारावैः सांराविणं परस्पराह्वानं कुर्वते संमदाद्धर्षात् । उत्ताला उद्भटाश्चञ्चला वा । तालादुद्गता उत्तालाः ॥ सुप्सुपेति समासः ॥ तेनान्योन्यहस्ततालवन्त इति वा । संसक्ता मिलिता आकुलास्त्वरायुक्ताः केलयः क्रीडा येषां ते । यद्वा । संसक्तत्वेनाकुला केलिर्येषां ते । संसक्त इति भावप्रधानम् । यद्वा । संसक्ता कुलेन स्वयूथेन केलिर्येषां ते ॥ त्रिपदबहुव्रीहावुत्तरपदत्वाभावान्न पुंवद्भावः ॥ सान्द्रस्निग्धे च मेदुर इत्यमरः ॥ किलकिलेत्यव्यक्तशब्दः । अविभावितविशेषः शब्दसमूहः कोलाहलः ॥ सपूर्वाद्रुतेरभिविधौ भाव इनुण् । तदन्तात्स्वार्थेण् । आदिवृद्धिः ॥ शवानां शब्दकरणं वेतालाधिष्ठानात् । रौद्ररस इह । तल्लक्षणं तु भरते ।

इति रौद्रो रसो दृष्टो रौद्रैरेवाङ्गचेष्टितैः ।
शस्त्रप्रहारभूयिष्ठभयकम्पक्रियात्मकः ॥ इति ।

७२—७५ भो भो इत्यभिमुखीकरणरूपे संबोधने । निकेतनं गृहम् । अशस्त्रपूतं संमुखपतितस्य स्वर्गिणो मांसं शस्त्रपूतम् । अतस्तेषाममाह्यमिदमिति न तादृशमिदम् । यद्वा । अशस्त्रपूतं शस्त्रेणाच्छिन्नम् । धातूनामनेकार्थत्वात् । शस्त्रहतमांसस्य रणे सुलभतया तेषामस्पृहात इदमतादृशमिति भावः । अव्याजं निष्कपटम् । यद्वा ।

---

७०. किलि° for किल° K2. O.

७१. °दुत्ताना: for °दुत्तालाः B.; पूतन for पूतना Bh. K2. O.; सांवारिणं for सांराविणं c.

७२. तदिदं for भवतु N.; N. om. तावत्; A. N. om. उच्चैः; भोगाः for भोभोः K1.; A. B. C. om. one भोः; केतनाः for निकेतनाः Bh. K1. K2.

७३. K2. om कट-

अशास्त्रपूतमव्याजं पुरुषाङ्गोपकल्पितम् ।

७५ विक्रीयते महामांसं गृह्यतां गृह्यतामिदम् ॥

पुनर्नेपथ्ये कलकलः ।

माध० । कथमाघोषणानन्तरमेव सर्वतः समुच्चलदुत्तालवेतालमुक्ततुमुलाव्यक्तकलकलाकुलः प्रचलित इवाविर्भवद्भूतसंकटः श्मशानवाटः । आश्चर्यम् ।

---

इष्टसिद्धिं पणीकृत्य साहसाद्यदुपार्जितम् ।

अशास्त्रपूतं निर्व्याजमेतन्मांसं विदुर्बुधाः ॥

इति परिभाषितमेव ।

स्त्रियश्चतुष्पदे श्रेष्ठाः पुरुषा द्विपदे तथा ॥

इति वचनात्प्राशस्त्यार्थमाह । पुरुषस्याङ्गादानीयोपकल्पितम् । विक्रीयत इष्टसिद्धिमूल्येनेत्यर्थात् । विक्रयस्य मूल्यसापेक्षत्वात् । यद्वा । विक्रीयते दीयते । धातोरनेकार्थत्वात् ।

७७-८२ उच्चैर्घुष्टं तु घोषणेत्यमरः ॥ वेतालः श्मशानदेवताकिंकरः ॥ तुमुलं रणसंकुल इत्यमरः ॥ तेषामन्योन्यस्पर्धया रणे संकुलत्वम् । अविभावितार्थत्वेनाव्यक्तत्वम् । प्रचलित उच्चावचः । संकटो व्याप्तः । कर्णेत्यादि । उल्का ज्वाला मुखे येषां ते उल्कामुखाः शृगालभेदाः । तेषां मुखैर्नभ आकीर्यते व्याप्यते । यद्वा । उल्कामुखा एतन्नामप्रसिद्धा एव रणवासिनो जन्तुभेदाः । कीदृशैः । कर्णसमीपवि-

---

७४. °तं निर्व्याजं for °तमव्याजं B. C. O.

७५. °तामिति for तामिदम् Bh. C. K1.; इति after इदम् N.

७६. Bh. K1. K2. N. O. om. पुनः.

७७. आभाषणा° B. आघोषा° C. for आघोषणा°; N. om एव; °चरद् for चलद् K1. N.; N. om. वेतालमुक्त; कुल after वेताल B. K1. O.

७८. K2. O. om. भवद्; भूरि before भूत B.

७९. आश्चर्यम् twice Bh. K1. K2.

कर्णाभ्यर्णविदीर्णसृक्कविकटव्यादानदीप्ताग्निभि-
दंष्ट्राकोटिविसंकटैरित इतो धावद्भिराकीर्यते ।
विद्युत्पुञ्जनिकाशकेशनयनभ्रूश्मश्रुजालैर्नभो
लक्ष्यालक्ष्यविशुष्कदीर्घवपुषामुल्कामुखानां मुखैः ॥ ८०

अपि च ।

एतत्पूतनचक्रमक्रमकृतग्रासार्धमुक्तैर्वृका-
नुत्पुष्णत्परितो नृमांसविघसैराघर्घरं क्रन्दतः । ८५

दीर्णसृक्कभ्यां विकटं करालं यद्व्यादानमास्यविकासस्तेन दीप्तैरग्निभिर्येषु । ऊर्ध्वाधःस्थितदंष्ट्राणां कोटिभिरग्रैर्विसंकटैः संकुलैर्विकरालैर्वा । सर्वतो धावद्भिः । विद्युत्पुञ्जतुल्यानि केशनयनभ्रूश्मश्रुजालानि यत्र तैः । पिङ्गलत्वात्केशादीनां विद्युत्तुल्यता । अत एवोल्कामुखः शृगालान्यो जन्तुभेद इति पक्षः साधीयान् । उल्काप्रकाशाल्लक्ष्याण्यन्यदालक्ष्याणि विशुष्काणि दुर्बलानि दीर्घाणि वपूंषि येषां तेषाम् । एतेन दुर्बलत्वमुक्तम् ॥ प्रान्तावोष्ठस्य सृक्कणी इत्यमरः । केशेत्यादौ पूर्वनिपातविधेरनित्यत्वाद्भ्रूशब्दमपहाय केशशब्दस्य पूर्वनिपातः । लक्ष्यशब्दो ण्यति यकारवान् । कर्मणि घञि तन्नहित इत्यवधेयम् ॥ अद्भुतरसोयम् ।

८४-८८ अपि चेति । अपिर्जुगुप्सायाम् । चः समुच्चये । गर्हामाह । एतदित्यादि । एतत्पूतनचक्रं श्मशानप्रेतसमूह आलोक्यते । किं कुर्वत् । अत्याकुलतयाक्रमेण युगपत्कृतो यो ग्रासस्ततोर्धं भूमौ पतितमर्धं चर्वणेन मुख एव स्थितम् । तत्र भूमिपतितैरर्धमुक्तैर्मनुष्यमांसविघसैरुच्छिष्टैः सर्वत्र वृकान्कोकानारण्यकुक्कुरादीनुत्पुष्णत्पुष्टान्कुर्वत् । अक्रमत्वं प्रतिपक्षशङ्कया । अभिलाषातिशयाद्वा । कीदृशान् । अह-

८०. सृक्कि for सृक्क K2.

८१. °रापूर्यते for °राकीर्यते K2.

८२. विकाश for निकाश K1.

८३. लक्षा° for लक्ष्या° C.

८४. N. om. अपि च.

८६. उत्फुल्लत् for उत्पुष्णत् K1.; °राददरं for °राघर्घरं N.

खर्जूरद्रुमदघ्नजङ्घमसितत्वङ्नद्धविष्वक्तत-
स्नायुग्रन्थिघनास्थिपञ्जरजरत्कङ्कालमालोक्यते ॥
समन्तादवलोक्य विहस्य च । अहो प्रकारः पिशाचानाम् ।

महमिकया मांसग्रहणादीषद्घर्घरमव्यक्तशब्दं यथा स्यादेवं रुदतः । एतत्तु कुक्कुरेषु स्फुटमेव । कीदृशं पूतनचक्रम् । खर्जूरद्रुमदघ्ना तत्प्रमाणा जङ्घा यस्य तत् । एतेन जङ्घानां ग्रन्थियोगित्वकर्कशत्वनीरसत्वलोमशत्वानि दर्शितानि । असिता श्यामा या त्वक्चर्म तया नद्धा सर्वतो विस्तीर्णा याः स्नायवो नहरु इति ख्यातास्ताभिर्ग्रन्थिषु संधिभागेषु घनानि दृढान्यस्थ्नां पञ्जराणि येषां तादृशा जरन्तो जीर्णाः कङ्काला मांसादिशून्यास्थिभागा यस्य तत् । वृकपदं शृगालाद्युपलक्षणपरम् ॥ कोक ईहामृगो वृक इत्यमरः ॥ यद्वा । शालावृकाः कपिक्रोष्टुश्वान इति नानार्थेमरदर्शनादेतस्यैवैकदेशो वृकशब्दः । तेन भीमभीमसेनादिवदस्यापि तावदर्थप्रतिपादकतेत्यवधेयम् । यद्वा । वृको घोघ इति ख्यातः ॥ विघसो भोजनशेषेपीत्यमरः । स्याच्छरीरास्थ्नि कङ्काल इत्यमरः ॥

८९–९२ विहस्येति । अतिसात्त्विकेपि मयि भीषणत्वममी पूतनाः कुर्वन्तीत्यसंबद्धक्रियया हासः । यदाह ।

असंबद्धैस्तु हासः स्याद्वाग्नेपथ्यक्रियादिभिः ॥ इति ।

प्रकारो वैलक्षण्यम् । ततेत्यादि । एते पूर्वोक्तादन्ये पिशाचा विस्तृतदीर्घजिह्वाभीषणमुखविवरं विदार्य व्यादाय दग्धपुराणरोहिणानामिव द्युतिं दधति धारयन्ति । दग्धत्वेन श्यामत्वं पुराणत्वेन जीर्णत्वं च दर्शितम् ॥ रोहिणो रोहण इति ख्यातस्तरुः । घोघरात्ति इति ख्यातो वा । रोहितोपि स एव । अत एव रोहितः प्लीहनाशक इत्यमरोपि । रोहणानामिति

८७. दग्ध for दघ्न Kl.; °क्ततः for °क्तत Kl.
८८. कंकार° for कङ्काल° Bh.
८९. विलोक्य for अवलोक्य O.; B. om विहस्य; Bh. C. Kl. N. O. om च.

एते हि १०

ततपृथुरसनोग्रमास्यगर्तं दधति विदार्य विवर्णदीर्घदेहाः ।
ललदजगरघोरकोटराणां द्युतिमिह दग्धपुराणरोहिणानाम् ॥
परिक्रम्य । हन्त बीभत्समेवाग्रे वर्त्तते ।
उत्कृत्योत्कृत्य कृत्तिं प्रथममथपृथूच्छोफभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा । १५

---

पाठे रोहन्तीति रोहणास्तरवस्तेषामित्यर्थः । ललता चलताजगरेण सर्पेण भीषणच्छिद्राणाम् ॥ निष्कुहः कोटरं वा नेत्यमरः ॥ तदिह कोटरेणास्यमजगरेण रसना रोहिणेन पिशाच उपमीयन्ते । भयानको रसः । यदाह ।

विकृतरवसत्त्वदर्शनसंत्रासारण्यशून्यगृहगमनात् ॥
गुरुनृपयोरपराधात्कृतश्च भयानको ज्ञेयः ।

१३–१७ बीभत्सं घृणाकरम् । निर्भिद्येत्यादि । अयं प्रेतरङ्कः प्रेत-रूपो रङ्कः क्षुधाभिशुष्यच्छरीरोऽव्यग्रमनाकुलं यथा तथा क्रव्यं मांस-मत्ति खादति । किं कृत्वा । प्रथममादौ कृत्तिं चर्म निर्भिद्य निर्भिन्नीकृत्य पश्चादुत्कृत्य छित्त्वा । उत्कृत्येति पाठे चर्मकोषाकर्षणमुत्कर्तनं तत्पुनः पुनः कृत्वेत्यर्थः । अथानन्तरं पृथुना महतोच्छोफेन भूयांसि बहूनि मांसानि जग्ध्वा भक्षयित्वा । कीदृशानि । अंसयोः स्कन्धयोः स्फिचोः कटि-मांसपिण्डयोः पृष्ठे कायपश्चाद्भागे पिण्डयोर्जङ्घापाश्चात्यभागयोरादिप-

---

१०. ततः for एते हि N.

११. पृथुतर for ततपृथु N.; दशना° for रसनो O.; विवृत्य for विदार्य K1 K2. O.; विशुष्क for विवर्ण N.

१२. चलद् B. Bh. K1. K2. O. गलद् N. for ललद्; °तिमव & °तिमिह (in margin) O; इव for इह A. D. N.

१३. अवलोक्य च after °क्रम्य N.; अति before बीभत्सम् N.; O. om. एव; अग्रतो for अग्रे N. O.; K1. K2. om. वर्तते.

१४. निर्भिद्योत्कृत्य for उत्कृत्योत्कृत्य Com.; अपि for अथ K1. K2.; पृथूच्छोथ B. पृथूत्सेध N. for पृथूच्छोफ.

१५. स्फिक् for स्फिक् O.; पीठा° for पिण्डा° N.; गन्धीनि for पूतीनि K2.; °न दग्ध्वा for °नि जग्ध्वा K1.

आर्त्तस्नाय्वन्त्रनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥
अपि च ।
निष्टापस्विद्यदस्थ्नः क्वथनपरिणमन्मेदसः प्रेतकाया-
१०० न्कृष्ट्वा संसक्तधूमानपि कुणपभुजो भूयसीभ्यश्चिताभ्यः ।

दात्कक्षामूलाद्यवयवेषु सुलभानि । उच्छूनत्वात्तेषाम् । उग्रपूतीन्युत्कटग-
न्धानि । पृथूत्सेधेति पाठे पृथुनोत्सेधेन कायेन बहुतां गतानीत्यर्थः । यद्वा ।
उत्सेधेनोन्नत्या भूयांसीत्यर्थः ॥ उत्सेधः काय उन्नतिरित्यमरः । कीदृशो
रङ्कः । आर्तस्त्वरावान् । पर्यस्तमितस्ततः क्षिप्तं नेत्रं येन सः । एतदुभयं
रङ्केषु प्रसिद्धमेव । अन्तःपर्यस्तनेत्र इति पाठेन्तर्मध्ये स्थितनेत्रः । रङ्क-
त्वेन कोटराक्षत्वादित्यर्थः । आत्तस्नाय्वन्त्रनेत्र इति पाठ आत्तानि गृ-
हीतानि स्नाय्वन्त्रनेत्राणि येन सः । अत एवान्त्राद्युत्पाटनाय प्रकटित-
दन्तः । दौर्बल्यप्रकर्षणात्प्रकटितदशनत्वम् । अङ्कस्थात्क्रोडीकृतात्कर-
ङ्कात्कपालादाकृष्येत्याक्षेपात् । अन्यथापादानानुपपत्तिः । कीदृशं क्रव्य-
म् । अस्थिषु यत्संतिष्ठति तत् । स्थपुटगतमपि निम्नोन्नतविषमस्थानग-
तमपीत्यर्थः । अत एव रङ्कः ॥ स्त्रियौ स्फिचौ कटिप्रोथावित्यमरः ।
पिण्डः खण्डेङ्गभेदेस्यादिति मेदिनीकरः । करङ्को मस्तकेपि स्यादिति
धरणिः ॥ अयं बीभत्सो रसः ।

९९–१०२ निष्टापेत्यादि । एतेपि कुणपभुजः शवभक्षकाः पिशाचा
बह्वीभ्यश्चिताभ्यः प्रेतकायानाकृष्य तेषामेव जङ्घानलकं जङ्घाप्रधान-

९६. आर्तःपर्यस्त A. D. अन्तःपर्यस्त noticed by Com. for आत्तस्नाय्वन्त्र; नेत्र for नेत्रः Bh. K1. गहन for दशनः C.

९९. °ग्यदस्मः for °द्यदस्थ्नः A. D. margin of O.; परिगलन् for परिणमन् N.; कायात् for कायान् O.

१००. घृष्ट्वा for कृष्ट्वा B.; °मादपि for °मानपि O.

उत्पक्वस्रंसिमांसं प्रचलदुभयतः संधिनिर्मुक्तमारा·
देते निष्कुष्य जङ्घानलकमुदयिनीर्मज्जधाराः पिबन्ति ॥
विहस्य । अहो प्रादोषिकः प्रमोदः पिशाचानाम् ।

मस्थि निकुष्य विगतमांसावरणं कृत्वा मज्जधाराः पिबन्ति । मज्जा-
स्थिमध्यस्थितस्नेहः । कीदृशीः । आराद्दूरत एवोदयिनीर्लम्बमानाः ।
द्रवमयत्वात् । यद्वा । आरात्समीपे पिबन्तीति योजना ॥ आराद्दूरस-
मीपयोरिति विश्वः । चिताभूयस्त्वेनातिभीषणतोक्ता । कीदृशान् । निष्टा-
पेनेषत्तापेन स्विद्यन्त्यसृञ्ज्ञि येषाम्। पद्दन्न इत्यादिसूत्रेणासृक्शब्दस्या-
सन्नादेशेऽल्लोपे रूपम् ॥ अस्थ्न इति पाठो न युक्तः ॥ तृतीयादावस्थी-
त्यादिनानङ्विधानात् । यद्वा । प्रेतकायादिति पञ्चम्यन्तः पाठः । अतो-
स्थ्न इति पञ्चम्यामनङि रूपम् । चिताभ्य इति ल्यब्लोपे पञ्चमी । निस-
स्तपतावित्यनभ्यावृत्तौ षत्वम् ॥ क्वथनेन पाकक्रमेणाङ्गेषु परिणमज्जी-
र्यन्मेदो येषां तान्संसृष्टधूमानपि । कीदृशं जङ्घानलकम् । उत्पक्वमुच्छूनं
कृत्वा पक्वमत एव स्रंसनशीलं मांसं यस्मात् । यद्वा । उत्पक्वेनोद्गतपा-
केन स्रंसि मांसं यस्मात् ॥ उत्पक्व इति भावे क्तः । प्रचलन्तः शिथि-
लीभवन्त उभयतो जानूरुपर्वणो गुल्फाच्च ये संधयोस्थ्नां परस्परमिल-
नस्थानानि तैर्निर्मुक्तम् । प्रचलमिति पाठ उभयतः पार्श्वाभ्यां प्रच-
लम् । अत एव संधिपरिमुक्तमित्यर्थः ॥ कुणपः शवमस्त्रियामि-
मित्यमरः ॥ नलकं नरहड इति ख्यातम् । सरी इति ख्यातं
वा । बीभत्स एवात्र रसः ।

१०३—१०८ अहो इति बीभत्सशृङ्गारदर्शनेनाश्चर्यम् । प्रादो-
षिको रात्रिप्रारम्भजः । शृङ्गारबीभत्सयोः परस्परविरोधेपि संस्था-
नसाम्यात्संभेदाभास इह । प्रसाधनाद्यात्र शृङ्गारः । यदाह ।

---

१०१. प्रचलम् for प्रचलद् noticed by Com.; सारादे° Bh. °मादावे° O. for °मारादे°

१०२. निश्रोष्य Bh. Kl. निष्कृष्य N. निश्चूष्य O. for निष्कुष्य.

१०३. पिशाचाङ्गनानाम् A. B. D. पिशाचीनाम् O. for पिशाचानाम्.

तथा हि ।

अन्त्रैः कल्पितमङ्गलप्रतिसराः स्त्रीहस्तरक्तोत्पल-
व्यक्तोत्तंसभृतः पिनह्य सहसा हृत्पुण्डरीकस्रजः ।
एताः शोणितपङ्ककुङ्कुमजुषः संभूय कान्तैः पिब-
न्त्यस्थिस्नेहसुराः कपालचषकैः प्रीताः पिशाचाङ्गनाः ॥ १०५

ऋतुमाल्यालंकारैः प्रियजनगान्धर्वकाव्यसेवाभिः ।
उपवनगमनविहारैः शृङ्गाररसोपि संभवति ॥

अत एवायं श्लोकः कण्ठाभरणेपि रससंकराभास उदाहृत इति । अन्त्रैरित्यादि । एताः पिशाचस्त्रियः कान्तैः संभूय मिलित्वा कपालचषकैरस्थिस्नेहसुरा मज्जमद्यानि पिबन्ति । कीदृश्यः । अन्त्रै रचितो मङ्गलार्थं प्रतिसरो हस्तसूत्रमूर्णामयं याभिस्ताः । अवैधव्यचिह्नं मङ्गलप्रतिसरो भवति । यद्वा । प्रतिसरः कङ्कणम् । तद-प्यवैधव्यचिह्नतया मङ्गलम् ॥ कङ्कणे करसूत्रे च भवेत्प्रतिसरोस्त्रियामिति मेदिनीकरः ॥ स्त्रीहस्त एव रक्तपद्मं तेन व्यक्तमुत्तंसं कर्णभूषणं बिभ्रति याः । सहसा शीघ्रं हृत्पद्ममालाः पिनह्य परिधाय । हृत्पद्मस्य श्वेततया पुण्डरीकपदेनोपन्यासः । यदाह ।

द्वादशाङ्गुलसंपूर्णे श्वेते हृदयपङ्कजे ॥ इति ।

मालाया मनोहरतयान्या मा गृह्णात्विति परिधाने शीघ्रता । अत एव प्रीताः । रक्तकर्दमकुङ्कुमवत्यः । अत्र पिबन्त्यस्थीत्यादौ यतिभङ्गशङ्का न कार्या । संधिकृतपदविच्छेदे तस्यादोषत्वात् । रेवां द्रक्ष्यस्युपलविषमामित्यादौ तथा दर्शनात् ॥ चषकं पानपात्रं स्यादिति हारावली ॥ इह बीभत्समिश्रः शृङ्गाररसः ।

१०४. Bh. C. K1. N. om. तथाहि.
१०५. रत्नो° for रक्तो° K2.
१० . शिरसां B. शिरसो C. शिरसा D. for सहसा; °रीकै for रीक B.
१०८. °न्त्यहिमम् for °न्त्यस्थि B.; सुरां for सुराः K2. O.; कलाप for कपाल K1.

परिक्रम्य पुनरशब्देति पठित्वा । कथं नाम प्रशान्तभीषणविभीषिकाप्रकारैर्झटित्यपक्रान्तं पिशाचैः । अहो निःसत्त्वता ११० पिशाचानाम् । परिक्रम्य दृष्ट्वा सनिर्वेदम् । विचितश्चैष समन्ताच्छ्मशानवाटः । तथाहि खल्वियं पुरत एव ।

गुञ्जत्कुञ्जकुटीरकौशिकघटाघूत्कारसंवल्गित-
क्रन्दत्फेरवचण्डडात्कृतिभृतप्राग्भारभीमैस्तटैः ।

१०९—११६. झटिति शीघ्रम् । विभीषिका परभयदायिनी रौद्ररूपता । तस्याः प्रकारा भेदाः । अपक्रान्तं प्रपलाय्य गतम् । निःसत्त्वा इत्यनेनात्मप्रौढिर्दर्शिता । महामांसविक्रयादपि नेष्टलाभ इति निर्वेदः । विचितो व्याप्तः । तमोव्याप्तत्वेन कथं विचितत्वज्ञानमित्यत आह इयमिति । गुञ्जदित्यादि । इयं सरित्पुरत एवास्ति । पारेश्मशानं श्मशानपारदेशे ॥ पारे मध्ये षष्ठ्या वेति समासः ॥ कुञ्ज एव कुटीरोल्पा कुटी तत्र या कौशिकघटा पेचकसमूहः । गुञ्जन्तीनां कुञ्जकुटीरकौशिकघटानां घूत्काररूपं संवल्गितं ध्वनितम् । क्रन्दच्छृगालानां डात्कृतिर्डात्कारः शब्दविशेषः अनयोर्द्वन्द्वः । ताभ्यां भृतः पूरितो यः प्राग्भारोग्रतटं तेन भीषणैस्तटैर्लक्षिता ॥ लक्षणे तृतीया ॥ अन्तरभ्यन्तरे शीर्णास्त्रुटिता ये करङ्काः कपालानि तेषां

१०९. °रशब्दपूतेति B. Bh. °रशब्दपूतमिति N. °रशब्दपूतमव्याजमिति K1. K2. O.; द्राग् for नाम A. B. Bh. C. D. अति after नाम N. O., after द्राग् A. Bh. C. D. गति for अति B.; क्रान्त for प्रशान्त O.; C. N. om. प्रशान्त; विभीषण for भीषण Bh.

११०. भीषिका A. B. D. बिभीषिका O. for विभीषिका; विकारैः for प्रकारैः N. O.; झग् for झट् O.; परिक्रम्य दृष्ट्वा before अहो O.; निःसत्त्वाः सर्वे N. निःसत्त्वाः O. for निः सत्त्वता.

१११. N. om. पिशाचानाम्; O. om. पिशाचा—श्च; N. om परिक्रम्य दृष्ट्वा; पुरो before दृष्ट्वा K2.; चैव for चैष N.; सर्वतः for समन्तात् N. O.

११२. N. om. हि.

११३. चक्रूत्कार for घूत्कार A.; संवर्धित N. संवर्गित O. for संवल्गित.

११४. डात्कृत for डात्कृति Bh. C.

११९ अन्तःशीर्णकरङ्ककर्करपयःसंरोधकूलंकष-
स्रोतोनिर्गमघोरघर्घररवा पारेश्मशानं सरित् ॥

नेपथ्ये । हा ताद निक्करुण एसो दाणिं दे णरेन्दचित्ताराहणोवअरणं जणो विवज्जइ । ( क )

---

( क ) हा तात निष्करुण एष इदानीं ते नरेन्द्रचित्ताराधनोपकरणं जनो विपद्यते ।

---

कर्करो भग्नावयवः काकर इति प्रसिद्धो वा कर्करो यत्र । अत एव तरतां संतरणशीलानां संरोध्यवरोधकः कूलंकषः कूलविदारको यः स्रोतोनिर्गमस्तेन घोरो घर्घरोऽव्यक्तरूपो रवः शब्दो यत्र सा । तरःसंरोधीति पाठे तरसा वेगेन संरोधि गमनविरोधि । कर्करेण दृढेन तरसा संरोधीत्यर्थः ॥ अल्पा कुटी कुटीरः स्यादित्यमरः ॥ घटाशब्दः समूहमात्रवचनोपि करिघटादौ त्वात्यन्तिकस्तस्य प्रयोग इत्यवधेयम् । घूत्कारडात्कृती अनुकरणशब्दौ । क्वचित्फात्कृतीति पाठः । तत्रापि फात्कृतिरनुकरणशब्द एव । फेरुफेरवजम्बुका इत्यमरः । तटः प्राग्भार इत्यपीत्यमरः । कर्करो भग्नभागेपि दृढेपि खण्डितेपि चेति धरणिः ॥ तदिह करङ्ककर्करसंकुलनदीप्रवाहस्तीरं पातयति घर्घररवं च कुरुत इति स्फुटमेव ।

११७—१२३. हा तात इत्यत्र हायोगेपि न द्वितीया । हाशब्दस्य शोकवाचिन उपग्रहात् । तस्य च संबोधने प्रथमाप्रयोगात् । तदन्यार्थस्य योगे द्वितीयेति न्यासः । अङ्कमुखे स्त्रीरत्नापहारस्य सूचितत्वान्नेपथ्ये भणनमिदम् । नाद इत्यादि । अयं तावन्नादः श्रोत्र-

---

११९. कर्पर for कर्कर Bh. N.; तरत् B. K1. K2. N. तरः D. for पयः संरोधि for संरोध B. D. K1. K2. N.

११७. इदम्हि after हा K1.; दाणीं for दाणिं D.; K1. om. दे; णरिंद for णरेन्द K1. K2. O.; °रोहणो° K1. °राधणो° O. for °राहणो°.

११८. °रणो A. Bh. K1. °रणसाहणं D. for °रणं; वि before जणो B.; वावज्जइ B. विपज्जइ N. विवज्जदि O. for विवज्जइ.

माध० । साकूतमाकर्ण्य ।

> नादस्तावद्विकलकुररीकूजितस्निग्धतार- १२०
> श्चित्ताकर्षी परिचित इव श्रोत्रसंवादमेति ।
> अन्तर्भिन्नं भ्रमति हृदयं विह्वलत्यङ्गमङ्गं
> देहस्तम्भः स्खलयति गतिं कः प्रकारः किमेतत् ॥

योः संवादं पूर्वोपलम्भाकारतामेति । कीदृशः । विकला त्रस्ता या कुररी हापूतीति प्रसिद्धा पक्षिवधूस्तस्याः कूजितवत्स्निग्धः स्नेहलस्तार उच्चश्च । त्रासान्मालत्यास्तारो नादः । अत एव चित्ताकर्षी प्रियत्वाच्चित्तानुकर्षकः । परिचित इव पूर्वमुपलब्ध इव । अत एव श्रोत्रसंवादितास्य । परिचयश्च शंकरगृहे वृत्तः । यदि श्रोत्रसंवादमेति कथं तर्हीवकार इत्यत आह । अन्तर्भिन्नं द्विधाभूतं संशयाक्रान्तं हृदयं भ्रमति दोलायते । उभयत आकर्षात् । अत्र मालतीगमनासंभवात्संवादस्य च स्फुटत्वात् । यद्वा । अन्तर्भिन्नं विद्धमसंभवेनेत्यर्थात् । तथा बन्धुगतानिष्टशङ्काकलङ्कात्प्रत्यङ्गं विह्वलति । करादीनि कंपन्त इत्यर्थः । तस्याः कथमिहावस्थानमिति भयाद्देहस्तम्भः । यदाह ।

हर्षव्याधित्रासरोषाद्यैः स्तम्भः संभवति ।

चिन्तास्तिमितत्वाद्गतिश्च स्खलति । कथमकस्मादेव ममेदं वृत्तमिति विमर्शमाह । कोऽयं प्रकारः किंनिमित्तं स्नेहमाविष्करोति । किमेतत् । सैवेयं किमन्यद्वा तत्तुल्यमित्यर्थः । संमुग्धिमिति पाठे कर्णपीडां करोतीत्यर्थः । नादश्रुत्या मोहात् ।

१२१. संमुग्धिमे° for संवादमे° noticed by Com.

१२२. विज्वलति for विह्वलति K1. O.

१२३. देहोत्कम्पः B. Bh. C. K1. गात्रस्तम्भः N. for देहस्तम्भ; स्खलति च गतिः for स्ख—तिं A. D.

करालायतनाच्चायमुच्चरन्करुणो ध्वनिः ।
१२५ विभाव्यते ननु स्थानमनिष्टानां तदीदृशाम् ॥

भवतु पश्यामि । इति परिक्रामति ।

ततः प्रविशतो देवार्चनव्यग्रौ कपालकुण्डलाघोर-
घण्टौ कृतवध्यचिह्ना मालती च ।

माल० । हा ताद णिक्करुण एसो दाणिं दे णरेन्दचित्ताराहणो-
१३० वअरणं जणो विवज्जइ । हा अम्ब सिणेहमअहिअए हदासि
देव्वदुव्विलसिदेण । हा मालदीमअजीविदे मम कल्लाणसाहणे-

( क ) हा तात निष्करुण एष इदानीं ते नरेन्द्रचित्ताराधनोपकरणं जनो विपद्यते । हा अम्ब* स्नेहमयहृदये हतासि दैवदुर्विलसितेन ।

१२४-१२८. करालेत्यादि । अयमुत्थितकरुणरसो ध्वनिः कथं वा संभाव्यत इत्यन्वयः । उच्चरन्नुत्तिष्ठन् । वितर्कसंप्रधारणमाह । नन्विति । ननु संभावनायाम् । ईदृशां संभाव्यमानजातीयानामनिष्टानां जनवधानामिदं करालायतनं स्थानमिति संभाव्यते । वध्यचिह्नं न्यस्तालक्तकेत्यादि ।

१२४. करुण for करुणो A. D. N. O.

१२५. मंत्रिध्यानं for °मनिष्टानां B.; ईदृशे for ईदृशां A. B. K1. K2. O.

१२६. Bh. om. इति परिक्रामति; K1. om. परिक्रामति.

१२७. देवता° for देवा° A. O.; व्यग्रहस्तौ for व्यग्रौ A. D.

१२८. च मालती for मालती च O.

१२९. निक्करुण for णिक्करुण K2.; Bh. D. K1. K2. om. दाणिं; णरिन्द K1. O. नरिन्द K2. for णरेन्द.

१३०. °वअरण Bh. °वअरणो K1. °पवरणं K2. for वअरणं; विपज्जइ N. विवज्जदि O. for विवज्जइ; णेहमय for सिणेहमअ O.; N. om. सिणेहमअ; हिअअ for हिअए K1.; तुमं वि before हदासि A. D.; हदं हि for हदासि N.

१३१. देव for देव्व O.; °सिदेन for °सिदेण O.; मालती for मालदी Bh.; °मय for °मअ O.; जीविए N. जीविते O. for जीविदे; हा before मम O.; मह for मम N.; कल्याण for कल्लाण Bh. K1.; °णेक्क for °णेक्क K2.

* मातः Com.

कसुहसअलव्वावारे भअवदि चिरस्स जाणाविदासि दुःखं सिणेहेण। हा पिअसहि लवङ्गिए सिविणआवसरमेत्तदंसणा अहं दे संवुत्ता। (क)

माध०। हन्त सैवेयं हरिणेक्षणा। संप्रति निरस्त एव संदेहः। १३५ तदहमपि नामैनां जीवन्तीं संभावये। त्वरितं परिक्रामति।

कापालिकौ। देवि चामुण्डे नमस्ते नमस्ते।

सावष्टम्भनिशुम्भसंभ्रमनमद्भूगोलनिष्पीडन-
न्यञ्चत्कर्परकूर्मकम्पविगलद्ब्रह्माण्डखण्डास्थिति।

---

हा मालतीमयजीविते मम कल्याणसाधनैकशुभ*सकलव्यापारे भगवति चिरस्य ज्ञापितासि दुःखं स्नेहेन। हा प्रियसखि लवङ्गिके स्वप्नावसरमात्रदर्शनाहं ते संवृत्ता।

---

१३२—१३५. अत्र भगवति कामन्दकि इति शेषः। चिरस्य बहुकालम्। एकशुभस्थाने। एकमुखमिति पाठ एकमुखमेकवाक्यतापन्नम्। हन्तेति निश्चयलाभे।

१३८-१४०. सावष्टम्भेत्यादि। देवि युष्माकं क्रीडितं नृत्यं वन्दे। कीदृशम्। साटोपो यो निशुम्भो निर्दययन्त्रणं करणभेदस्ततः संभ्रमादा-

---

१३२. मुक्क after सुह C.; मुक्क; B. D. O. सुल N. for सुह; वावारे for व्वावारे Bh. K1. K2.

१३३. प्पिअ Bh. प्पिय O. for पिअ; सिविणअदंसणमेत्ता for सि—णा N.; सिविअणा° for सिविणआ° K1. K2. मेत for मेत्त K1.

१३४. Bh. om. दे; ते for दे K1 O.

१३५. K1. om. हन्त; N. om. सै—क्षणा; मदिरे° for हरिणे° A. C. D. N.; हन्त before संप्रति K1. K2.; मे before संदेह N. O.

१३६. N. O. om. अहं; एव for अपि नाम B.; नाम् for नाम Bh. K1.; एतां for एनां C.; O. om. एनां; एव after जीवन्तीं N.; संभावयेयं for संभावये O.

१३७. अघोरघण्टकपालकुण्डले A. कपा–घण्टौ N. for कापालिकौ; K2. N. om. one नमस्ते.

१३८. निर्भर for संभ्रम A. B. Bh. C. D. K1. K2. नदत् for नमत् B.

१३९. कंप्र for कंप N.; विचलद् for विगलद् O.

* शुभ for मुक्क Com.; °नैकमुख noticed by Com. तुह in K1. K2. can also be read as मुह ).

१४० पातालप्रतिमल्लगल्लविवरप्रक्षिप्तसप्तार्णवं
वन्दे नन्दितनीलकण्ठपरिषद्व्यक्तर्द्धि वः क्रीडितम् ॥

अपि च । प्रचलितकरिकृत्तिपर्यन्तचञ्चन्नखाघातभिन्नेन्दुनिःस्यन्दमानामृतश्च्योतजीवत्कपालावलीमुक्तचण्डाट्टहासत्रसद्भूरिभूतप्रवृत्तस्तुति श्वसदसितभुजंगभोगाङ्गदग्रन्थिनिष्पीडनस्फार-

---

नमतो भूगोलस्यावनिचक्रस्य निष्पीडनेन न्यञ्चदधोगच्छत्कर्परं पृष्ठास्थि यस्य कूर्मस्य तस्य कम्पेनाङ्गचालनेन विगलन्ती भ्रश्यन्ती ब्रह्माण्डखण्डस्य स्थितिर्यत्र तत्तथा । अनेन भूकम्प उक्तः । तथा च नम्रीभूतभूगोले त्वर्णवानामुत्सेकात्पातालतुल्यगल्लविवरे प्रक्षिप्ताः सप्तार्णवा यत्र तत् । नन्दितभैरवसभं च प्रकटविभवम् ।

उत्क्षिप्ता तु भवेत्पार्ष्णिर्निशुम्भोयं निगद्यते ।
अङ्गुल्योग्राञ्चिताः सर्वाः पादेप्रतलसंचरे ॥

इति भरतः ॥ कटाहे च कपालेपि पृष्ठास्थनि च कर्पर इति शाश्वतः ॥ नाट्येश्वरीवर्णनमिदम् ।

१४२—१५०. दण्डकमाह प्रचलितेत्यादि । देवि युष्माकं ताण्डवमुद्धतं नृत्यमस्माकमभीष्ट्या अशुभनाशाय तुष्ट्या आनन्दाय च भूयात् । अरिष्ट्या इति पाठे रिष्टिरशुभं तदभावोरिष्टिस्तस्यै । अनेन भाव्यनिष्टार्थसूचकदण्डोप्युक्तः । यदाह ।

आकस्मिकमसंबद्धं समर्थमिव यद्भवेत् ।
वाचामन्ते स दण्डः स्याद्भाव्यनिष्टार्थसूचकः ॥

---

१४२. अघोर° for अपि च N.; प्रचलत् for प्रचलित C.; निष्यंद Bh. निस्पन्द K1. O. विष्यन्द K2. for निःस्यन्द.

१४३. °तोयोत B. °तश्चोत K1. K2. O. for °तश्च्योत.

१४४. भूभृत् for भूत C.; प्रबद्ध for प्रवृत्त O.; निष्पीडितोत्फाल for निष्पीडनस्फार O.; उत्फुल्ल for स्फार N.

फुल्लत्फणापीठनिर्यद्विषज्योतिरुज्जृम्भणोड्डामरव्यस्तविस्तारि- १४५
दोःखण्डपर्यासितक्ष्माधरम् । ज्वलदनलपिशङ्गनेत्रच्छटाच्छन्न-
भीमोत्तमाङ्गभ्रमि प्रस्तुतालातचक्रक्रियास्यूतदिग्भागमुत्तुङ्गखट्वाङ्ग-
कोटिध्वजोद्धूतिविक्षिप्ततारागणं प्रमुदितकटपूतनोत्तालवे-

रिष्टिः खड्गे नाशुभे स्त्रीति मेदिनीकरः। अरिष्टे तु शुभाशुभ इत्यमरः ॥ यद्वा। ऋकारो देवमाता स्यादिति कोशादृशब्दात्संबुद्धौ गुणे च हे अः देवमातः इष्ट्या अभीष्ट्यै भूयादित्यर्थः । कीदृशम् । प्रचलितगजासुरचर्मपर्यन्तेषून्नमतां नखानामाघातैर्भिन्नात्स्फुटिताद्देवीमस्तकस्थचन्द्रात्क्षरदमृतस्य श्च्योतेनाप्लवेन जीवन्तीभिः कपालावलिभिर्मुण्डमालाभिर्मुक्तैश्चण्डाट्टहासैरत्युच्चहसनैस्त्रसतां बहुभूतगणानां प्रवृत्ता स्तुतिर्यत्र । यद्वा । भूतगणैः प्रवृत्ता प्रवर्तिता स्तुतिर्यत्र तत् ॥ अन्तर्भावितण्यर्थः॥ यद्वा । प्रचलितः करिचर्मरूपोऽवधिर्यत्र तत् । पश्चात्कर्मधारयः। तथा ताण्डवाडम्बरायासेन श्वसतां श्यामसर्पाणां कायैर्ये केयूराकारमन्थयस्तेषु निष्पीडनेनोत्फाल उन्नतमुखविकासस्तरलो वा फुल्लन्विस्तारिताङ्गश्चयः फणापीठः । विस्तारितया पीठेन रूपकम् । ततो निर्गतविषाग्निरुज्जृम्भणेनाधिक्येनोड्डामरः केलिसंत्रस्तु [ संस्तव ? ] रसातिशयो भयंकरो वा विषमो वा व्यस्त इतस्ततोगामी विस्तारी दीर्घो योदोःखण्डः समूहस्तेन पर्यासितः क्षिप्तः पर्वतो यत्र तत् । देव्या अनेकबाहुशालितया दोःखण्ड इत्युक्तम् ॥ अब्जादिकदम्बे खण्डमस्त्रियामि-

१४५ फुल्ल A. स्फुल्लत् K1. for फुल्लत्; °ज्जृम्भमाणो° for जृम्भणो° K2. व्यक्त for व्यस्त C.; विस्तार for विस्तारि D. K1.

१४६. षंड for खण्ड Bh; तलं for धरं K2.; रिंखज्जटाजूट N. रिंगज्जटाजूट O. for नेत्रच्छटाच्छन्न; सार B. सन्न Bh. K1. °टोप K2. for °च्छन्न.

१४७. स्फूत Bh. स्फुट C. for स्यूत; खड्गाङ्ग for खट्वाङ्ग A.

१४८. शृङ्ग for कोटि N. O.; °जोद्धृत B. D. °जोद्भूत Bh. °जोद्धति C. °जोद्भूत O. for °जोद्धूति; विकट for कट B.

तालतालस्फुटत्कर्णसंभ्रान्तगौरीघनाश्लेषहृष्यन्मनस्त्र्यम्बकान-
१५० न्दि वस्ताण्डवं देवि भूयादभीष्टयै च हृष्टयै च नः। इत्यभिनयतः।

माध०। हा धिक्। प्रमादः।

न्यस्तालक्तकरक्तमाल्यवसना पाखण्डचण्डालयोः
पापारम्भवतोर्मृगीव वृकयोर्भीरुर्गता गोचरम्।

---

त्यमरः॥ तथा ज्वलतानलेन पिङ्गलं यन्नेत्रं ललाटलोचनं तस्य च्छटा ज्वालानिर्गमप्रसरस्तस्य साटेन विस्तारेण भीमं यदुत्तमाङ्गं शिरस्तस्य भ्रमिर्मण्डलाकारेण भ्रमणं तया प्रस्तुता प्रारब्धालातचक्रक्रिया वह्निप्रज्वलितार्धकाष्ठविशेषकर्म तया स्यूता इवैकत्र प्रतिबद्धा इव दिग्भागा यत्र तत्। तथातिमहत्खट्वाङ्गाग्रध्वजोत्कम्पाद्विक्षिप्त इतस्ततस्तारागणो यत्र तत्। तथा दुष्टकटपूतनोद्भटवेतालानां तालेन कलकलेन स्फुटत्कर्णात एव संभ्रान्ता त्रसन्ती सत्वरा वा गौरी तस्या निबिडालिङ्गनेन हृष्यच्चित्तं त्र्यम्बकं शिवमत्यर्थमानन्दयति॥ आभीक्ष्ण्ये णिनिः॥ साटो निकुञ्जे विस्तार इति विश्वः। शृङ्गमग्रेपि कीर्तितमिति शाश्वतः।

१५१—१५५. धिक्प्रमाद इत्यत्र वर्तत इति क्रियाधारः॥ तत उपपदविभक्तेः कारकविभक्तिर्बलीयसीति धिग्योगे द्वितीयां बाधित्वा प्रथमेत्यवधेयम्॥ न्यस्तेत्यादि। सेयं भूरिवसोः सुता यस्याः कृते मयैवं दुःखमनुभूयते पाखण्डचण्डालयोर्गोचरं संमुखं गता। पाखण्डेषु चाण्डालौ। तद्दर्शनविरुद्धक्रियाकारित्वात्। यदाह।

---

१४९. नाद Bh. K1. K2. लोल O. for ताल; स्तना° for घना° B.; कृष्यन् for हृष्यन् Bh.; त्र्यञ्चका° for त्र्यम्बका° K1.

१५०. अरिष्टयै for अभीष्टयै N. O.; तुष्टयै च before हृष्टयै K1.; तुष्टयै for हृष्टयै B. K2.; °धायतः for °नयतः K1.

१५१. N. om. हा.

१५२. व्यस्ता° for न्यस्ता° B; पाषण्ड A. Bh. पाषाण्ड K2. N. पाखण्डि O. for पाखण्ड; चाण्डाल° for चण्डाल° A.

१५३. °रम्भकयोः for °रम्भवतोः B. C. D.

सेयं भूरिवसोर्वसोरिव सुता मृत्योर्मुखे वर्तते
हा धिक्कष्टमनिष्टमस्तकरुणः कोयं विधेः प्रक्रमः ॥ १५५

कपाल० । तं भद्रे स्मर दयितोत्र यस्तवाभू-
दद्य त्वां त्वरयति दारुणः कृतान्तः ।

---

न भुञ्जीतार्कपत्रेषु स्त्रीबालं नैव घातयेत् ॥

यद्वा । पाखण्डौ च तौ चण्डालौ च । निषिद्धक्रियत्वात् । यदाह ।

अवध्यास्तु समाख्याताः सर्वयोनिगताः स्त्रियः ॥

चण्डालत्वादेव पापारम्भव्रतोर्मारणप्रवृत्तयोः । न्यस्ते अलक्तकरक्ते माल्यवसने यस्यां सा । एतद्वध्यचिह्नम् । यथा मृगी वृकयोः संमुखं गता तथेयं भीरुः । मृगीत्यनेन भयचलनेत्रतोक्ता । वसोर्देवताभेदस्य । एतेनास्य सुखित्वमुक्तम् । मृत्योर्यमस्य मुखे वर्तते । अत एव हाशब्दः परिदेविते स्त्रीरत्नमपि वध्यत इति । निन्दायां धिगिति । विषादे कष्टम् । कोपेनिष्टम् । अस्ता नष्टा करुणा दया यत्र । एतादृशो विधेरारम्भः कोयम् । निन्दितोयम् । कीदृग्वा ॥ किं वितर्के परिप्रश्ने क्षेपे निन्दाप्रकारयोरिति विश्वः ॥ करुणोयं रसः ।

इष्टवधदर्शनाद्वा करुणरसो नाम संभवति ॥

इति भरतः । चण्डालोपि च चाण्डाल इति शब्दभेदः । पुष्पपुष्पस्रजौ माल्यमित्यरः ॥

१५६-१६४. त्वं भद्रेत्यादि । प्रहर्षिणीच्छन्दसा श्लोकार्धम् । चामुण्डे भगवतीत्याद्यभिमार्धम् । हे भद्रे यस्तव दयितो वल्लभत्वेनेष्टस्तं स्मर । गुरुत्वात्स्मरणमस्य । यदाह ।

पतिरेको गुरुः स्त्रीणामिति ।

---

१५५. आरिष्टम° for अनिष्टम° B.
१५६. कापालिकौ for कपाल° K2.; त्वं for तं A. B. Bh. C. D. K1. K2.
१५७. °देव त्वां for °द्य त्वां A.

मालः० । हा दइअ माहव परलोअगदो वि सुमरिदव्वो तुम्हेहिं अअं जणो । ण हु सो उवरदो जस्स वल्लहो
१६० सुमरेदि । ( क )

कपाल० । हन्त माधवानुरक्तेयं तपस्विनी ।

अघोर० । शस्त्रमुद्यम्य । यदस्तु तदस्तु व्यापादयामि ।

चामुण्डे भगवति मन्त्रसाधनादा-
वुद्दिष्टामुपनिहितां भजस्व पूजाम् ॥

१६५ इति हन्तुमुपक्रान्तः ।

( क ) हा *दयित माधव परलोकगतोपि स्मर्तव्यो युष्माभिरयं जनः । न खलु स उपरतो यस्य वल्लभः स्मरति ।

यद्वा । मदुपहरणीयत्वेन स इह जन्मनि ते वल्लभो न भूत एव । अतः जन्मान्तरेपि तल्लाभाय तं स्मर । यदाह ।

यं यं चापि स्मरन्भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ इति ।

कृतान्तो यमः । स्मरणफलमाह [ न खलु स उपरत इति ] । यस्येत्य-धीगर्थेति कर्मणि षष्ठी ॥ यस्य गुणमिति वा । अन्तकाले माधवस्मरणं मुक्तिहेतुरिति कटाक्षितम् । हन्त खेदे । कामन्दकीमित्रपुत्रत्वान्ममापि माधवस्तादृश एव । तदनुरक्ता चेयं कथं वध्येति खेद इति भावः । अत

---

१५८. K1. K2. om. हा; दइद for दइअ Bh.; णाह for दइअ K1. K2. O.; णाह after दइअ A; B. om. माहव; पि for वि O.; D. N. om. वि.

१५९. K1. K2. om. तुम्हेहिं ; णहि K1. णखु K2. for णहु.

१६०. A. B. C. D. have जणो before सुमरेदि; सुमरइ for सुमरेदि N.

१६१. वराकी before तपस्विनी A. B. C. D.

१६२. B. om. शस्त्र--°म्य ; शक्तिम् for शस्त्रम् A.; Bh. N. O. om. यद—°यामि.

१६३. साधनार्थम् for साधनादौ Bh. K1. K2.

१६५. Bh. K1. K2. N. om. इति-क्रान्तः.

* Com. has नाथ for दयित.

माध० । सहसोपसृत्य प्रकोष्ठे मालतीं विक्षिप्य । दुरात्मन् अपेहि । प्रतिहतोसि कपालिकापसद ।

माल० । सहसावलोक्य । परित्ताअदु परित्ताअदु महाभाओ ।(क)

इति माधवमालिङ्गति ।

माध० । महाभागे न भेतव्यं न भेतव्यम् । १७०

मरणसमये त्यक्त्वा शङ्कां प्रलापनिरर्गलं
प्रकटितनिजस्नेहः सोयं सखा पुर एव ते ।

---

( क ) परित्रायतां परित्रायतां* महाभागः ।

---

एव तपस्विन्यनुकम्प्या । उद्दिष्टां वाचा प्रतिज्ञाताम् । उपनिहितामुपढौकिताम् ।

१६६-१७४. कफोणेरधोभागो मणिबन्धपर्यन्तः प्रकोष्ठः । विक्षिप्यापसार्य । खड्गहस्तत्वेन बाहुमध्येपसारणं जातिः । प्रतिहतो निराकृतः । अपसद निन्दित । मरणेत्यादि । सोयं तव मित्रं पुरत एव वर्तत इत्याक्षेपात् । यो बकुलवीथ्यादिषु सानुरागदर्शनप्रसन्नया त्वया स्वीकृतः । मरणसमय इत्यनेनानुराग उक्तः । यदाह ।

---

१६६. Kl. om. सहस्तोपसृत्य; खड्गं before प्रको° O.; मालतीं प्रकोष्ठे for प्र–तीं Bh. Kl. K2.; प्रकोष्ठेन for प्रकोष्ठे O.; O. om. मालतीं; खड्गं for मालतीं B. N.; गृहीत्वा खड्गं before विक्षिप्य K1. K2.; निक्षिप्य for विक्षिप्य A. B. Bh. D.; आः before दुरात्मन् N.; Bh. repeats अपेहि; A. om. अपेहि.

१६७. एष before प्रति° A.; नन्वयं न भवसि after °कापसद A.

१६८. Kl. om. सहसावलोक्य; माधवं for सहसा O.; विलोक्य for अवलोक्य Bh.; A. B. C. D. K1. K2. om. one परित्ताअदु A. B. Bh. C. D. K1. K2. add मं before महा° महाणु° for महा° O. B.; भावो for भाओ C. D.; माहवो A. K1. माहवः K2. after °भाओ.

१६९. B. Bh. K1. O. om. इति; O. om. माधवमालिङ्गति; तम् for माधवम् B.

१७०. A. B. K1. K2. O. om. one न भेतव्यम्.

१७१. त्यक्ताशङ्कः Bh. मुक्ताशंकः K1. K2. त्यक्ताशंकः O. मुक्ताशङ्को. Com. for त्यक्त्वा शङ्कां; प्रताप for प्रलाप A. B. D. K1. K2. O.; निरर्गल A. Bh. C. D. निरर्गलः B. K1. K2. O. for निरर्गलं.

* Com. om. one परित्रायतां.

सुतनु विसृजोत्कम्पं संप्रत्यसाविह पाप्मनः ।
फलमनुभवत्युग्रं पापः प्रतीपविपाकिनः ॥

१७५ अघो० । आः क एष पापोस्माकमन्तरायः संवृत्तः ।

कपा० । भगवन् स एवास्याः स्नेहभूमिः कामन्दकीसुहृत्पुत्रो महामांसस्य पणायिता माधवः ।

---

साहसानुरक्तं हि स्त्रियो भजन्त इति ।

तत्र मुक्ताशङ्को निर्भयः । पाखण्डादिति भावः । अत एव प्रतापेन निरर्गलोनभिभाव्यः । प्रलापेति पाठे हा नाथ माधवेत्यादिमालतीप्रलापेन निरर्गल उच्छृङ्खल इत्यर्थः । त्यक्त्वा शङ्कामिति पाठे शङ्कां लज्जादिकं वा त्यक्त्वा प्रतापनिराकुलो वा प्रतापनिरङ्कुशो वेत्यर्थः । यद्वा । शङ्कां त्यक्त्वा यं प्रति त्वया प्रकटितो निजस्नेहः सोयमित्यर्थः । यद्वा । अयं कीदृशः । प्रकाशितात्मस्नेहः । मरणसमये रक्षणादिति भावः । हे सुतनु अत उद्गतं कम्पं त्यज । असौ पापः संप्रत्येव पाप्मनो निषिद्धाचरणस्य फलं मरणरूपमुग्रं तीव्रमनुभविष्यति । संप्रतीत्यनेन प्रकृतोपयुक्तं निजाप्तत्वं पौरुषं च ध्वनितम् । कीदृशस्य । प्रतीपो विपरीतो विपाको विरुद्धपरिणतिर्यत्र तस्य ॥ अनुभवतीत्यत्र वर्तमानसामीप्ये वर्तमानवद्वेति भविष्यति लट् ॥ शृङ्गारवीररसंभेदोत्र ।

१७५-१८८. अन्तरायो विघ्नः । भूमिः स्थानम् । त्रासातिशयान्निःश्वासः । अत्रोपरि सौधोपरि । अलिन्द ओट्ट इति प्रसिद्धे । यूयमिति । अहमबला सुप्ता चान्येनानीता यूयं धीराधीरा विबुद्धा अपी-

---

१७३. वा पुनः for पाप्मनः N.

१७५. अयं after पापो N.

१७६. भगवत्या for भगवन् A.; N. om. भगवन्; A. om. स; अयम् after एव A. Bh. K1. K2.

१७७. पण° for पणा° A. C. D. K1. K2. N. O.; नाम after माधवः A.

माध० । साश्चर्यम् । महाभागे किमेतत् ।

माल० । चिरादाश्वस्य । महाभाअ अहं वि ण आणामि । एत्तिअं उण जाणामि उवरिअलिन्दअं पसुत्ता इह पबुद्धम्हि । तुम्हे १८० उण कहिं । ( क )

माध० । सलज्जम् ।

त्वत्पाणिपङ्कजपरिग्रहधन्यजन्मा
भूयासमित्यभिनिवेशकदर्थ्यमानः ।

( क ) महाभाग अहमपि न जानामि । एतावत्तु* नर्जानाम्युपर्यलिन्दकं प्रसुप्तेह †प्रबुद्धास्मि । यूयं पुनः क्व ।

दानीमिह किमर्थमागता इत्यर्थः । त्वदित्यादि । हे भीरु महामांसविक्रयाय श्मशाने भ्रमंस्तत्र क्रन्दितान्याकर्ण्यागतोस्मि । महामांसविक्रयफलमाह । त्वदिति । त्वद्विवाहेन धन्यजन्मा पुण्यजन्माहं भवामीत्यभिनिवेशेनातियत्नेनावेशेन वा कदर्थ्यमानः पीड्यमानः । अतस्त्वां विना न मे जीवनमिति संभाव्यमानफलतया मांसविक्रये प्रवृत्तोस्मीति भावः । त्वत्पादपङ्कजेति पाठे प्रेयसीचरणग्रहणस्य मान एव कर्तव्यतया मानप्रसादनमेवोत्तरोत्तरं चरितेत्याशंसितवान् । अत एव सलज्जमित्युक्तमिति भावः ॥ धन्यः पुण्य इति स्मृत इति विश्वः ॥

१७९. Bh. om. । चिराद्; Bh. K1. K2. O. om. महा-पि जाणामि; अहं ण किंपि जाणामि for अहं-°णामि A. B. C. D.

१८०. एत्तियं for एत्तिअं K1. O.; दाव Bh. K1. K2. दाणिं N. O. for उण; °लिन्दे A. °लिंदए D. K2. O. for लिन्दअं; प्पसुत्ता for पसुत्ता A. D. K2. O.; परिबु° A. पडिबु° B. K1. N. विबु° O. for पबु°; तुम्हे Bh. तुमं O. for तुम्हे.

१८१. तत for त्वत A. D.; पाद for पाणि O. noticed by Com.; पुण्य for धन्य A.

* Com. adds एव after एतावत्. † °लिन्दके Com.; विबु° Com.

१८९ भ्राम्यन्नृमांसपणनाय परेतभूमा-
वाकर्ण्य भीरु रुदितानि तवागतोस्मि ॥

माल० । स्वगतम् । कधं मम कारणादो एव्वं एदे अप्पणिर-
वेक्खा परिभमन्ति । ( क )

माध० । अहो नु खलु भोस्तदेतत्काकतालीयं नाम । संप्रति हि

१९० राहोश्चन्द्रकलामिवाननचरीं दैवात्समासाद्य मे
दस्योरस्य कृपाणपातविषयादाच्छिन्दतः प्रेयसीम् ।

**( क ) कथं मम कारणादेवमेत आत्मनिरपेक्षाः परिभ्रमन्ति ।**

कुत्सितोर्थः कदर्थः । भीरु इत्यनेन रोदनोपपत्तिरुक्ता । तदिह त्वन्नि-मित्तमहं साहसी त्वं पुनः कीदृशीति न जान इति तात्पर्यम् । अत एव हर्षविस्मयवशादाह [ मालती कथमित्यादि ] । परिभ्रमणमितस्ततो गमनम् । आत्मनिरपेक्षः श्मशानभ्रमणेन ।

१८९—१९३. विस्मयेहो नु खलु भोः । काकतालीयमचिन्तितोपनतम् । यथा काकागमनतालपतनयोरेकदा संभवो दैवाधीनस्तथेदमपीत्यर्थः । राहोरित्यादि । दैवाद्विधिवशादासाद्य प्राप्य । अर्थात्प्रियाम् । अस्य दस्योश्चौरस्य खड्गपातविषयात्प्रेयसीमाकर्षतो मम चेतः कथं वर्तताम् । नवनवरसोदयात्तन्न जान इत्यर्थः । कामिव । राहोराननचरीमिन्दुकलामिव । कृपाणपातविषयामिति पाठे खड्गपतनस्य विषय आश्रयो

---

१८७. अपवार्य for स्वगतम् B. Bh. K1. K2.; हद्धी हद्धी A. D. हद्धी K2. before कधं, कहं for कधं Bh. K. N.; मह for मम N.; काल° for कार° N. जव्व Bh. ज्जेव K2. एव्व N. एवं O. for एव्वं; B. D. om. एव्वं; B. C. D. om. एदे; वि Bh. K1. पि K2. before अप्प; °वेक्खो B. C. D. °विक्खा Bh. पेक्खा K2. O. for °वेक्खा.

१८८. पडि for परि B. N.; °क्कामदि B. C. D. °क्कामन्दि A. भ्भमंति Bh. क्कमन्ति K1. O. for भमन्ति.

१८९. B. om. नाम.

१९०. चौरस्य for दस्योर C.; समयाद् B. विषयां noticed by Com. for विषयाद्.

आतङ्काद्विकलं द्रुतं करुणया विक्षोभितं विस्मया-
त्क्रोधेन ज्वलितं मुदा विकसितं चेतः कथं वर्तताम् ॥

अघो० । रे रे ब्राह्मणडिम्भ ।

व्याघ्राघ्रातमृगीकृपाकुलमृगन्यायेन हिंसारुचेः १९५
पाप प्राण्युपहारकेतनजुषः प्राप्तोसि मे गोचरम् ।

---

यत्र तामेतादृशीं प्रेयसीं प्राप्य कथं मम चेतो वर्ततामिति योजना । यद्वा अस्य कीदृशस्य । आच्छिन्दतो द्विधाकर्तुमुद्यतस्य । प्रियामित्यर्थात् । ततो जीवनाभाव एवास्या इति भावः । चोरिकयापहरणेन दस्युत्वम् । तदिह प्रथमार्धेन हेतुरुक्तः । द्वितीयेन फलमाह । आतङ्काच्चित्तचमत्कारा-द्विकलं न त्वस्य निसर्गसात्त्विकस्य भयमिति यद्यपि तथापि प्रियप्राप्त्या जीवनसव्यपेक्षतया भयमुचितमेव पूर्वं तु जीवननिरपेक्षतया निर्भयत्व-मित्यातङ्को भयमेव । राहोरित्युपमानं भयहेतुः । चन्द्रकलोपमया जग-न्नेत्रोत्सवकरीयं व्यसनमुपगतेति करुणया द्रवीभूतम् । दैवादासाद्येति विस्मयाद्विचलितम् । दस्योरित्यनेन मालतीमयं हन्तुमुद्यतश्चौर इति कोपेन दीप्तम् । आच्छिन्दतः प्रेयसीमिति प्रियाजीवननिर्वाहेन हर्षेण प्रसन्नम् ।

१९४-१९८. ब्राह्मणेति सिद्ध्यनुगुणशुचित्वार्थं यज्ञोपवीतधारणात् । डिम्भो बालकः । ब्राह्मणकपालभोजिनो मम ब्राह्मणवधेपि न दोष इत्यु-क्तमनेनेत्यपि भावः । व्याघ्रेत्यादि । हे पाप मालत्युपहारकृत्यपरस्य मे गोचरं समीपं यत्प्राप्तोसि । अत एव विघ्नकारितया पापेति । कीदृशस्य मे । व्याघ्रगृहीतहरिणीकृपयाकुलो यो मृगस्तन्न्यायेन मृगीमनुसरन्व्याघ्र-

---

१९३. वर्तते for वर्तताम् C. N.
१९४. अरे N. अये O. for रे रे.
१९५. घ्राण for घ्रात C.
१९६. पापः C. प्रायः noticed by Com. for पाप.

सोहं प्राग्भवतैव भूतजननीमृध्नोमि खड्गाहति-
च्छिन्नस्कन्धकबन्धरन्ध्ररुधिरप्राग्भारनिःस्यन्दिना ॥
माध० । दुरात्मन् पाखण्डचण्डाल ।
२०० असारं संसारं परिमुषितरत्नं त्रिभुवनं
निरालोकं लोकं मरणशरणं बान्धवजनम् ।

संनिधौ पतन्मृगस्तस्य वध्यो भवत्येवं हिंसारुचेः । एनां न रक्षसि त्वं तु म्रियस इति भावमाश्रित्य । पाठान्तरं हिंसारुचे इति संबोधनं वा । सोहं भवतैव प्रागग्रे भूतजननीं जगन्मातरं चण्डिकामृध्नोमि प्रीणयामि ॥ ऋधु वृद्धाविति स्वादिरपीति धातुप्रदीपः ॥ कीदृशेन । खड्गाहत्या व्यस्तस्कन्धश्छिन्नग्रीवः । अत एव कबन्धस्तस्य रन्ध्राद्रुधिरप्राग्भारं स्रोतनं समूहं वा निःस्यन्दितुं शीलं यस्य तेन । रुचेरिति पञ्चम्यन्तपाठे रुचेर्हेतोर्मे गोचरं प्राप्तोसीत्यर्थः । पापस्थाने प्रायः पाठे समस्तमेव पदम् ॥ केतनं कृत्ये केतावुपनिमन्त्रण इत्यमरः । गोचरस्तु समीपे स्यादिति धरणिः ॥ यत एव च्छिन्नग्रीवोत एव कबन्ध इति हेतुहेतुमद्भावेनोक्तिपोष एव । वीररसोयम् ।

१९९–२०३. मारणेपराधमाह । असारमित्यादि । हे पाखण्ड जगदसारं सारशून्यं विधातुं कर्तुं कथं व्यवसितः कृतप्रारम्भोसि ।

अशक्यानि दुरन्तानि समव्ययफलानि च ।
असत्यानि च कार्याणि नारभेत विचक्षणः ॥

इति न श्रुतं त्वया । तथा च संसारसारभूतेयमेव । अनया विनासार एव स इति । यदाह ।

१९७. गृध्नोमि for ऋध्नोमि B.

१९८. व्यस्त Bh. K1. K2. N. न्यस्त O. for छिन्न; रुचिर for रुधिर O.; निष्यंदिना Bh. K2. निस्पन्दिना O. for निःस्यन्दिना.

१९९. पाषण्ड A. Bh. N. O. पाषाण्ड K2. for पाखण्ड; चाण्डाल for चण्डाल A. B. Bh. D.

अदर्पे कन्दर्पे जननयननिर्माणमफलं
जगज्जीर्णारण्यं कथमसि विधातुं व्यवसितः ॥

---

सारं तु महिलारत्नं संसार इति निश्चयः ॥ इति ।
जातौ जातौ यदुत्कृष्टं तद्धि रत्नं प्रचक्षते ॥ इति ।

तत्सर्वमाकृष्येयं निर्मिता । अतो रत्नमियम् । मनोहरत्वदीप्तिमत्त्वतरलत्वादिनेयं वा रत्नम् । अत एव तदभावात्प्रमुषितरत्नं त्रिभुवनं कर्तुं व्यवसितोसि । तदेतत्सर्वविषयं चौर्यं दुरन्तमिति भावः । इयमतिकान्त्या जगदुद्द्योतयतीत्यालोकभूता । एतदभावान्निरालोकं तमः प्रविष्टं लोकं जनं कर्तुं व्यवसितोसि । अत एवोत्कृष्टं प्रति लोकोक्तिस्तेन विनान्धकारस्तत्सत्त्व उद्द्योत इति । बान्धवजनानामेतत्सखीनामियं जीवनहेतुः । अत एतन्नाशान्मरणशरणं सखीजनं विधातुं व्यवसितोसि । अन्यस्त्रीनाशे तत्सख्यो दुःखिताः । एतन्नाशे तु म्रियन्त एवेति भावः । अत्रासारं संसारमित्यादिना नायिकागतरामणीयकातिशयवर्णनमुपक्रम्य मरणशरणमित्यादिस्नेहविषयताप्रतिपादनान्नैकवाक्यतयैकरसनिर्वाह इत्यदेश्यम् । मात्रादिबन्धुव्यतिरिक्तोदासीनबान्धवसंग्रहपराज्जनशब्दात्स्वस्यैव माधवस्तथा विपत्तिं सूचयतीत्यदोषात् । तदीयनानागुणचिन्तनादेव मरणशरणता ममेत्यारब्धनिर्वाहाच्च । कन्दर्पश्चैतया मोहनास्त्रेण दर्पं करोति । एतदभावाददर्पं कन्दर्पम् । जननयनस्यैतद्दर्शनमेव फलम् । अत एतन्नाशात्तदफलम् । जगदनयालंकृतमेव । एतदभावाज्जीर्णारण्यतुल्यं तदिति । अत्र प्रियाप्रशंसया शृङ्गारो बन्धुमरणात्करुणा पाखण्डाक्षेपाद्वीरः कथमित्यद्भुतमिति नाना रसाः ।

---

२०१. विवसितः for व्यवसितः K1.

अपि च । रे पाप ।

२०९ प्रणयिसखीसलीलपरिहासरसाधिगतै-
र्ललितशिरीषपुष्पहननैरपि ताम्यति यत् ।
वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः
पततु शिरस्यकाण्डयमदण्ड इवैष भुजः ॥

अघोर० । दुरात्मन् प्रहर प्रहर । नन्वयं न भवसि ।

२१० माल० । पसीद णाह साहसिअ । दारुणो क्खु अअं हदासो ।

---

२०४–२१२. पुनरपि दोषमुद्भाव्य दण्डं चिकीर्षुराह । प्रणयीत्यादि । हे पाप तव शिरस्येष भुज आकस्मिकयमदण्ड इव पततु । आकस्मिकत्वेनाप्रतिक्रियत्वमुक्तम् । कीदृशस्य । तत्र वपुषि वधाय शस्त्रमुत्तोलयतः । अत्र भुजपदेन बाहुव्यापारमात्रेणैव हन्तव्योसीति शौर्यातिशय उक्तः। यद्वपुः सुकुमारशिरीषपुष्पाघातैरपि ताम्यति खिद्यति । कीदृशैः। सप्रश्रयसखीसविलासपरिहासरसप्राप्तैः। अत्रापि शृङ्गारवीरकारुण्यसंभेदः । [ माल० वा० ] अत्र त्वज्जीवने मम जीवनमपि सफलम् । अन्यथा तु मरणमेव वरमिति भावः । मालतीव कपालकुण्डलापि स्वनाथमाह । भगवन्निति । अवष्टम्भार्थमप्रमत्त इति ।

---

२०४. A. N. repeat रे.

२०५. प्रणय for प्रणयि C. K1. K2.N. O.; सलेल for सलील K1.; °साब्धिगतैः for °साधिगतैः C.

२०९. आं before दुरा° A.; A. C. D. om. one प्रहर; दुरात्मन् before ननु K2.; B. om. ननु; एष for अयं B.

२१०. प्पसीय for पसीद O.; साहसिअ णाह पसीअ Bh. साहसिअ णाह पसीद K1. K2. साहसिय णाह O. for णाह साहसिअ ; णाम. after °सिअ A.; खु for क्खु K1. K2. O.; एसो for अअं N.; B. om. अअं; N. om. हदासो; हतासो for हदासो K2.

परित्तासु मं णिअत्तीअदु इमादो अणत्थसंसआदो । (क)

कपा० । भगवन् अप्रमत्तो भूत्वा दुरात्मानं व्यापादय ।

माधवाघोरघण्टौ मालतीकपालकुण्डले प्रति । अयि भीरु

धैर्यं निधेहि हृदये हत एष पापः
किं वा कदाचिदपि केनचिदन्वभावि ।
सारङ्गसंगरविधाविभकुम्भकूट-
कुट्टाकपाणिकुलिशस्य हरेः प्रमादः ॥ २१९

(क) प्रसीद नाथ साहसिक । दारुणः खल्वयं हताशः । *परित्रायस्व मां निवर्त्यतामस्मादनर्थसंशयात् ।

२१३-२१७, द्वयोर्भयं ज्ञात्वोभावाहतुः। धैर्यमित्यादि । हे भीरु त्वं हृदये धैर्यं कुरु । एष पापो हतः । अस्य वधे कुतः संशय इति वृथा भयं त इति भावः । अत्र युक्तिमाह । सारङ्गेण मृगेण सह युद्धविधाने हरेः सिंहस्य प्रमादोनवधानता किं वा केनचित्कदाप्यनुभूतः। कीदृशस्य । इभकुम्भरूपं यत्कूटमुच्चप्रदेशस्तत्कुट्टनशीलं हस्त एव वज्रं यस्य। यद्वा । हरेरिन्द्रस्य हस्तिना सह युद्धे नास्ति प्रमादः । कीदृशस्य । हस्तिकुम्भवत्पीवरशृङ्गकुट्टाकं पाणिस्थकुलिशं यस्य ॥ कुम्भकूटपाणिकुलिशपदे शाकपार्थिवादिः ॥ सारङ्गः पुंसि हरिणे चातके च मतङ्गज इति मेदिनीकरः ॥ वीरो रस इह ।

२११. ता before परि° Bh. D. K1. K2.; A. om. परित्तासु मं; °त्ताअह Bh. K1. °त्ताअदु D. ताअह K2. त्ताअ N. त्ताय O. for °त्तासु; A.B.D. have पडि before णिअ°; नि for णि K1. K2.; उत्तीअदु B. व्वत्तअिदु Bh. वत्तीअदु K1. K2. वत्तअदु N. यत्तीयदु O. for अत्तीअदु ; अत्थ for अणत्थ K1. K2.

२१२. कापालिका K1. कपालिका K2. for कपा०; विक्रमस्व for दुरा-°दय B.; °दयस्व for °दय N.

२१३. °घण्टकौ for घण्टौ O. साटोपौ before मालती O.

२१४. निधाय for निधेहि C.; एव for एष K2.

२१६. सूदन for संगर Bh. K1. K2.

* Com. om. परि-मां and has तत्प्रतिनिवर्ततान्.

नेपथ्ये कलकलः । सर्वे आकर्णयन्ति ।

पुनर्नेपथ्ये । भो भो मालत्यन्वेषिणः सैनिकाः इयममात्य-
२२० भूरिवसुमाश्वासयन्त्यप्रतिहतप्रज्ञागतिर्भगवती कामन्दकी वः समादिशति । पर्यवष्टभ्यतामेतत्करालायतनम् ।

नाघोरघण्टादन्यस्य कर्मैतद्दारुणाद्भुतम् ।
न करालोपहाराच्च फलमन्यद्विभाव्यते ॥

---

२१९–२२८. मालतीगृहकथाकथनायाह । भो भो इति । अप्रतिहतेति सत्यवचनेत्यर्थः । एतेनाघोरघण्टकृतो मालत्यपहार इति कामन्दकीवचनं सत्यम् । मालतीमाधवयोश्च विवाहः सत्य इति षष्ठाङ्कावतार इति सूचितम् । पर्यवष्टम्भनं सर्वतो वेष्टनम् । नेत्यादि । एतत्कर्म मालत्यपहरणात्मकं भीषणं सिंहकौशलहरणात् । अद्भुतं बहुरक्षकरक्षिताया अपि हरणात् । स्त्रीत्वाद्भयेन पलायनेच्छुराह । भगवन्निति । संग्रामादपसरणस्याधर्महेतुतया सात्त्विकतया

---

२१८. सर्वा K1. सर्वाः K2. for सर्वे; समाकर्ण° for आकर्ण० B.

२१९. B. N. om. पुनर्नेपथ्ये; K1. om. one भो अन्वेषणतत्पराः B. अन्वेषणपराः Bh. K1. K2. समन्वेषणपराः O. for अन्वेषिणः; N. om. सैनिकाः; पुरुषाः for सैनिकाः Bh. K1. K2. O.; K2. om. इयम्.

२२०. वसुभूतिमा° for भूरिवसुमा° K1.; प्रति° for अप्रति° K1.; अप्रत्यक्षा for अप्रति-गतिः Bh.; प्रतिज्ञा for प्रज्ञागतिः A. B. K1. K2.; N. O. om. प्रज्ञा; B. om. भगवती; N. om. वः.

२२१. समाज्ञापयति for समादिशति D.; Bh. repeats पर्यवष्टभ्यतां; इदं for एतत् O.; Bh. adds द्रुतं aftre °यतनं; A. B. Bh. C. K1. K2. add द्रुतम् after °यतनं and make this line the first half of a s'loka. A. Bh. K1. K2, have thus a s'loka and a half, while the second half in B. C. is न करालो°-°भाव्यते and for नाघोर—द्भुतम् they have कपालकुण्डलाप्रणयिनो नाघोरघंटादन्यतश्चैतत्कर्म भीषणाद्भुतम् which in C. occurs between and in B. after the two halves.

२२२. °दन्यस्मात् for °दन्यस्य N.; भीषणाद्भुतं A. B. C. D. दारुणात्मकं O. for दारुणाद्भुतं.

कपा० । भगवन् पर्यवष्टब्धाः स्मः ।

अघोर० । संप्रति विशेषतः पौरुषस्यावसरः । २२९

माल० । हा ताद हा भअवदि ( क )

माध० । भवतु बान्धवसमाजसुस्थितां मालतीं विधाय तत्समक्षमेनं व्यापादयामि । मालतीमन्यतः प्रेरयन्परिक्रामति ।

माधवाघोरघण्टौ । अन्योन्यमुद्दिश्य । आः पाप २३०

कठोरास्थिग्रन्थिव्यतिकररणत्कारमुखरः
खरस्नायुच्छेदक्षणविहितवेगव्युपरमः ।

---

( क ) हा तात हा भगवति ।

---

त्याह । संप्रतीति । पौरुषं पुरुषस्य व्यापारस्तेजो वा ॥ पौरुषं पुरुषस्योक्तं भावे कर्मणि तेजसीति विश्वः ॥ मालती तत्रावेगातिशयादाह । हा तात हा भगवति इति । मालतीरक्षार्थं कापालिको मया हत इत्यमात्यो जानात्वित्याशयेन मालतीं च कातरां वीक्ष्याह भवत्विति । बान्धवेत्यादिना भाविकार्योपयोग उक्तः । अन्यतः कापालिकादन्यदेशं स्वसंमुखमिति यावत् ।

२३०-२३४ द्वावप्येकश्लोकेन प्रहारव्यापारमाहतुः । कठोरेत्यादि । हे पाप ममासिः खड्गस्तव प्रत्यङ्गं लवशः खण्डं खण्डं

---

२२४. B. C. D. K2. have भो before भगवन्.

२२५. हि after संप्रति O.

२२७. N. om. समाज; B. om. सु; संस्थां for सुस्थितां N.; एनां for मालतीं N.; ततः before तत् D.

२२८. एव before एनं Bh. K1. K2.; दुरात्मानं after एनं A. Bh. D. K1. K2.; A. C. D. add कापालिकं चान्यतः °लिकामन्यतः K1. °लिकमन्यतः K2. °लिकं च B. after अन्यतः.

२३०. °घण्टकौ for °घण्टौ O.; रेरे for आः N.

२३१. झणात्कार for रणत्कार N.; मुखरा for मुखरः B.

२३२. खेद for वेग B.; °शमः for रमः A. B. C. D.

निरातङ्कः पङ्केष्विव पिशितपिण्डेषु विलस-
न्नसिर्गात्रं गात्रं सपदि लवशस्ते विकिरतु ॥

२३५ इति निष्क्रान्ताः सर्वे ।

श्मशानवर्णनं नाम पञ्चमोऽङ्कः ।

---

सपदीदानीमेव विक्षिपतु । कर्दमेष्विव मांसपिण्डेषु निरातङ्को यथा-रुचि विचरन्सन् । कीदृशः । कठिनास्थिग्रन्थिघटनेन यो रणत्का-रोऽव्यक्तध्वनिस्तेन मुखरः सशब्दः कठिनस्नायुच्छेदेषु मुहूर्तं कृतवे-गोपरमश्च ।

कतीह पञ्चमाङ्कके स्फुरन्ति नोद्भटा रसाः।
मदीयबुद्धिरल्पिका क्व वेद तानशेषतः ॥
प्रासोष्ट यं रत्नधरेतिभव्येतिभव्यरूपा दमयन्तिकापि ।
जगद्धरं तत्कृतटिप्पणेऽङ्कोगमन्मनोहारिणि पञ्चमोऽयम् ॥

॥ पञ्चमोऽङ्कः ॥

---

२३३. °तङ्क for तङ्कः N.; खण्डेषु for पिण्डेषु N.; विसरन् Bh. K2. प्र (also वि) सरन् K1. निपतन् O. for विलसन्.

२३५. D. om. सर्वे.

२३६. श्रीमालतीमाधवे before श्मशान° K2.; A. B. N. O. om. श्म°-नाम; श्मशानं for श्मशानवर्णनं Bh. K1.; मालतीमाधवे before पञ्च° A.; संपूर्णः after अङ्कः D.

## ॥ षष्ठोऽङ्कः ॥

ततः प्रविशति कपालकुण्डला ।

कपा० । आः दुरात्मन् मालतीनिमित्तं व्यापादितास्मद्गुरो माधवहतक अहं त्वया तस्मिन्नवसरे निर्दयं निघ्नत्यपि स्त्रीत्यवज्ञाता । सक्रोधम् । तदवश्यमनुभविष्यसि कपालकुण्डलाकोपस्य विजृम्भितम् । ५

१—७. संप्रति पूर्वाङ्कवृत्तगुरुवधवर्तमानाङ्कभाविमालतीविवाहभविष्यदङ्कमालतीहरणान्याह । तत इत्यादि । आः पीडायां कोपे च ॥ आस्तु स्यात्कोपपीडयोरित्यमरः ॥ स्त्रीनिमित्तं कापालिकवधेन पापेति। इहानुभविष्यसीत्यनेन क्रमरूपो गर्भसंधिरुक्तः । यदाह ।

भाविनोऽर्थस्य यज्ज्ञानं क्रमः स परिकीर्तितः ॥

दुरात्मन् कामोपहतात्मन् । विजृम्भितं मालत्यपहरणेनेति भावः । तदेवाह । शान्तिरित्यादि । तस्य भुजंगशत्रोः सर्पहिंसकस्य गरुडस्य वा कुतः शान्तिर्निर्वृतिरुपशमो वा । अपि तु नैव । यस्मिन्नत्यक्तकोपा तिग्मदन्ताग्रा विषोद्गारेण दुःसहा सर्पी सदैव दंशाय जागर्ति । एव-

---

१. प्रविश्य for ततः प्रविशति N.

२. पाप for आः D.; N. om. माल-त्तं; निमित्त for निमित्तं Bh. K1. K2. O.; निपातिता° C. विनिपातिता° D. N. O. for व्यापादिता°.

३. अहं after अवसरे instead of after हतक O.; च after अहं B; त्वया before स्त्री instead of before तस्मिन् K1.; निघ्नता for निघ्नती C. K1. K2.; N. om. अपि.

४. B. om. सक्रोधम्; फलर्द्धि after अवश्यम् D.; D. om. कोपस्य.

५. कोप for कोपस्य Bh.; °म्भितां D. °म्भितस्य फलम् N. for म्भितम्.

शान्तिः कुतस्तस्य भुजंगशत्रोर्यस्मिन्नमुक्तानुशया सदैव ।
जागर्ति दंशाय निशातदंष्ट्राकोटिर्विषोद्गारगुरुर्भुजंगी ॥
नेपथ्ये । हे राजानश्चरमवयसामाज्ञया संचरध्वं
कर्तव्येषु श्रवणसुभगं भूमिदेवाः पठन्तु ।
१० चित्रं नानावचननिवहैश्चेष्टयतां मङ्गलेभ्यः
प्रत्यासन्नस्त्वरयतितरां जन्ययात्राप्रवेशः ॥

कारेण मुहूर्तमात्रमपि न स्वस्थेत्याशयः । अनुशयो गाढरोषः । गरुड-पक्षे तादृशी दंशार्थं जागर्ति । तस्यातिबलत्वान्न तत्करोतीति युक्तमेव ।

८–११. अधुना विवाहमङ्गलकृत्यं दर्शयति । हे राजान इत्यादि । जन्या वरस्य स्निग्धास्तेषां यात्राया: प्रवेशो वधूगृहप्राप्तिः प्रत्यासन्नः समीपवर्त्यत एवात्यर्थं त्वरयति । ततो भो राजानः क्षत्रियाः विवाहकृत्येषु चरमवयसां वृद्धानामाज्ञया संचरध्वं प्रवर्तध्वम् । विवाहारम्भे वृद्धोपदिष्टमेव कर्मकारैः कर्म क्रियते । इह तु प्रभुतातिशयान्नृपा एव कर्मकारा इति दर्शितम् । भूमिदेवा ब्राह्मणाः कर्णमनोहरं यथा तथा पठन्तु । वैवाहिकमङ्गलवेदानित्यर्थात् । यद्वा । यद्वेदस्वरूपं श्रवणसुभगं मङ्गलत्वात्तत्पठन्त्वित्यर्थः । पुरन्ध्रीर्लक्ष्यीकृत्याह । नानारचनानां मङ्गलादीनां समूहैः करणैश्चित्रमद्भुतं यथा तथा चेष्टयताम् ॥ भावे तङ् ॥ यद्वा । चित्रं नाना कर्म । केचिन्मङ्गलगीतं केचिद्वाद्यं केचिन्नृत्यं कुर्वन्त्वित्यर्थः । मङ्गलेभ्यो मङ्गलं कर्तुम् ॥ क्रियार्थोपपदस्येति चतुर्थी । तादर्थ्ये वा । संचरध्वमिति समस्तृतीयायुक्तादिति तङ् ॥ व-

• ६. यदैव B. भुजंगी Bh. for सदैव.

७. वक्रोद्यतघोर for दंशाय निशात O.; निजो° for विषो° K1.

८. भो for हे A. B. C. D.

१०. Lacuna for नानावचन in Bh.; रचन for वचन A. D. K2.; विहितैः B. विभवः O. for निवहैः; चेष्टतां for चेष्टयतां B. Bh. C. K1. K2. O.

यावत्संबन्धिनो न परापतन्ति तावद्वत्सया मालत्या नगरदेवतागृहमविघ्नमङ्गलाय गन्तव्यमित्यादिशन्ति भगवतीनिदेशवर्तिनोमात्यदाराः । अन्यच्च यथा गृहीतसविशेषमण्डनः प्रतीक्ष्यतामानुयात्रिको जनः । १५

कपा० । भवत्विति मालतीविवाहकर्मसत्वरप्रतीहारशतसंकुलात्प्रदेशादपक्रम्य माधवापकारं प्रत्यभिनिविष्टा भवामि । इति निष्क्रान्ता । विष्कम्भकः ।

---

रस्निग्धेपि जन्यः स्यादिति मेदिनीकरः ॥ एतेन चोरिकाविवाहमङ्गलमपि ध्वनिनोक्तम् ।

१२-१८. संबन्धिनो वरस्य भ्रात्रादयः । पित्रादीनां नन्दने वृद्धेसंभवादिति । परापतन्त्यायान्ति । आविघ्नेति माधवविवाहायेति भावः । नन्दनविवाहस्य विघ्नवत्त्वात् । निदेश आज्ञा । अमात्यो भूरिवसुः । दाराः स्त्रियः । अनुयात्रानुगमनं तत्र नियुक्त आनुयात्रिको मालत्यनुगामी । कामन्दकीनामश्रवणभीता निष्क्रमणार्थमाह । भवत्विति । परिकर्मेतिकर्तव्यता । अपक्रम्येति । [अ]मङ्गलवेशतयान्येनापि संभावितनिःसारणा यत इति भावः । माधवापकारमित्यनेनाष्टमाङ्कं सूचयन्ती विघ्नमुद्द्योतयति । अभिनिविष्टा बद्धकक्षा ।

---

१२. च after यावत् Bh. C. K2. N. O.; आयांति for परापतन्ति Bh. K1., वत्सा्या for वत्सया D. O.; सह after मालत्या A. B. K1. K2.

१३. प्रवेष्टव्यम् for गन्तव्यम् K2.; आदिशति भगवती कामन्दकी N. आदिशति; भगवती O. for आदिश०-दाराः; नो after °शन्ति C.; Bh. om. भगवतीनिदेशवर्ति°.

१४. A. Bh. D. K1. K2. om. अन्यच्च; तत् Bh. K1. K2. तथा C. तदा D. for यथा; N. O. om. यथा; संगृहीत for गृहीत Bh. K1.; विशेष for सविशेष B. C. D.; प्रतीक्षतां A. N.O. प्रतिष्ठतां Bh. for प्रतीक्ष्यताम्.

१५. अनु for आनु° Bh. K2.; इति after जनः K1. K2. O.

१६. N. om. भवतु; O. om. इतो; N. om. मालती; परिकर्म for कर्म A. K2. N.; D. om. कर्म; D. O. om. शत; व्याकुलं for संकुलात् O.

१७. अस्मात् after संकुलात् A. D.; देशमुत्सृज्य for प्रदेशादपक्रम्य O.; अहमपि before माधवा° O.; कार for कारं Bh.; N. om. इति.

१८. शुद्ध before विष्क° N.; विष्कंभः for विष्कम्भकः N.

ततः प्रविशति कलहंसकः ।

२० कल० । आणत्तोम्हि णअरदेवदागब्भघरट्ठिदेण समअरन्देण णाहमाहवेण जहा जाणाहि दाव जत्ताहिमुहं पउत्ता मालदी ण वेत्ति । ता जाव णं आणन्दइस्सं । [ क ]

ततः प्रविशतो माधवमकरन्दौ ।

माध० । मालत्याः प्रथमावलोकदिवसादारभ्य विस्तारिणो
२५ भूयःस्नेहविचेष्टितैर्मृगदृशो नीतस्य कोटिं पराम् ।

( क ) आज्ञप्तोऽस्मि नगरदेवतागर्भगृहस्थितेन समकरन्देन नाथमाधवेन यथा जानीहि तावद्यात्राभिमुखं प्रवृत्ता मालती न वेत्ति । तद्यावदेनमानन्दयिष्यामि ।

१९-२७. हे राजान इत्यादौ श्लेषेण चोरिकाविवाहस्याप्यभिधानाज्जन्यपदेन माधवपरिजनतया कलहंसस्यापि वचनात्तत्प्रवेशमाह । प्रविश्येति । गर्भगृहवर्तित्वेन माधवस्य गुप्तत्वम् । राजविरुद्धचोरिकाविवाहस्य दुष्करतया कामन्दकीप्रतिज्ञासत्यत्वेन च संदेहवानाह । मालत्या इत्यादि । ममास्य विप्रलम्भजक्लेशस्य सर्वथोभयप्रकारेण निश्चितमद्यान्तः समाप्तिः । कीदृशस्य । मृगदृशो मालत्याः प्रचुरप्रेम्णा यानि विचेष्टितानि तैः परां कोटिं प्रकर्षकाष्ठां प्रापितस्य । आद्यद-

१९. प्रविश्य for ततः प्रविशति N. O.; °हंसः for °हंसकः N.

२०. O. om. कल° । आणत्तम्हि D. N. आण्णत्तोम्हि K2. for आणत्तोम्हि; O. om. णअर; देवता for देवदा K2.; O. om. गब्भ; गब्व for गब्भ K1.; हर for घर C.; त्थिदेण A. K2. ट्ठिद B. C. ट्ठिअ Bh. त्थिअ K1. वट्टिणा N. ट्ठिय O. for ट्ठिदेण; माहवसआसवट्टिणा मअरन्देण B. Bh. ( with त्ति for ट्टि ) C. माहवपासवत्तिणा मअरन्देण K1. माहवसयासवत्तिणा मयरंदेण O. for समअ-°वेण; णाहेण for णाहमाहवेण N.

२१. N. om. जहा; जधा for जहा B. O.; जणीहि K2. जाणेहि O. for जाणाहि; N. om. दाव; जत्तामुहं A. K1. एत्तोभिमुहं K2. एत्तोमुहं N. इदोमुहं O. for जत्ताहिमुहं; मालती for मालदी Bh.; न for ण O.

२२. वेत्ति for वेत्ति Bh.; N. om. ता; तज्जाव for ता जाव O. Bh. K1. om. णं; णंदइस्सं Bh. णन्दइस्सं K1. णन्दयिस्सं K2. आणंदयिस्सं O. for आणन्दइस्सं.

२४. °लोकनदिना° for °लोकादिवसा° A. Bh. K1. K2.; विस्तारितैः A. विस्तारिभिः O. for विस्तारिणो.

२५. °दृशा for °दृशो O.

अश्रान्तः खलु सर्वथास्य मदनायासप्रबन्धस्य मे
कल्याणं विदधातु वा भगवतीनीतिर्विपर्येतु वा ॥

मक० । वयस्य कथं भगवत्याः सुमेधसो नीतिर्विपर्येष्यति ।

कल० । उपसृत्य । णाह दिट्ठिआ वड्ढसि पउत्ता क्खु एत्तो मुहं मालदित्ति । ( क ) ३०

माध० । अपि नाम सत्यम् ।

( क ) नाथ दिष्ट्या वर्धसे प्रवृत्ता खल्वितोमुखं मालतीति ।

शंनदिनादारभ्य विस्तारं गतः । तत्र प्रथमे बकुलवीथिचेष्टाभि-र्द्वितीये माधवचित्रावलोकनादिना तृतीये स्त्रग्भोपभोगवर्णनादिना चतुर्थे मोहनाशककरस्पर्शादिना पञ्चमे भयकम्पिताङ्गालिङ्गनादिना विस्तार इति भावः । पर्यवसानमाह । भगवतीनीतिः कामन्द-कीनिसृष्टार्थदूतीकल्पः कल्याणं शुभं मालतीविवाहलक्षणं वा करोतु विपर्येतु विफला वा भवतु । तथा च विवाहे सति शृङ्गारसंभोग-लाभेन कामायासशान्तिः । विपर्यये मरणादिति भावः ।

२८–३१. सुमेधसः सुबुद्धेः । विपर्येष्यति विपर्ययमेष्यति । [ कल० वा० ] अत्र यात्रा गमनम् । तस्य मुखमारम्भम् तद्वा-क्यस्याश्वासपरत्वं तर्कयन्नाह । अपीति । अपि नामेति संभावना-याम् । अस्माकमित्यादि । वातविस्तारिमेघसमूहशब्दिततुल्यो ग-

२६. °यासस्य मे सर्वतः for यास—मे O.

२७. °धातु मे for °धातु वा B. K1.

२८. Bh. om. मक०—सत्यम् ( l. 31 ); हि after कथं A. B. K1. K2. O.; सुमेधायाः for सुमेधसो N.; शक्तिः for नीतिः N.

२९. णाध for णाह O.; माहव for णाह K1.; माहव after णाह A.; दिट्ठिया for दिट्ठिआ K1. O.; वड्ढसि for वड्ढासि K2. प्पउत्ता for पउत्ता O.; हि C. K1. खु K2. O. for क्खु; जत्तामुहं A. एत्तोहिमुहं B. C. जत्ताहिमुहं Bh. D. एत्तोभिमुहं K2. for जत्ताहिमुहं.

३०. N. om. त्ति.

३१. N. O. om. नाम; एतत् after सत्यम् N.

मक० । सखे किमश्रद्दधानः पृच्छसि । न केवलं प्रवृत्ता प्रत्यासन्ना च वर्तते । तथा हि ।

अस्माकमेकपद एव मरुद्विकीर्ण-
३९ जीमूतजालरसितानुकृतिर्निनादः ।
गम्भीरमङ्गलमृदङ्गसहस्रजन्मा
शब्दान्तरग्रहणशक्तिमपाकरोति ॥

तदेहि जालमार्गेण पश्यामः । तथा कुर्वन्ति ।

कल० । णाह पेक्ख पेक्ख । इमे दाव उप्पडिअराअहंसविब्भ-
४० माहिरामचामरसमीरणोव्वेल्लकदलिआवलीतरंगिदुत्ताणगअण-

म्भीरमङ्गलार्थमुरजसहस्रजन्मा शब्द एकपद एकस्मिन्क्षणेऽस्माकं शब्दान्तरग्रहणसामर्थ्यं निराकरोति । वाद्यरवेणान्यशब्दो न श्रूयत इत्यर्थः । सहस्रग्रहणमनेकोपलक्षणम् । सहस्रपत्त्रवत् ।

३९–४७. माधवोत्साहार्थमाह नाथेति । अत्र उत्पतित उड्डीनः । विभ्रमो विलासो विशिष्टभ्रमणं वा । अभिरामस्तुल्यः । उद्वेल्लन्कम्पमानः । कदलिका पताका । तरंगितं तरंगयुक्तम् । उत्तानमग-

३२. B. om. सखे; इव A. Bh. K1. K2. एव O. after °द्दधानः; निर्गता for प्रवृत्ता C.
३३. अपि for च D.
३४. °पदमेव for °पद एव A. K1. K2.; एवमनुद्वि° for एव मरुद्वि° Bh.; विदीर्णे for विकीर्ण C.
३५. निनदा° for रसिता° D.
३७. श्रवण for ग्रहण N.
३८. पश्याव· C.K1.O. प्रविश्याव: K2. for पश्यामः; हि K1. कुरुतः O. for कुर्वन्ति.
३९. णाध for णाह O.; पेक्खस्स for पेक्ख पेक्ख A.; इदो for इमे K1. K2.; अ after इमे A.; उप्फ° for उप्प° Bh.; °डिद for °डिअ Bh. D. O.; रासमंडली C. राजहंस O. for राअहंस.
४०. °भिराम for °हिराम B. Bh. C. K1. K2. N. O.; °णोव्वे Bh. °णोव्वेल K1. °णोव्विल K2. °णुव्वेल्लिअ N. °णुव्वेल्ल O. for °णोव्वेल; कअलीआ° B. C. कअलिआ° N. for कदलिआ°; °दुत्ताल A. उत्ताण D. N. for °दुत्ताण; गण for गअणङ्गण D.

ङ्गणसरोवरणिरन्तरुद्दण्डपुण्डरीअविब्भमं वहन्तो धवलादवत्त-
णिवहा दीसन्ति । इमाओ सविलासकवलिदतम्बूलवीडिआ-
पूरिदकवोलमण्डलाभोअव्वइअरक्खलिदमहुरमङ्गलुग्गीअबद्ध-
कोलाहलेहिं विविहरअणालंकारकिरणावलीविडम्बिदमाहिन्द-
चावखण्डविच्छेदविच्छुरिदणहत्थलेहिं वारसुन्दरीकदम्बेहिं अ- ४५

( क ) नाथ प्रेक्षस्व प्रेक्षस्व* । इमे तावदुत्पतितराजहंसविभ्रमाभि-
रामचामरसमीरणोद्वेल्लकदलिकावलीतरंगितोत्तानगगनाङ्गनसरोवर-
निरन्तरोद्दण्डपुण्डरीकविभ्रमं वहन्तो धवलातपत्रनिवहा दृश्यन्ते ।

भीरम् । गमनमेव सरः । उद्दण्डमुन्नतदण्डम् । आतपत्रं छत्रम् ।
मङ्गलातपत्रमिति पाठे विवाहे शुक्लच्छत्रस्य प्रशस्ततया मङ्गलपदेन
श्वेतत्वमुक्तम् । एताः करिण्यश्च दृश्यन्त इत्यन्वयः । चकारोत्रा-
ध्याहर्तव्यः । चर्वितं भक्षितम् । व्यतिकरः संघट्टः । स्खलितं भङ्गि-
मत् । मङ्गलोद्गीतं मङ्गलरूपमुच्चैर्गानम् । विडम्बितं सदृशीकृतम् ।

४१. सरोअर A. सरो Bh. N. O. for सरोवर; णिरंत° for णिरन्त° Bh. K2. O. वहन्तो B. D. उव्वहन्तो K2. वहंति O. for वहन्तो; मंगल before धव° N.; मंगला. for धवला° O.; °लातपत्त C. °लातवत्त N. for °लादवत्त.

४२. °संदि for सन्ति D.; एदा अ for इमाओ A.; Bh. C. K1. K2. N. O. om. इमाओ; दलिद Bh. K2. चव्विद D. दलिअ K1. कवलिअन्ती N. for कवलिद तम्बोल A. B. Bh. C. O. तंबोल K1. for तम्बूल; वीडिआ A. C. K1. वेडिआ B. आपीड O. for वीडिआ; N. om. वीडिआ.

४३. पूरिअ for पूरिद A. N.; कपोल for कवोल K2.; भोग for भोअ N.; D. om. व्वइअर; वइअर Bh. K2. वइअरु K1. वयिअर O. for व्वइअर; क्खलिअ for क्खलिद N.; मधुर K1. मुहु K2. for महुर; °ग्गीद for °ग्गीअ A. Bh. K1. K2. O.; N. om. बद्ध; बद्ध for बद्ध Bh.

४४. °काल for °कार O.; ° डम्बिअ for °डम्बिद C. D. N.

४५. चाब for चाव K2.; षंड for खण्ड Bh.; C. D. om. खण्ड; विच्छेअ A. K1. K2. विच्छेअ Bh. for विच्छेद; विछु° for विच्छु° Bh.; °रिअ for °रिद A. K1.; णहले-हेहिं B. णगगणेहिं C. णहथलेहिं K1. णहअणेहिं K2. for णहत्थलेहिं; °म्बएहिं K1. K2. °म्बकेहिं O. for °म्बेहिं.

* पश्य पश्य Com.

ज्झासिआ ओक्कणन्तकणअकिङ्किणीजालझणझणझंकारिणीओ करिणीओ । ( क ) माधवमकरन्दौ सकौतुकं पश्यतः ।

मक० । स्पृहणीयाः खल्वमात्यभूरिवसोर्विभूतयः । तथा हि ।

प्रेङ्खद्भूरिमयूखमेचकचयैरुन्मेषिचाषच्छद-
५० च्छायासंवलितैर्विवर्तिभिरिव प्रान्तेषु पर्यावृताः ।
व्यक्ताखण्डलकार्मुका इव भवन्त्युच्चित्रचीनांशुक-
प्रस्तारस्थगिता इवोन्मुखमणिज्योतिर्वितानैर्दिशः ॥

इमाः*सविलासकवलित†ताम्बूलवीटिकापूरित‡कपोलमण्डलाभोगव्यतिकरस्खलितमधुरमङ्गलोद्गीतबद्धकोलाहलैर्विविधरत्नालंकाराकिरणावलीविडम्बितमहेन्द्रचापखण्ड§ विच्छेदविच्छुरितनभःस्थलैर्वारसुन्दरीकदम्बैरध्यासिता¶ उत्कणत्कनककिङ्किणीजालझणझणझंकारिण्यः करिण्यः ।

विच्छेदः खण्डः । विच्छुरितं व्याप्तम् । झणझणारूपो झंकारशब्दः ।

४९-५२. प्रेङ्खदित्यादि । तरणिकिरणसंपर्कादूर्ध्वमुखैर्मणिदीप्तिसंघैर्विवर्तिभिरितस्ततो गतैः प्रान्तेषु निकटेषु पर्यावृता व्याप्ता इव दिशो व्यक्तेन्द्रचापा इव भवन्ति । कीदृशैः । प्रेङ्खन्त इतस्ततश्चलन्तो भूरीणां सुवर्णानां मयूखाः किरणा यत्र तादृशो मेचकः स्निग्धश्चयो येषु तैः । मयूरमेचकनिभैरिति पाठे प्रेङ्खन्तृत्यन्यो बहुमयूरस्तस्य मेचकाच्चन्द्रकाच्चिरतिशया भा येषां तैः ॥ मेचकश्चन्द्रके स्निग्धे श्यामलेऽपि च दृश्यत इति विश्वः । भूरि क्लीबं सुवर्णे च प्राज्ये स्याद्धा-

४६. असिदा Bh. अज्झासिआ K1. अज्जासिदा K2. अज्झासिदा N. O. for अज्झासिआ; कणन्त A. K1. N. ओकणंत Bh. K2. for ओक्कणन्त; किकणी for किङ्किणी O.; N. om. जाल; रणिद after जाल O.; झलझणा Bh. झणझणा D. N. for झणझण; झणझणाओ for झणझणझंकारिणीओ K1. K2.; इझंकारि° for झंकारि C.

४७. तौ for मा—न्दौ O.; °तुकौ for °तुकं O.

४८. सस्पृहं after मक०। D.; रमणीयाः for स्पृहणीयाः A. Bh. D. K1. K2.

४९. मयूर A. N. मयूष Bh. for मयूख; निभैः for चयैः K2. N.; चाप for चाष A.

* एताश्च Com. † चर्वित for कवलित Com. ‡ तंबूलावलिपूरित Com.
§ Com. om. खण्ड ¶ कणत्कनक Com.

कल०। कधं ससंभमाणेक्कपडिहारमण्डलावज्जिदुज्जलकण-अकलहौअवत्तविचित्तवेत्तलदापरिक्खित्तरेहारइदमण्डलो दूरदो जेव्व संट्ठिदो परिअणो । एसा अ बहलसिन्दूरणिअरसंझ्झा- ५५ राओवरत्तमुहघोलन्तकन्तणक्खत्तमालाभरणधारिणि करेणुर-

(क) कथं ससंभ्रमानेकप्रतिहारमण्डलावर्जितोज्ज्वलकनककलधौत-पत्त्र*विचित्रवेत्रलतापरिक्षिप्तरेखारचितमण्डलो दूरत एव संस्थितः

च्यलिङ्गक इति मेदिनीकरः ॥ उन्मेष्युद्गीतो यश्चाषः पक्षिभेदस्तस्य च्छदच्छायया पक्षकान्त्या संवलितैरिव मिलितैः । कीदृश्यः । उद्गतचित्रस्य चीनदेशभववस्त्रस्य प्रस्तारेण शय्यया प्रसारेण वाच्छन्ना इव ॥ प्रस्तारस्तानितं शय्येति हारावली ॥ मणय इहाभरणस्थरत्नानि ।

५३–५९. अत्रावर्जिता तिर्यक्त्यक्ता । कनकं हिरण्यम् । कलधौतं रजतम् ॥ कलधौतं हेमरौप्ययोरिति विश्वः ॥ पङ्केन लेपेन । वेत्रलता वेत्रदण्डिका । परिक्षिप्ता रचिता । मण्डल इति । अस्मान्मण्डलात्केनापि न बहिर्गन्तव्यमिति भावः । दूरत एव मालत्या इत्यर्थात् । पृथुसिन्दूरपूर

५३. कहं for कधं K1. K2. N.; ससम° for ससंभ° K1; °णेअ for °णेक्क B. Bh. K1. K2. N.; मंगला° for मण्डला° O.; °दोज्जल Bh. K2. °दाज्जलं K1. °दुज्जलन्त N. for °दुज्जल; कणअ for कणअ Bh.; C. K2. O. om. कणअ.

५४. धौद B. धोअ Bh. O. धौअ K1. K2. N. for हौअ; पङ्क A. D. K1. K2. टंकवत्त Bh. पंक्कपत्त O. for वत्त; N. om. वत्त; Bh. om. विचित्तवेत्त; चित्त for विचित्त C. N. O.; लआ for लदा Bh., क्खद B. क्षिवत्त K1. for खित्त; इद Bh. रइअअ N. for रइद; K1. om. रइद; दूरादो for दूरदो. N.

५५. N. om. जेव्व; B. Bh. C. K1. have स after जेव्व; संथिदो Bh. संठिदो K1.for संट्ठिदो; O. om. अ; B. om. बहल; बहुल for बहल N.; णिकर for णिअर Bh.; संझा for संज्झा Bh. O.

५६. रागो° for राओ° K2.; °वरत्त Bh. D. K1. K2. N. °अरत्त O.for °वरत्त; चडुल after °रत्त A. D.; B. D. om. मुह; मुहं for मुह C.; व्वालंत for घोलन्त Bh.; कणन्त Bh. K1. कणअ C. for कन्त; O. om. कन्त; णक्खेत्त for णक्खत्त K1.; °हरण for °भरण B.; धार after °रण Bh., °रिणीं A. C. D. N. °रणि Bh. K1. K2. for °रिणि; रजणि for रअणि D.

* पङ्क for पत्त्र Com.

अणि अलंकरन्ती इदो जेव्व कोदूहलुम्मुहसमत्थलोअदीसन्त-
मणुहरा पण्डुरपरिक्खामदेहसोहा पढमचन्दलेहाविब्भमं वह-
न्ती किंचि अन्तरं पसरिदा मालदी । ( क )

---

परिजनः । एषा च बहलसिन्दूरनिकरसंध्यारागो*परक्तमुखघूर्ण-
त्कान्तनक्षत्रमालाभरणधारिणीं करेणुरजनीमलंकुर्वतीत एव कौतूह-
लोन्मुखसमस्तलोकदृश्यमानमनोहरा पाण्डुरपरिक्षामदेहशोभा प्रथ-
मचन्द्रलेखाविभ्रमं वहन्ती किंचिदन्तरं प्रसृता मालती ।

---

एव संध्यारागस्तेनोपरक्ता किंचिदारक्ता चटुला चपला घूर्णती लम्बमा-
ना या नक्षत्रमाला सप्तविंशतिमौक्तिकमाला हस्तिप्रसाधनभेदो वा सैवा-
भरणं तद्धारिणीम् । रात्रिपक्षे नक्षत्रमाला तारकामाला । करेणुर्हस्तिनी
सैव रात्रिस्ताम् । दृश्यमाना चासौ मनोहरा चेति समासः । पाण्डुरा
धूसरा परिक्षामातिकृशाङ्गदीप्तिर्यस्याः सा । एतेन चन्द्रकलासाम्यमु
क्तम् । दृश्यमानेत्यनेनान्येषां दर्शनमात्रं तव परमुपभोगो मालत्या इति
सूचितम् । पाण्डुरेत्यादिना मालत्यामान्तर उद्वेग उक्तः । किंचिदन्तरं
कियद्दूरम् । प्रसृतागता कलधौतटङ्कपत्रेति पाठे टङ्कपत्रं पत्रिकेत्यर्थः ।

---

५७. °रेन्ती Bh. °रोन्ति D. °न्दी K1. K2. for °रन्ती; हलोम्मुह Bh. K1. °हलो-
न्मुह K2. °हलुप्फुल्लमुह N. °हलुफुल्लमुह O. for हलुम्मुह; समच्छ A. समस्थ K1. स-
मत्त K2. N. समूह O. for समत्थ.

५८. मणहरा Bh. K1. N. O. मणोहरा K2. for मणुहरा; पाण्डुर A. Bh. K1.
K2. पंडु O. for पण्डुर; क्खम for क्खाम A.; देहा for सोहा Bh.; विभाविआणंगवेअ-
णा after सोहा N.; पुढम N. प्पढम O.; पढमुग्गअचन्द B. C.; अन्द for चन्द
A. C.

५९. हसंती for वहन्ती O.; किंचिद् Bh. K1. किं पि B. किं वि C. O., for किं चि;
दूरं for अन्तरं B.; परिसरिदा K2. पाविदा N. प्पसरिदा O. for पसरिदा; मालदित्ति
for मालदी Bh. K1. O.

* रागोपरक्तचटुलघूर्णत्. Com.

मक० । वयस्य पश्य पश्य ६०

इयमवयवैः पाण्डुक्षामैरलंकृतमण्डना
कलितकुसुमा बालेवान्तर्लता परिशोषिणी ।
वहति च वरारोहा रम्यां विवाहमहोत्सव-
श्रियमुदयिनीमुद्गाढां च व्यनक्ति मनोरुजम् ॥

कथं निषादिता गजवधूः । ६५

माध० । सानन्दम् । कथमवतीर्य भगवतीलवङ्गिकाभ्यां सम-
मितः प्रवृत्तैव ।

६१-६५. इयमित्यादि । इयं वरारोहा प्रशस्तश्रोणिका विवाह-
महोत्सवसंपत्तिं प्रकृष्टां रम्यां च वहति सहजरमणीयत्वात् । उद्गाढां
प्रबलां चित्तपीडां च प्रकाशयति । कीदृशी । पाण्डुक्षामैरङ्गैरलंकृतभू-
षणा । अतिरम्यतयामीभिरेव भूषणान्यलंक्रियन्त इति भावः । अन्तर-
भ्यन्तरे परिशोषिणी । अत एवाङ्गानां पाण्डुक्षामत्वम् । कलितं परि-
मितं कुसुमं यया सा । बाला षोडशवर्षवयस्का । अवयवैरित्यनेन
सर्वाङ्गीणं पाण्डुत्वाद्युक्तम् । लतेव । यथा लता नवा वसन्तादि-
प्रभावात्सपुष्पापि कुतश्चिद्वैकृतादन्तःपरिशोषं वहति तथेयमपीत्यर्थः ।
निषादिता उपवेशिता । अवतारणार्थमिदम् ।

६०. K1. K2. om. one पश्य.

६१. क्लान्तै° for क्षामै° B.; मण्डला for मण्डना D.

६२. °सुमा बालेवार्त्ता B. °सुमजातेवांतर् Bh. °सुमव्रातेवान्तर् O. for °सु-न्तर्.

६३. वदति for वहति K1.; रम्या for रम्यां B.

६४. उद्भूतां for उद्गाढां N.

६५. Bh. om. कथं-धूः

६६. Bh. om. सानन्दं; मालती before लव° B. C. K1. K2.; Bh. K1. om. समम्; सहिता for समम् B.

६७. एव after इतः instead of after प्रवृत्ता B. C.

ततः प्रविशति कामन्दकी मालती लवङ्गिका च ।

काम० । सहर्षमपवार्य ।

७० विधाता भद्रं नो वितरतु मनोज्ञाय विधये
विधेयासुर्देवाः परमरमणीयां परिणतिम् ।
कृतार्था भूयासं प्रियसुहृदपत्योपयमने
प्रयत्नः कृत्स्नोयं फलतु शिवतातिश्च भवतु ॥

६९-७५ सहर्षमित्यभीष्टसंपादनादिति भावः । विधातेत्यादि । नोऽस्माकं मनोज्ञाय हृदिस्थाय विधये व्यापाराय प्रकृतविवाहाय भद्रं कुशलमविघ्नं विधाता ददातु ॥ विधय इत्यत्र तादर्थ्ये चतुर्थी । क्रियार्थोपपदस्येति वा ॥ वृत्तेपि कार्ये राजविरोधादनिष्टमाशङ्क्याह । परमरमणीयामविरोधिनीं परिणतिमुत्तरविशुद्धिं देवाः कुर्वन्तु । स्वस्यापि फलमाह । अहं कृतकृत्या भूयासम् । यतो मालतीमाधवयोर्विवाहे समस्तोयं प्रयत्नः फलतु । उत्तरकालशुद्ध्या फलदायी भवत्वित्यर्थः । परिणतिशुद्ध्या शिवदायी भवतु । कल्याणकरोस्त्वित्यर्थः । शिवतातिश्च भवत्विति पाठे शिवतातिः शिवकरः ॥ सर्वदेवात्तातिलित्यनुवर्तमाने शिवशमरिष्टस्य कर इति तातिल् ॥ अत्र मरणमेव सर्वदुःखनाशकतया निर्वाणं मोक्षस्तस्यान्तरमवसरः । यद्वा । मरणमेव निर्वाणं निर्वृतिः सुखम् ॥ निर्वाणं निर्वृतौ मोक्ष

६८. °शन्ति for शाति B.; ताः for काम—च B.; लवङ्गिकामालती for मा—का K1. K2.

६९. Bh. om. काम°; D. om. सह°—र्यं; आत्मगतं for अपवार्य Bh. K1. K2.

७० नो भद्रं for भद्रं नो Bh. K1. K2.

७२. कृतार्थी for कृतार्था A. Bh. D.; सुहृदमात्योपयमने K2. सुहृदि यत्नैरभिमतः N. for सु—मने.

७३. प्रयासः for प्रयत्नः Bh.; दायी for तातिः A.

माल० । स्वगतम् । केण उण उवाएण संपदं मरणणिव्वाणस्स अन्तरं संभावइस्सं । मरणंपि मन्दभाअधेआणं अहिमदं त्ति ७५ दुल्लहं होदि । ( क )

लव० । स्वगतम् । अदिक्किलम्मिदा क्खु पिअसही एदिणा अणुऊलविप्पलम्भेण । ( ख )

प्रविश्य पेट्टालकहस्ता प्रतीहारी । भअवदि अमच्चो भणादि

---

( क ) केन पुनरुपायेन सांप्रतं मरणनिर्वाणस्यान्तरं संभावयिष्ये । मरणमपि मन्दभागधेयानामभिमतमिति दुर्लभं भवति ।

( ख ) अतिक्लामिता खलु प्रियसख्येतेनानुकूलविप्रलम्भेन ।

---

इति विश्वः । अन्तरमवसरावध्यात्मसदृशेष्विति मेदिनीकरः ॥ संभावयिष्ये सम्यक्प्राप्स्यामि ॥ भू प्राप्तावित्यस्यात्मनेपदिनो रूपम् ॥ सांप्रतमित्यनेन माधवालाभान्नन्दनलाभविलम्बनाच्चेति दर्शितम् । मन्दभाग्यतया माधवप्राप्तिवन्मरणमपि न स्यादिति भावः ।

७७–९१. अत्र क्लामिता क्लमं श्रमं प्रापिता । अनुकूलेन माधवेन सह विप्रलम्भो विरहस्तेन । यद्वा । अनुकूलो नन्दनस्तस्य विप्रलम्भेन

---

७४. B. om. स्वगतं; N. O. om. उण; अन्तरेण B. उवायेण O. for उवाएण.

७५. अन्दरं for अन्तरं B.; °वयिस्सं for °वइस्सं K2. O.; वि for पि A. C. D. N.; भाग° for भाअ° O.; °हेआणं A. धेयाणं K1. °हेआए N. °धेयाणं O. for °धेआणं; O. om. अहिमदं त्ति; अभि° for अहि° Bh. K1.; ति for त्ति K1. K2.

७६. सु before दुल्ल° A.

७७. अति for अदि A. C.; किलमिदा B. किलामिदा Bh. K2. O. किलम्मदि K1. for किलम्मिदा; N. om. क्खु; खु for क्खु Bh. K1. K2. O.; प्पिय for पिअ°. O.; B. om. एदिणा; एदेण for एदिणा N.

७८. कूल for °ऊल Bh. C. D. K2. O.; विप for विप्प K2.

७९. पेटक A. D. K2. पिट्टालक Bh. पीटलक K1. पेटालक O. for पेट्टालक; प्रतीहारी twice Bh. K1. K2.; अमच्चो भअवदी A. D. अमच्चो भअवदि Bh. K2. ( K2. छाया: –°वर्ता); अमच्चो भअवदि K1. अमच्चो भयवदि O. for भअ°–°च्चो; विण्णवेदि for भणादि A. K1. K2.

८० एदिणा णरिन्दाणुप्पेसिदेण विवाहणेवच्छेण देवदापुरदो अलं-
करिदव्वा मालदित्ति । (ग)

काम० । युक्तमाहामात्यः । माङ्गलिकं तत्स्थानमतो दर्शय ।

प्रती० । एदं दाव धवलपट्टंसुअचोलअं एदं च उत्तरीअं रत्त-
वण्णंसुअं इमे अ सव्वङ्गिआ आहरणसंजोआ अअं च मोत्ति-

---

(ग) *भगवति अमात्यो भणत्येतेन नरेन्द्रानुप्रेषितेन विवाहनेप-
थ्येन देवतापुरतोऽलंकर्तव्या मालतीति ।

(क) एतत्तावद्धवलपट्टांशुकचोलकमेतच्चोत्तरीयं †रक्तवर्णांशुक-

---

वञ्चनया । पेटकं मञ्जूषा ।। पेटकं पुस्तकादीनां मञ्जूषायां कदम्बक
इति मेदिनीकरः ।। पेटकग्रहणं तु नन्दनप्रसाधनार्थम् । [प्रती०वा०]
अत्र नेपथ्यं प्रसाधनम् । युक्तमिति । एतत्प्रसाधनेन मकरन्दमलंकृत्य
मदयन्तिकां विवाहयिष्यामीति भावः । माङ्गलिकं मङ्गलहेतुः । अत्र
धवलं यत्पट्टसूत्रमयमंशुकं तेन निर्मितश्चोलकः कूर्पासकः ।। चोलः
कूर्पासकोऽस्त्रियामित्यमरः ।। उत्तरीयरूपं रक्तांशुकं सिन्दूरीवस्त्रम् ।।

---

८०. एदेण for एदिणा N ; णरेन्दा° B. N. णरिदा° Bh. णरिंद O. णलिन्दा° A. C. D. for णरिन्दा°; प्पेसि° for °णुप्पेसि° O.; विआह for विवाह Bh. K1. K2.; णेपछेण Bh. णेवत्थेण B. C. णेपत्थेण K1. णेपेत्तणे K2. for णेवत्थेण.

८१. °कारि for °करि; °दीत्ति D. दिति K2. for दित्ति.

८२. N. om. अमात्यः; हि after °लिकं K2.; एतत् for तत् A. Bh. K1. K2.; इतो D. N. यतो O. for अतो.

८३. इदं A. B. एवं K1. O. for एदं; Bh. K1. om. दाव; धवलं for धवल K2. वट्टंसुअ A. पट्टंसुअं D. N. पट्टांसुअं K1. पट्टंसु K2. पट्टंसुय O. for पट्टंसुअ; चोलअं A. D. चेलअं Bh. जुयलं O. for चोलअं; N. om. चोलअं; अ for च Bh. K1. K2. N.; K2. om. उत्तरीअं; रीअ K1. N. रीयं O. for रीअं; N. om. रत्त; रत्तंसुअं B. K2. चेलअं Bh. K1. for र-अं.

८४. सव्वाङ्गिआ K2. सव्वंगिक O. for सव्वङ्गिआ; आभरण Bh.N. °हरण C. °भरण K1. K2. रयण O. for आहरण; संयोआ K1. संयोया O. for संजोआ; O. om. अअं च; इमे Bh. K1. N. मे K2.; for अअं; अ for च Bh. K. K2. N.

* Com. with A, D. † Com. om. वर्ण.

आहारो चन्दणं सिदकुसुमापीडो अ । ( क )　　८५

काम० । अपवार्य । रमणीयं हि वत्सं मकरन्दमवलोकयिष्यति मदयन्तिका । प्रकाशम् । गृहीत्वा । भवत्वेवमित्युच्यताममात्यः ।

प्रती० । तथा । इति निष्क्रान्ता ।

काम० । लवङ्गिके प्रविश त्वमभ्यन्तरं वत्सया सह ।

लव० । अध भअवदी उण कहिं । ( ख )　　९०

---

* मिमे च सर्वाङ्गिका आभरणसंयोगा † अयं च मुक्तिकाहारश्च- न्दनं ‡ सितकुसुमापीडश्च ।

( ख ) अथ भगवती पुनः क्व ।

---

आपीडः शेखरोऽस्त्रियामिति मेदिनीकरः ॥ भवत्विति संबोधनम् । गुरुसमक्षं मालत्यनुरागानुभवो माधवस्य न स्यादत उक्तं प्रविश त्वमिति । विविक्ते विजने ।

---

८५. मुत्तिया K1. मुत्तिआ K2. मोत्तिअ N. मोत्तिय O. for मोत्तिआ; हारा for हारो Bh. K1. K2. N.; एदं before चन्दणं A. Bh. D. K1. K2 N.; एस न D. K2. एदं N. before सिद; सिर Bh. K1. सित D. N. O. °पीडं Bh. K1. K2. N. °वीडो O. for °पीडो; त्ति for अ N. O.

८६. आत्मगतं Bh. K1. स्वगतं K2. for अपवार्य; Bh. K1. K2. N. om. हि; °मालोकयिष्यति K1. °मालोकयिष्ये K2 for ° मवलोकयिष्यति.

८७. जनः for मदयन्तिका N. O.; तद् before गृहीत्वा O.; भवति for भवतु N.; ओम् for एवं B. C. D. A. K1. K2. om. इति.

८८. Bh. K1. K2. N. om. तथा इति; तथा ought to be तह, तहा, or तधा.

८९. वत्से before लव° A. D.; प्रविश्य for प्रविश K1.; O. om. त्वम्; A. C. D. have मालत्या after वत्सया.

९०. Bh. K1. N. om. अध; अह for अध O.; कहिं भयदी पाछिदा for भअ°— कहिं O.; °वदीए for °वदी Bh.; N. om. कहिं.

* एते for इमे Com. † एष for अयं Com. ‡ इदं चन्दनं एष च सित कुसुमापीडः Com.

काम० । अहमपि तावद्विविक्तेलंकरणरत्नानां प्राशस्त्यं शास्त्रतः परीक्षिष्ये । इति निष्क्रान्ता ।

माल० । स्वगतम् । लवङ्गिआमेत्तपरिवाराम्हि संवुत्ता ।( क)

लव०। एदं देवदामन्दिरदुवारं पविसम्ह । इति प्रविशतः ।(ख)

१५ मक० । वयस्य इतः स्तम्भापवारितौ तिष्ठावः । तथा कुरुतः ।

लव० । सहि अअं अङ्गराओ इमाओ कुसुममालाओ । (ग)

---

( क ) लवङ्गिकामात्रपरिवारास्मि संवृत्ता ।
( ख ) एतद्देवतामन्दिरद्वारं प्रविशावः ।
( ग ) सखि *अयमङ्गराग इमाः कुसुममालाः ।

---

९३–९८. (मा० वा०) हृद्गतमरणावकाशप्राप्त्या सानन्दोक्तिरियम् । (ल० वा०) बाह्यसंवेदनाभावान्मालती न पश्यतीति भावः । अपवारितं व्यवहितम् । अत्राङ्गरागः कुङ्कुमादिः । तत्प्रयोजनमपश्यन्तीवाह । ततः किं मयानेन कर्तव्यमित्यर्थः । अत्र पाणिग्रहणेति

---

९१. B. om. तावत्, विविक्ते तावदलं° for तावद्विविक्तेलं° O., B. om. अलंकरण ; °कार for °करण Bh. K1. K2.

९२. K2. om. शास्त्रतः

९३. आत्मगतं for स्वगतम् N.; Bh. K1. K2. om. स्वगतम्; कधं before लव°; A. Bh. D. K1. K2.; ° ङ्गिका for °ङ्गिआ K2. O.; °वारा संवुत्तम्हि Bh. K1. °वारा संवृत्तम्हि O. for र-त्ता; परिअणम्हि for परिवारम्हि B.; प्रकाशम् after संवुत्ता N.

९४. N. om लव°; इदं A. C. D. इमं O. for एदं; दुआरं for दुवारं Bh. K1. K2.; ता before पवि° A. Bh. K1. K2.; B. D. O. om. पविसम्ह; पविसीअदु Bh. पविसदु विअसही N. for पविसम्ह; B. Bh. N. om. इति; उभे for इति O.

९५. K1. K2. N. om. वयस्य, इतः twice Bh.; B. C. have तावत् after इतः; °वारितशरीरौ for °वारितौ A. D. K2; पश्यावः for तिष्ठावः N.

९६. इमे for अअं N.; रओ K2. राआ N. for राओ; इमाइं B. इमा K1. K2. for इमाओ; कुसुमाइं B. कुसुममालाए K1. K2. for कुसुममालाओ.

* एष for अयं Com.

मालo। तदो किं। (क)

लवo। सहि इमस्सिं पाणिग्गहणमङ्गलारम्भे कल्लाणसंपत्ति-
णिमित्तं देवदाओ पूजेहि त्ति अम्बाए अणुप्पेसिदासि। (ख)

मालo। कीस दाणिं दारुणसमारम्भदेव्वदुव्विलासपरिणाम- १००
दुक्खणिद्धमाणसं पुणो पुणो मम्मच्छेददूसहं मं मन्दभाइणिं
दूमावेसि। (ग)

(क) ततः किम्।

(ख) सखि अस्मिन्पाणिग्रहणमङ्गलारम्भे कल्याणसंपत्तिनिमित्तं देवताः पूजयेत्यम्बयानुप्रेषितासि।

(ग) किमिदानीं दारुणसमारम्भदैवदुर्विलासपरिणामदुःखनिर्दग्धमानसां पुनः पुनर्मर्मच्छेददुःसहं मां मन्दभागिनीं दुनोषि।

सामान्योक्त्या माधवनन्दनयोर्विवाहश्लेषेण नर्मस्फोटोयं भावः। यदाह।

श्लेषेणोक्तिस्तु भावानां नर्मस्फोट इतीरितः।

१००—१०७. अत्र दुर्विलासपरिणामः प्रियत्यागाप्रियप्राप्तिलक्षणः। दुःसहमिति क्रियाविशेषणम्। अनया श्लिष्टं मद्वचो न ज्ञातमत इयमेव वदत्वित्यत आह (लवङ्गिकाथ किमित्यादि)। अत्राभिनिवेशिना

९८. B. om. सहि; इदस्सिं for इमस्सिं C.; °ग्गहणा° for °ग्गहणमङ्गला° B. C. D. N. for ग्गहग्गहण; कल्याण for कल्लाण Bh. K1.

९९. अच्चेहि Bh. K1. K2. N. O. पूजेसि C. for पूजेहि; अणुपेसि° C. K2. अणेसि° K1. for अणुप्पेसि°; °दासिं for °दासि K2.

१००. सनिर्वेदं K2. स्व° N. after मालती; किं for कीस A.; दाणीं for दाणिं B. C. D.; दुव्वार before देव्व Bh. K1.; दुव्विलसिद for दुव्विलास B.

१०१. णिब्भाजिद A. णिज्झाविद Bh. णिज्जीविद C. णिद्धाविद K1. णिज्झविद K2. णिद्दलिअ N. णिख्खविद O. for णिद्दद्ध; B. D. K1. om. one पुणो; वि after पुणो A. B. C. D.; मम्मच्छेअ A. णिव्वेद for मम्मच्छेद B. C.; दुःसहं for दूसहं A., Bh. C. K1. K2. N. om. मं; °इणीं A. B. C. D. K1. K2. इणी Bh. for इणिं.

१०२. दुणेवेसि B. दुम्मिज्झामि Bh. दुणावेसि C. दुण्णोसि K1. दूमीआसि K2. दूमिज्जेहि N. for दूमावेसि.

लव० । अइ किं सि वत्तुकामा । (क)

माल० । जं दाणिं दुल्लहाहिणिवेसमणोरहविसंवदन्तभाअ-
१०५धेओ जणो मन्तेदि । (ख)

मक० । सखे श्रुतम् ।

माध० । श्रुतमसंतोषस्तु हृदयस्य ।

माल० । लवङ्गिकां परिष्वज्य । परमत्थवहिणि पिअसहि लव-

(क) अथ *किमसि वक्तुकामा ।

(ख) यदिदानीं दुर्लभाभिनिवे†शमनोरथविसंवदद्भागधेयो जनो मन्त्रयते ।

(ग) ‡परमार्थभगिनि प्रियसखि लवङ्गिके एषेदानीं ते प्रियसख्य-

मनोरथेन विसंवादं प्रतिकूलं भाग्यं यस्य सः । माधवे दुर्लभां वाञ्छां मत्वाह सखे श्रुतमिति । श्लिष्टे वचस्यनिष्टाशङ्कितमाहासंतोष इति ।

१०८–११३. अत्र परमार्थेत्यादिना विश्वासपात्रत्वमुक्तम् । त्रि- रूढ उपचितः । सदृशं यथा तथा परिष्वज्येत्यन्वयः । अनुवर्तनीयो- पकर्तव्या । समग्रसौभाग्यपदेनारविन्दस्पर्धिनी शोभोक्ता । यदाह ।

---

१०३. अइ A. अयि D. हहि K1. K2. अध O. for अइ; N. om. अइ; ति for सि Bh.; वत्तुकामासि for सि—मा K1. K2.; सि after कामा Bh.

१०४. किं for जं N.; दाणीं for दाणिं C.; दुस्सह° for दुल्लहा° K2 ; अभि for अहि D. N. O.; °णिवेसि A. D. °णिवेसिअ Bh. °णिवेसी O. for °णिवेस; मण° for मणो° N.; रहे for रह Bh.; विसंवादन्त for विसंवदन्त K1.

१०५. हेओ D. N. °धेआ Bh. for °धेओ; मंतदि for मन्तेदि Bh.

१०६. श्रूयताम् for श्रुतं B. C. D.

१०७. K2. om. माध०, श्रुतम्; असंतोषः B. सन्तोषः K1. for असंतोषः; च for तु A. B. D.; हृदयेस्याः Bh. हृदये D. for हृदयस्य.

१०८. ता A. C. D. K2. हा Bh. O. ही K1. before परम°; °रमत्थ for °र-मत्थ O.; वहिणिए Bh. भइणि N. for वहिणि; पिय for पिअ O.

* Com. with A. D. † °निवेशि or निवेशित for °निवेश Com.; विसंवाद for विसंवदत् Com. ‡ तत्पर° Com.

ड्डिए एसा दाणिं दे पिअसही अणाहा मरणे वट्टमाणा आगब्भ-
णिग्गमणिरन्तरोवआरोवरूढवीसम्भसरिसं परिस्सइअ ११०
पत्थेदि जइ दे अहं अणुवट्टणीआ तदो मं हिअएण धारअन्ती
समग्गसोहग्गलच्छीपरिग्गहेक्कमङ्गलं माहवसिरिणो मुहार-
विन्दं आणन्दमसिणं अवलोअइस्ससि । (क) इति रोदिति ।

---

नाथा मरणे वर्त्तमानागर्भनिर्गमनिरन्तरोपकारोपरूढ*विस्रम्भसदृशं परिष्वज्य प्रार्थयते यदि तेऽहमनुवर्तनीया ततो मां हृदयेन† धारयन्ती समग्रसौभाग्यलक्ष्मीपरिग्रहैकमङ्गलं माधवश्रियो मुखारविन्दमानन्दमसृणमवलोकयिष्यसि ।

---

उत्तमैर्गुणिभिः स्पर्धा या सा शोभा प्रकीर्तिता ।

मां हृदये धारयन्तीत्यनेन परंपरया ममापि दर्शनं स्यादित्युक्तम् । माधवश्रिय इत्यत्र प्राकृते पूर्वनिपातानियमाच्छ्रीमाधवस्येत्यर्थः । आनन्दमसृणत्वेन स्निग्धा दृष्टिरुक्ता ।

---

१०९. °ड्डिके for °ड्डिए O.; दाणीं B. D. देणिं Bh. for दाणिं; O. om. दे; प्यिय for पिअ O.; अणाधा for अणाहा K2.; वत्तमाणा for वट्टमाणा Bh. O.; आरब्भ for आगब्भ Bh.

११०. D. om. णिग्ग—द; णिग्गम णिम्मिद णिर° A. B. C.; निरन्त° for णिरन्त° K1.; °न्तरोगआरविरूढ A. °न्तरोपआर B. °न्तरोवआरं विरूढ K1. °न्तरोवआरविरूढ K2. °न्तरोपारूढ N. for °न्तरोव—ढ; विसम्भ K2. विस्सम्भ N. for वीसम्भ; Bh. om. परिस्सइअ; मरि° for परि° B.; °स्सजिअ K1. °सज्जइ K2. °स्सजीअ N. °स्सइय O. for °स्सइअ.

१११. A. B. C. D. have तुमं before पत्थेदि; परिअत्थेइ Bh. पच्छेदि K1. अब्भत्थेदि N. पच्छेमि O. for पत्थेदि; अइ Bh. जदि K2. N. O. for जइ; वत्तणीआ Bh. K1 K2. वादिणीआ D. वत्तणीया O. for वट्टणीआ; हिअए for हिअएण Bh. C. K1. K2.; धारयन्ती K1. O. धारन्ती K2. N. for धरिअन्ती.

११२. लच्छी for लच्छी O.; Bh. om. लच्छीपरिग्ग°; °ग्गहिक्क for °ग्गहेक्क K1. माहवस्स for माहव N.; सिसिनो Bh. सिरि N. for सिरिणो.

११३. N. om. आणन्दमसिणं; पुलेएसि Bh. पुलोएसि C. D.; पलोअसि K1. पलोइदि K2. पलोएसु N. °पलोकयसि O. for अवलोअइस्ससि; त्ति for इति Bh. K1. O.

* कारविरूढ Com. † हृदये Com.

माध० । वयस्य मकरन्द

११५ म्लानस्य जीवकुसुमस्य विकासनानि
संतर्पणानि सकलेन्द्रियमोहनानि ।
आनन्दनानि हृदयैकरसायनानि
दिष्ट्या मयाप्यधिगतानि वचोमृतानि ॥

---

११५-११८. म्लानस्येत्यादि । वचांस्येवामृतानि मयापि दिष्ट्या निर्णीतानि । त्वया श्रुतमित्यादिना निर्णीतानि मया त्वधुनेत्यपिपदार्थः । अमृततुल्यत्वमाह । म्लानस्य प्रत्याशाभङ्गज्ञानेन संकोचितस्य जीवपुष्पस्य प्रकाशनानि । अमृतेपि सर्वप्रकाशकतया म्लानपुष्पप्रकाशकत्वम् । संतर्पणानि तृप्तिकरणानि । अमृतेप्येवम् । संतर्पणे सति बाह्येन्द्रियतर्पकानि । अमृतेप्येवम् । आनन्दनान्यन्तर्मोदकानि । आय्यत आनीयतेनेनेत्यायनम् । रसस्यायनं रसायनम् । वचसां चित्तोल्लासकत्वेन नवत्वजननादिवामृतस्य जरादिनाशकत्वेन नवत्वजननादिदमिति भावः । यद्वा । अमृतपदेन जलमोक्षपीयूषाण्युच्यन्ते । तत्राद्यपदेन जलसाम्यम् । मोक्षसाम्यार्थमितरपदत्रयम् । मोक्षे हि सम्यक्तृप्तिविषये निराकाङ्क्षतैव । इन्द्रियमोहोपि विषयग्रहाभावात् ।

आनन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितम् ॥

इति श्रुतेरानन्दमयता मोक्षे । यद्वा । आद्यपदाभ्यां जलसाम्यमितरपदाभ्यां मोक्षसाम्यम् । पीयूषसाम्यार्थं शेषपदम् ॥ अमृतं मोक्षपीयूषसलिलेषु घृतेपि चेति धरणिः ॥

---

११५. विकाशनानि A. Bh. C. विकाशकानि O. for विकासनानि.

मालः । जहा तस्स जीविदप्पदाइणो जणस्स अवसिदत्ति मं सुणिअ संतप्पमाणस्स तं तहाविहं सरीररअणं ण परिहीअदि १२० जधा अ लोअन्तरगदं पि मं उद्दिसिअ सो जणो सुमरणसंकधामेत्तपरिसेसं कालन्तरे लोअजत्तं ण सिढिलेदि तहा करेसु ।

(क) यथा *तस्य जीवितप्रदायिनो जनस्यावसितेति मां श्रुत्वा संतप्यमानस्य तत्तथाविधं शरीररत्नं न परिहीयते यथा च† लोकान्तरगतामपि मामुद्दिश्य स जनः ‡स्मरणसंकथामात्रपरिशेषां

११९-१२८. अत्रावसिता मृता । तथाविधमनिर्वचनीयम् । न परिहीयते न नश्यति तथा करिष्यसीत्यन्वयः । लोकयात्रा गार्हस्थ्यम-[स्थ्यं स?]पत्नीकत्वं वा । माधवाप्तिप्रत्याशानाशादेवमेवेत्यवधारणम् । हन्तानुकम्पायाम् । करुणमिति । आलस्यादिसमुत्थो निरपेक्षभावः करुण औत्सुक्यचिन्तासमुत्थः सापेक्षभावो विप्रलम्भ इत्यनयोर्भेदः ।

११९. जधा K2. जह N. for जहा; अ Bh. K1. च O. before तस्स; °प्पहा° K1 °पदा° K2, °अदा° O. for °प्पदा°; °यिणो for °इणो K2. O.; Bh. K1. K2. Nr. om. जणस्स; °सिदेत्ति A. C. K1. K2. सिदंति Bh. सीदंती N. °सिद B. for सिदत्ति; मां for मं K1.

१२०. मं after °णिअ Bh.; असतप्प° for संतप्प° Bh.; N. om. तं; जहा C. तह D. तधा O. for तहा; °विधं for °विहं K1. O.; सरीरं for सरीर N.; °ररत्तणं° B. रअणं K1. K2. for °ररअणं; N. om. रअणं; °हीअमि K1. °हीयदि O. for °हीअदि; जहा Bh. D. K1. O. जह N. for जधा.

१२१. N. om. अ; परलोअ A. लोयंतरं O. for लोअन्तर; अदं A. गअं N. for गदं; वि A. C. N. अपि K2. for पि; K1. om. पि; म for मं Bh.; उद्दिसि for उद्दिसिअ K2.; N. om. सो जणो; सम्हण Bh. संभरण C. K1. O. संसुमरण K2. for सुमरण; कधा A. D. संकहा K1. N. O. for संकधा.

१२२. परिससां K2. परिग्गहेण N. for परिसेसं; कालंतरेण Bh. K2. O. कालंदरेण N. for कालन्तरे; पि B. वि; A. C. before लोअ; लोग for लोअ O.; अत्तां K2. अत्तं N. for जत्तं; सिहि° for सिढि° K2.; °लीकरेदि Bh. °लीकरोदि K1. °लेइ N. for °लेदि; तधा Bh. K1. तह C. N. for तहा; करेसि A. Bh. D. K1. K2. N. करेहि O. for करेसु.

* यथा च तस्य Com. † परलोकगतामप्यु° Com. ‡ संस्मरणकथा. Com.

एव्वं जेव्व पिअसहीए पसादादो मालदी किदत्था भोदि । (क)

मक० । हन्त अतिकरुणं प्रस्तुतम् ।

१२९ माध० । नैराश्यकातरधियो हरिणेक्षणायाः
श्रुत्वा निकामकरुणं च मनोहरं च ।
वात्सल्यमोहपरिदेवितमुद्वहामि
चिन्ताविषादविपदं च महोत्सवं च ॥

---

कालान्तरे लोकयात्रां न शिथिलयति तथा कुरुष्व* । एवमेव प्रियसख्याः† प्रसादान्मालती कृतार्था भवति ।

---

अत एव निरपेक्षपदोपलक्षितनैराश्यमाह माधवः । नैराश्येत्यादि । नैराश्येन प्रत्याशानाशेन कातरा विसंष्ठुला धीर्यस्या हरिणनेत्रायाः । वात्सल्यं प्रियविश्लेषे प्राणत्यागेच्छा । मोहो भ्रमः सप्रत्याशत्वेपि नैराश्याभिमानः । ताभ्यां यत्परिदेवितं विलपनं वृत्तवर्तमानभाव्यर्थचिन्तनमतिकरुणं मनोज्ञं च श्रुत्वा चिन्तया यो विषादस्तेन विपत्तिमुद्वहामि । चिन्ताविषादरूपां वा विपत्तिं महोत्सवं चोद्वहामि । चकारो मिथोविरुद्धरसयोजने । इह हेतुफलभावेनान्वयः । तथा हि । नैराश्यकातरबुद्धित्वाद्वात्सल्यम् । ततः परिदेवनम् । तच्छ्रुत्वा मनोविषादः । तथा हरिणेक्षणत्वेनापहृतचित्तस्य ममालाभान्मनोज्ञपरिदेवितं श्रुत्वा महोत्सवः ।

---

१२३. एव्वं for एवं Bh. K1. ; N. om. ज्जेव्व. पिय for पिअ O.; सहा Bh. सही K1. K2. सही दे N. सहि तए O. for सहीए; प्पसादादो A. सआसादो B. Bh. C. K1. K2. सयासादो O. for पसादादो; N. om. पसादादो; मालई for मालदी N.; K1. om. मालती (but gives it in the छाया ); अणाहा after मालई N.; कदत्था A. C. K1. कदथाण Bh. सकामा N. किदच्छा O. for किदत्था; भोदु B. भविस्सदि D. होइ N. होदि O. for भोदि.

१२४. B. om. अति; वर्तते for प्रस्तुतं A. B. C. D. K2. प्रस्तुतमनया N.

१२५. वैराग्य for नैराश्य K1.

१२८. चिंतावसान B. चिंतावसाद C. for चिन्ताविषाद.

*करिष्यसि Com. †सखीप्रसा° Com.

लव० । अइ पडिहदं दाणिं दे अमङ्गलं । ण अदो वि अवरं सुणिस्सं । ( क ) १३०

माल० । सहि पिअं क्खु तुम्हाणं मालदीजीविदं ण उण मालदी । ( ख )

लव० । किं एव्वं भणिदं भोदि । ( ग )

---

( क ) अयि प्रतिहतमिदानीं तेमङ्गलम् । नातोऽप्यपरं* श्रोष्यामि ।
( ख ) सखि प्रियं खलु युष्माकं मालतीजीवितं न पुनर्मालती ।
( ग ) किमेवं† भणितं भवति ।

---

स पुनः क्रन्दनैर्मोहैः प्रलापैः परिदेवनैः ।
देहायासाभिघातैश्च करुणाभिनयो भवेत् ॥

इति भरतः ।

१२९-१३२. अत्रामङ्गलप्रतिघातो विवाहादिति बाह्यम् । माधवसंनिधानादित्यान्तरम् । बाह्यार्थमाकलय्याह [सखि प्रियमिति ]। अत्र तच्छरीरावच्छिन्नात्मा मालती जीवनं त्वदृष्टविशेषकारितदेहात्मसंयोग इति जीवनमालत्योर्भेदः । जीवनस्य सुखहेतुतया प्रियत्वं तस्वेह दुःखसंततिजनकमतस्त्याज्यमेव भवतीति भावः ।

---

१२०. B. C. O. om. अइ; परि for पडि O.; B. C. om. दाणिं; णादो Bh. D. K1. K2. N. नादो O. for ण अदो; पि for वि K2.; N. om. वि; अहिअदरं B. अधिअं D. अधि अदरं A. C. वरं N. for अवरं. *D. ends here.*

१३१. K1. om. सहि ( but gives it in the छाया ); प्पियं for पिअं O. खु for क्खु Bh. K1. K2. O.; Bh. om. जीविदं; N. om. उण.

१३२. सहि before किं N.; किन्ति Bh. किं त्ति N. for किं एव्वं; भणिदेण C. भणिदे E. O. for भणिदं; होदि for भोदि Bh. K1. K2. N. O.

* नातोऽधिकं Com. † किमेव Com.

माल० । आत्मानं निर्दिश्य । जेण पच्चासाणिबन्धणेहिं वअ-
१३५ णसंविहाणएहिं जीआविअ इमं महाबीभच्छारम्भं अणुभावि-
दम्हि । संपदं उण मणोरहो मे एसो जेव्व जं तस्स देवस्स परके-
रअत्तणेण अणवरद्धं अत्ताणअं परिच्चइस्सं त्ति । ता इमस्सिं पओ-

(क) *येन प्रत्याशानिबन्धनैर्वचनसंविधानकैर्जीवयित्वेमं †महा-
बी‡भत्सारम्भमनुभावितास्मि । सांप्रतं पुन§र्मनोरथो मे एष एव
यत्तस्य देवस्य ¶परकीयत्वेनानपराद्धमात्मानं**परित्यक्ष्यामीति ।
तदस्मिन्प्रयोजने प्रियसखी मेपरिपन्थिनी भवतु ।

१३४-१३८. अत्रान्यजनेत्यत्रान्यपदेन माधवाभिधानम् । नन्द-
नापेक्षयान्यत्वात् । दुर्लभत्वेन परकीयत्वारोपाद्वा । बीभत्समिह नन्द-
नविवाहार्थमङ्गलस्यानिष्टस्य दर्शनात् । अनपराद्धमितीषदर्थे नञ् ।
आनन्दनविवाहपर्यन्तस्थायित्वे महापराधो यतः । अन्यस्य संभो-

१३४. N. om. आत्मानं निर्दिश्य; उद्दिश्य for निर्दिश्य O.; C. om. जेण; अण्णजण after जेण A. E. K2.; बन्धणेहि A. निबन्धणेहिं K1. for णिबन्धणेहिं.

१३५. विलअणेहिं B. विण्णसेहिं C. E. विधाणेहिं K1. K2. संविहाणेहिं A. Bh. for संविहाणएहिं; जीवावि K1. जीवाविअ K2. जीवाविय O. for जीआविअ; एअत्तकालं संपदं उण after ०विअ Bh.; ईदिसं for इमं Bh. K1. K2.; ज्जेव्व after इमं A. E.; ०भत्सारंभं B. C. K1. K2. ०भच्छआरंभं N. ०भत्समारंभं O. for ०भच्छारंभं.

१३६. मम A. मह E. before मणोरहो; मम Bh. K1. K2. after मणोरहो for मे; B. C. om. मे; एत्तिअं N. एत्तिको O. for एसो; K2. om. एसो; B. om. जेव्व; एव्व for जेव्व N.; महाभाअस्स for देवस्स O.; Bh. K1. N. om. देवस्स; परोक्खगुणकित्तिणेण A. C. परोक्खगुणसंकित्तणेण B. परोक्खगुणकित्तणेण E. परकेरन्तणेण K1. परकीरत्तणेण K2. परोक्खगुणकेरत्तणेण O. for परकेरअत्तणेण.

१३७. अणवरदं B. अनवरद्धं K1. K2. अवरद्धं N. O. for अणवरद्धं; अत्ताणं for अत्ताणअं A. K2. N.; परिच्चइस्सदि B. Bh. परिच्चस्सं K1. परिच्चइअ णिव्वुदा भविस्सं N. परिच्चयामि O. for परिच्चइस्सं; °स्सन्ति for °स्संत्ति K2.; Bh. K1. N. om. त्ति; सहि for ता N.; एदस्सिं for इमस्सिं N.; °प्पओ for °पओ O.

* येनान्यजनप्रत्या° Com.; † °त्वेयमेवाहं Com.; ‡ °भत्समनु° Com.; § पुनर्मम मनो Com.; ¶ पराधीनत्वेनानपराद्धम् Com.; ** परित्यजामि Com.

अण्णे पिअसही मे अपरिपन्थिणी होदु । (क) इति पादयोः पतति ।

माध० । सैषा सीमा स्नेहस्य । लवङ्गिका माधवं संज्ञया समाह्वयति । १४०

मक० । वयस्य उपसृत्य लवङ्गिकास्थाने तिष्ठ ।

माध० । परवानस्मि साध्वसेन ।

मक० । इयमेव नेदीयसां प्रकृतिरभ्युदयानाम् ।

माधवः स्वैरं लवङ्गिकास्थाने तिष्ठति ।

---

गादेरभावादेष एवेत्युक्तम् । अपरिपन्थिन्यविरोधिनी । एतदात्मत्यागरूपम् ।

१३९-१४७. संज्ञया संकेतेन । परवाननायत्तः । साध्वसेन जडतया । अत्यभीष्टलाभादियम् । नेदीयसां निकटानाम् । स्वैरं शनैः । [माल० वा०] अत्र मर्तुं स्वीकुर्वित्यर्थः । माधवस्य संस्कृतभाषया लवङ्गिकाभ्रमो न स्यादिति भाषासमावेशेनाह । सरले इत्यादि । साहस आत्मनिरपेक्षकार्ये रागमनुरागं परिहर । रम्भोरु कदलीसमोरुदेशे हे संरम्भं मरणे त्वरां त्यज । जीवन्त्यां प्रत्याशापि स्यादिति भावः । विरसं रसशून्यं तव विश्लेषदुःखं सोढुं मे चित्तमक्षमं यतः । अतोयं वल्लभस्त्वयि दत्तोतस्त्यज मरणाभिनिवेशमिति लवङ्गिकाभिप्रायः ।

---

१३८. पिय for पिअ O.; B. om. मे; °पन्थिनी for पन्थिणी K1., होइ C. भोदु K1. for होदु; Bh. K2. N. om. इति; त्वे for इति K1.

१३९. स एष for सैषा N. O.; सीमांतः for सीमा O.; व्याहरति Bh. व्यवहरति K1. आह्वयति K2. N. O. for समाह्वयति.

१४१. उपसृत्य वयस्य for व–स्य K2.; माधव after वयस्य O.; N. om. उपसृत्य; लवङ्गिकायाः for लवङ्गिका A. C.

१४२. वयस्य before पर० A. C. E.

१४३. नेदीयसी for नेदीयसां B.

१४४. उपसृत्य after स्वैरं K2.; लवङ्गिकायाः for लवङ्गिका C.

१४९ माल० । सहि करेहि अणुऊलदाए पसादं । (क)

माध० । सरले साहसरागं परिहर रम्भोरु मुञ्च संरम्भम् ।

विरसं विरहायासं सोढुं तव चित्तमसहं मे ॥

माल० । अलङ्घणीओ दे मालदीप्पणामो । (ख)

माध० । सहर्षम् ।

१५० किं वा भणामि विच्छेददारुणायासकारिणि ।

कामं कुरु वरारोहे देहि मे परिरम्भणम् ॥

---

(क) सखि कुर्वनुकूलतया*प्रसादम् ।

(ख) †अलङ्घनीयस्ते‡ मालतीप्रणामः ।

---

अत एव सरले अज्ञे ऋजुप्रकृतिके वा । माधवपक्षे सरले अजानति हे तव विरहायासं सोढुं मे चित्तमसहमतस्तव समीपमागतोस्मि तन्मरणं त्यज । इतरत्समभेव । तदिह संस्कृतप्राकृतयोः साम्यात्प्राकृतसमकम् ।

१५०–१५१. किं वेत्यादि । किं वा भणामि । त्वदारम्भनिषेधं न करोमीत्यर्थः । हे विरहदुःसहकष्टकारिणि सुश्रोणि काममभीष्टं कुरु । यद्येवं तदा ममालिङ्गनं देहीति लवङ्गिकापक्षे । माधवपक्षे तु किं वा

---

१४९. अनु° for अणु° Bh.; °कूल° for °ऊल° Bh. K1. K2. N. O.; प्पसादं for पसादं O.

१४७. विरसा° for विरहा° Bh.; वोढुं for सोढुं B. C. E.

१४८. सहि A. B. K2. सहि twice K1. before अलङ्घ°; अवजाणिदो B. अलंघणिज्जो Bh. K1. K2. O. अवज्जणीओ C. E. for अलङ्घणीओ; A. B. C. E. have जेव्व before दे; मालती for मालदी Bh.; पणामो for प्पणामो Bh. K2. N.

१४९. N. Om. सहर्षम्.

१५०. त्वां for वा B. C. E.; °कारिणीं for °कारिणि C. E.

* °तायै Com.; † सखि अल° Com.; ‡ अयं before ते.

माल०। सहर्षम्। कधं अणुगहीदम्हि। उत्थाय। इअमालिङ्गामि। दंसणं उण पिअसहीए बाहुप्पीडेण णिरुद्धं ण लम्भीअदि। आलिङ्ग्य सानन्दम्। सहि कठोरकमलगब्भपम्हलो अण्णारिसो जेव्व दे अज्ज णिव्वावेदि मं सरीरप्फंसो। सास्रम्। किं च। १५५

(क) कथमनुगृहीतास्मि। इयमालिङ्गामि। दर्शनं पुनः प्रियसख्या बाष्पोत्पीडेन* निरुद्धं न लभ्यते। सखि कठोरकमलगर्भपक्ष्मलो†न्यादृश एव तेद्य निर्वापयति मां शरीरस्पर्शः।‡किं च। मौलिविनिवेशि-

भणामि किं वक्तव्येन कामं कामव्यापारं कुरु। अतः परिरम्भणं देहि॥ आरोहः श्रोणिकाययोरिति धरणिः॥ श्लोकद्वयमिदं सौरसेन्या। यदाह।

स्पष्टार्थं लक्षणं प्रोक्तं सौरसेन्याः प्रपञ्चतः।
लक्षणं त्वेकमेवास्याः संकृताद्यदनूनता॥

१५३-१६७. अत्र उत्पीडः प्रबलीभूय निर्गमः। उत्पीडः समूहो वा। अपश्चिमं चरमम्। प्रियस्पर्शादाह्लादात्सहर्षम्। कठोरमरालगर्भो बीजकोशः। पक्ष्मलो रोमाञ्चयोगात्। समाधिना सुकुमारः। अन्यादृश

१५२. B. om. सहर्षम्; कहं for कधं Kl. O.; गिहिदम्हि Bh. गहिदम्हि Kl. मदम्हि N. O. for गहीदम्हि; इयमा° for इअमा° Bh. Kl. K2. O.; °लिङ्गयामि for °लिङ्गामि Kl. K2.

१५३. Bh. E. Kl. K2. om. पिअसहीए; बाहुपर्पील A. बाहुप्पाडणेण B. बाहप्पीडेण Bh. Kl. O. बाहुप्पल C. बाहुप्पीडलेण E. बाह्वापीडेण K2. for बाहुप्पीडेण; O. om. णिरुद्धं; अपच्छिमं A. पिअसहीए अपच्छिमं Bh. Kl. K2. पच्चरब्बं N. पियसहीए अवच्छिण्णं O. before ण; लहेइ B. लभेमि Bh. लभेदित्ति C. लभेइत्ति E. लब्भइ Kl. K2. लब्भेदि O. for लम्भीअदि.

१५४. इति before आलि° B. O. (O in margin); आलिंगति for आलिङ्ग्य B.; N. om. सानन्दम्; B. C. om. गब्भ; अणारिसो for अण्णारिसो Bh. Kl.

१५५. एव्व for जेव्व N.; B. om. अज्ज; णिव्वादेदि B. C. णिव्वावेहि Bh. णिव्वावेइ N. for णिव्वावेदि; B. C. om. मं; मे for मं Bh.; संतप्पमाणं पिअसहीए A. Kl. तप्पमाणं Bh. after मं; फंसो for प्फंसो Bh.; सहि before किं च N.; K2. O. om. किंच; अ for च C. N.

* °पीडनेन निरुद्धं प्रियसख्या अपश्चिमं न Com. † पक्ष्मलसुकुमारोन्या° Com. ‡ तथान्यच्च for किंच Com.

मउलिविणिवेसिदञ्जली मह वअणेण विण्णवेहि तं जणं ण मए मन्दभाइणीए विअसन्तपुण्डरीअलच्छीविलासहारिणो मुहचन्दमण्डलस्स दे सच्छन्ददंसणेण संभाविदो चिरं लोअणमहूसवो। मुहामणोरहेहिं अ अविरदविअम्भमाणदुव्वारुव्वेअव्वइअ-

ताञ्जलिर्मम वचनेन विज्ञापय*तं जनं †न मया मन्दभाग्यया ‡विकसत्पुण्डरीकलक्ष्मीविलासहारिणो मुखचन्द्रमण्डलस्य §ते स्वच्छन्ददर्शनेन संभावितश्चिरं लोचनमहोत्सवः मुधामनोरथैश्चाविरतविजृम्भ-

एवानुभूतसखीस्पर्शविधर्मा श्मशानानुभूतस्पर्शतुल्यः। निर्वापयति तापं शमयति तथा। तादृशः स्पर्शः शङ्काविषयोप्यत्र नेति निर्वेदात्साभुता। अत्र विकसान्ति शतं पत्राणि यस्य तत्। अन्यथेदं व्यर्थं स्यात्। मण्डलपदं संपूर्णत्वार्थम्। चिरमित्यनेन स्वाधीनभर्तृकात्वमुक्तम्।

सुरतादिरसैर्यस्या बद्धः पार्श्वगतः प्रियः।
सामोदगुणसंप्राप्ता भवेत्स्वाधीनभर्तृका॥

१५६. मोलि N. मौलि O. for मउलि; विनि° Bh. णि° K2. for विणि°; °शिअंजली Bh. °सिअंजली C. E. N. °सिदाञ्जली K2. for °सिदञ्जली; मम for मह A. Bh. K1. K2.; विण्णवेसि A. Bh. विणवेसि K1. विण्णवेस K2. विण्णवेसु O. for विण्णवेहि; जमं for जणं K2.; जधा A. जह N. before ण मए.

१५७. °भाआए N. °भायणीए O. for °भाइणीए; तस्स after °णीए O.; पप्फुल्ल Bh. K1. विस्फुटन्त K2. विसट्ट N. for विअसन्त; सदवत्त K2. सयवत्त O. before पुण्ड°; सदपत्त for पुण्डरीअ N.; °रीक for °रीअ K2.; संपूण्णचन्दमण्डलाहिरामस्स मुहस्स for मुह-लस्स A.; अन्द A. B. Bh. C. E. यदं O. for चन्द.

१५८. मण्डणस्स for मण्डलस्स K2.; B. O. om. दे; महूसवो लोअणाणं A. B. C. E. लोअणस्स महूसवो K1. for लोअणमहूसवो; णोअण for लोअण K2.; महोसवो N. for महूसवो.

१५९. मुधा A. B. C. E. महा O. for मुहा; च for अ O.; K1. K2. N. om. अ; विरह Bh. अणवरद K2. अविरअं N. आविरल O. for आविरद; विजंभ° B. विढंभ° N. वियम्ह O. for विअम्भ°; °रोव्वेग K2. °रदुख्ख N. °रुव्वेल O. for °रुव्वेअ; वइअ° B. Bh. K1. K2. N. वइय° O. for व्वइअ°.

* विज्ञापयिष्यसि Com. † यथा न मया Com. ‡ विकसच्छतपत्रपुण्डरी° Com. § Com. with A.

रुव्वत्तमाणबन्धणं धारिअं हिअअं । गमिआ अ वारं वारं सवि- १६०
सेसदूसहारम्भदूमाविअसहीअणा सरीरसंदावा । कधं वि अदि-
वाहिदा अ चन्दादवमलअमारुदप्पमुहा अणत्थपरंपरा । संपदं
उण णिरासम्हि संवुत्तेति । तुए वि पिअसहि सव्वदा सुमरि-

---

माणदुर्वारोद्वेगव्यतिकरोद्वर्तमानबन्धनं धारितं हृदयम् । गमिताश्च वारं
वारं सविशेषदुःसहारम्भदावित*सखीजनाः शरीरसंतापाः । कथ-
मप्यतिवाहिता च चन्द्रातपमलयमारुतप्रमुखानर्थपरंपरा । सांप्रतं

---

निवेद्य दुःखं सुखी भवेदिति पूर्वानुभूतदुःखं निवेदयति । अविरतेत्यादि ।
उद्वर्तमानमुन्मूलितं बन्धनं स्थैर्यं यस्य तत् । बन्धनं स्वस्थानावस्थानं
तस्योद्वर्तनमुन्मूलनारम्भ इति पाठान्तरव्याख्या । गमिताश्चेत्यादिना
व्याध्यवस्थोक्ता । अतिवाहितातिक्रान्ता । चन्द्रातप इति तापकारि-
त्वादातपः । एतेषामनर्थत्वमाह भरतः ।

संभोगे ये सुखं कुर्युस्ते दुःखं विरहे भृशम् । इति ।

---

१६०. °रुव्विज्जमाण A. °रुवत्तमाण K1. °रोव्वत्तमाण K2. for °रुव्वत्तमाण; धारिदं for धारिअं Bh. K2. O.

१६१. विसेस before दूसह Bh.; A. om. दूमहारम्भ; °हाआस for °हारम्भ N.; दूमण्णाइअ A. दूनाविद Bh. दूमाविद K1. K2. O. for दूमाविअ; जणा N. for अणा ; कथं K1. कहं N. O. for कधं; पि for वि K2.

१६२ A. K1. N. om. अ; °इव for °दव K1.

१६३ पुण for उण N.; °रासह्मि A. K1. °रासेह्मि Bh. °रायासह्मि O. for °रासम्हि; B. C. E. om. म्हि and have णिरासा; संवत्ते संवुत्त° K1. K2. for संवुत्ते°; तए for तुए K2.; प्पिय for पिअ O.; सहीए A. सही N. for सहि; सव्वधा Bh. O. सव्वहा E. N. for सव्वदा; अहं before सुम° O.

* दुर्मनायित for दावित Com.

दव्वम्हि । एसा अ माहवसिरीसहत्थणिम्माणमणुहरा वउलमाला
१६५ मालदीणिव्विसेसं पिअसहीए दट्ठव्वा सव्वधा हिअए धारणी-
एत्ति । ( क ) स्वकण्ठादपनीय माधवस्य हृदि विन्यस्यन्ती सहसा-
पसृत्य साध्वसोत्कम्पं नाटयति ।

---

**पुनर्निराशास्मि संवृत्तेति । त्वयापि प्रियसखि सर्वदा स्मर्तव्यास्मि । एषा च श्रीमाधवस्वहस्तनिर्माणमनोहरा बकुलमाला मालतीनिर्वि-शेषं प्रियसख्या द्रष्टव्या सर्वथा हृदये धारणीयेति ।**

---

स्मर्तव्येत्यनेन करुणव्यभिचारिभावं स्मरणमाह । यदाह । व्यभिचा-रिणोस्य

निर्वेदो ग्लानिमरणव्याधिदैन्यभ्रमादयः ॥

नैराश्याच्च मरणोदयः । यदाह ।

सर्वैरेतैः प्रतीकारैर्यदि नास्ति समागमः ।
कामाग्निना प्रदीप्ताया जायते मरणं ततः ॥

विप्रलम्भकरुणानन्तरं स्थायिनः शृङ्गारस्योपक्रममाह । एषा चेति ।
साध्वसं भयम् ।

---

१६४ °व्वाह्मि for °व्वम्हि E. N.; वि for अ N.; सिरिमाहव for मा-री A.; सिरि for सिरी Bh. K1. K2. O.; B. om. सिरी; हत्थ for सहत्थ K1. K2. N. O.; मणो B. K1. मण Bh. K2. N. O. for मणु; बहुल for वउल K1.

१६५ जीविद for मालदी B.; जीविद after मालदी A. Bh. C. E. K1. K2.; °सेसा Bh. K1. °(से?)सेण K2. for सेसं; प्पिय for पिअ O.; K1. K2. om. दट्ठव्वा; सव्वदा K1. K2. सव्वहा N. O. for सव्वधा ; K1. om. हिअए; हिअएण for हिअए N.; °अत्ति Bh. K1. K2. °यत्ति O. for °एत्ति.

१६६ बकुलमालाम् after कण्ठाद् N.; अवतीर्य B. उन्मुच्य N. O. for अपनीय; हृदये for हृदि Bh. C. K1.; न्यस्य for विन्यस्यन्ती N.; °सोप° for °साप° A. B. C. K1. K2. N.

माध० । अपवार्य । हन्त ।

एकीकृतस्त्वचि निषिक्त इवावपीड्य
निर्भुग्नपीनकुचकुड्मलयानया मे । १७०
कर्पूरहारहरिचन्दनचन्द्रकान्त-
निःस्यन्दशैवलमृणालहिमादिवर्गः ॥

माल०। स्वगतम् । अहो लवङ्गिआए मालदी विप्पलद्धा । (क)

माध० । अयि स्वचित्तवेदनामात्रनिवेदिनि परव्यथानभिज्ञे इयमुपालभ्यसे । १७५

---

( क ) अहो* लवङ्गिकया मालती विप्रलब्धा ।

---

१६८—१७२. हन्त हर्षे । एकीत्यादि । अनया मालत्या कर्पूरादिवर्ग एकीकृतः सन्नालिङ्ग्य मे त्वचि निषिक्त इव । स्पर्शस्य त्वगिन्द्रियग्राह्यतया त्वचीत्युक्तम् । निर्भिन्नौ निरन्तरावलग्नौ पीनौ स्तनकुड्मलौ यस्यास्तया । हरिचन्दनं चन्दनविशेषः । निःस्यन्देन द्रव्याभिधानम् ॥ कृदभिहितो भावो द्रव्यवत्प्रकाशत इति न्यायात् ॥ निःस्यन्दीति पाठे निस्यन्दिनः सरसाः शैवालादय इत्यर्थः । अनेन प्रशान्तो मे कामजस्ताप इत्युक्तम् । बहूपमेयम् ।

१७४—१७९. आत्मानुरागप्रकाशनायानुभूतवेदनामाह । अयीति ।

---

१६८. N. om. हन्त.

१६९ °स्त्वति for °स्त्वचि O.; निषक्त for निषिक्त A. B. K1.; उपपीड्य for अवपीड्य C.

१७० निर्भिन्न for निर्भुग्न Com. K2., कुड्डुल for कुड्मल B. Bh. E. O.

१७२ निस्यन्द K1. O. निष्यन्द K2. for निःस्यन्द; शैशव Bh. शेवल K2. for शैवल

१७३ Bh. K1. K2. N. O. om. स्वगतं; अह्महे for अहो N.; मालती for मालदी N.; विप्पलंभप्पमादो Bh. विप्पलंभप्पसादो K1. K2. विप्पलंभो पडन्तो N. विप्पलंभिदा O. for विप्पलद्धा.

१७४ आत्म for स्व Bh. K1.; A. om. चित्त; वेदिनि Bh. N. वादिनि K1. for निवेदिनि; चित्तवेदना for व्यथा N.

१७५ इदमु° for इयमु° Bh. K1. K2.

* लवंगिकाया मालतीविप्रलंभप्रसादः Com.

उद्दामदेहपरिदाहमहाज्वराणि
संकल्पसंगमविनोदितवेदनानि ।
त्वत्स्नेहसंविदवलम्बितजीवितानि
किं वा मयापि न दिनान्यतिवाहितानि ॥

१८० लव० । सहि उवालम्भणिज्जेव उवालद्धासि । ( क )

( क ) सखि उपालम्भनीयैवोपालब्धासि ।

उद्दामेत्यादि । एतादृशानि दिनानि मयापि किं वा नातिक्रान्तानि । अपि त्वतिक्रान्तान्येव । किं वेति संभावनायाम् । यद्वा । किं निषेधे वैवार्थे । कीदृशानि । उद्दाम उद्भटो देहदाह एव महाज्वरो येषु । एतेनोद्वेग उक्तः । संकल्पसंगमेनापनीता व्यथा येषु । अनेनोन्माद उक्तः । यदाह ।

बाहू प्रसार्य गमनं संकल्पाकल्पिते प्रिये ।
निवृत्तिः सहसान्यस्मिन्नुन्मादे हि प्रजायते ॥

यद्वा । संकल्पसंगमेनान्यस्त्रीद्वेषः सूचितस्तेन च निःसपत्नीकत्वं कन्याहरणबीजमाह । यदाह । आसक्तिं वा दर्शयेत्सुखमनुपहतमेकपत्नीकत्वे वा वर्णयेदिति । त्वदीयस्नेहज्ञानेनावलम्बितं जीवितं येषु । त्वत्स्नेहाज्ञाने मम मरणमेव स्यादित्याशयः ॥ उपलब्धिश्चित्संविदित्यमरः ।

१८०-१८९. अर्हणीयर् ॥ अत्र सरसत्वेन शृङ्गारादित्वेन रम्यता । यदाह ।

शृङ्गारकरुणावेव रसेष्वादौ प्रकीर्तितौ ।

१७७ विनोदनवेदनानि B. निवेदितवेदनानि C. for वि-नि.

१८० उपा° for उवा° K2.; °लम्भणिज्जं A. O. °लंभणिज्जं जेव्व Bh. K1. °लम्भणिज्जेण K2. °लहणिज्जे N. for °लम्भणिज्जेव.

कल० । अहो सरसरमणीअदा संविहाणस्स । (क)

मक० । महाभागे एवमेतत् ।

त्वं वत्सलेति कथमप्यवलम्बितात्मा
सत्यं जनोयमियतो दिवसाननैषीत् ।
आबद्धकङ्कणकरप्रणयप्रसाद-
मासाद्य नन्दतु चिराय फलन्तु कामाः॥ १८५

लव० । महाणुभाव हिअए वि अप्पडिहदसअंगाहसाहसो अअं जणो किं दाणिं कङ्कणाभरणं करं विअरिदि । (ख)

---

(क) अहो सरसरमणीयता संविधानस्य ।

(ख) महानुभाव हृदयेप्यप्रतिहतस्वयंग्राहसाहसोयं जनः *किमिदानीं कङ्कणाभरणं करं † विचारयति ।

---

संविधानं नायिकासंघट्टनप्रकारः । त्वमित्यादि । त्वं वत्सला सस्नेहेतिहेतोरयं जनो माधवो विधृतजीवितः सन्सत्यमियद्दिनानि कथमप्यनैषीन्नीतवान् । अत आबद्धकङ्कणो धृतविवाहसूत्रो धृतविभूषणो वा यः करस्तस्य प्रणयो विवाहकाले ग्रहणं तद्रूपं प्रसादं प्राप्य नन्दतु । बहुकालम-

---

१८१ रस for सरस K1.; °णीयदा K2. °णीयता O. for °णीअदा; °हाणअस्स Bh. °धानस्स C. O. °दाणस्स K2. for °हाणस्स.

१८३ °विलाम्बि° for °वलम्बि° Bh.

१८४ यदियतो for °यमियतो C.

१८५ आलब्ध for आबद्ध K2.; प्रणयं for प्रणय K2.

१८६ मायतु for नन्दतु Bh. K1. K2.

१८७ °णुभाअ B. C. E. °भाअ Bh. K1. K2. N. for °णुभाव; O. om. वि; अपडि° for अप्पडि° A. B. E.; °गह B. K1. K2. N. °ग्गाह O. for गाह; साहसिओ Bh. साहस K2. for साहसो.

१८८. अयं for अअं K2.; जनो for जणो K1.; दाणीं for दाणिं E.; °हरणे Bh. °हरणं K1. K2. °भरणे N. O. for °भरणं; कारणं Bh. करे N. O. for करं; विचा° for विआ° K2.; °रेइ Bh. °रेदु K1. K2. for °रेदि; महाभाओ A. महाणुभाओ E. after °रेदि.

* तत्किम् Com. † विचारयति महाभागः Com.

१९० मालती। हा हदम्हि। कण्णआअणविरुद्धं किं पि एसा उवण्णस्सदि। (क)

प्रविश्य कामन्दकी। पुत्रि कातरे किमेतत्। मालती कम्पमाना कामन्दकीमालिङ्गति।

काम०। तस्याश्चिबुकमुन्नमय्य।

१९५ पुरश्चक्षूरागस्तदनु मनसोनन्यपरता
तनुग्लानिर्यस्य त्वयि समभवद्यत्र च तव।

---

(क) हा* हतास्मि। †कन्यकाजनविरुद्धं किमप्येषोपन्यस्यति।

---

भीष्टाः संभोगादयः फलन्तु॥ कङ्कणं भूषणे सूत्र इति विश्वः॥ अत्राप्रतिहतः परिगृहीतः। अयं जनो मालती। स्वयमेवास्याः करं गृहाणेत्याशयः। अत्र अम्मका कुलकन्यका। विरुद्धमिति कुलकन्यकाविवाहा दैवार्षब्राह्मा एव शुभा दृश्यन्त इति भावः।

१९१-१९७. स्वयंग्राहविवाहं कर्तुमनर्हमिति मन्यमानां मालतीमाह। पुत्रीति॥ अत्र गौरादित्वान्ङीषित्यवधेयम्॥ कातरे विह्वले। करग्रहभयेन तदङ्गस्पर्शेन माधवस्य दर्शनहर्षेण च मालत्याः कम्पः। यदाह।

---

१८९. A. Bh. C. E. K1. K2. add स्वगतम् before हा; हद्धी हद्धी after हा A.; हा हदास्मि K2. अद्धिट्टं N. हद्धी O. for हा हदम्हि; कणआ K1. अम्मआ K2. अङ्कणा N. कण्णका O. for कण्णआ; जण for अण B. K2. N.; Bh. K1. om. अण; K1. om. किं पि; वा for पि N.; N. om. एसा.

१९०. उवण्णसादि A. B. C. E. K2. उवादिसदि Bh. K1. for उवण्णस्सदि.

१९१. कामन्दकी twice Bh. K1.; N. om. पुत्रि—हा अम्ब (l. 203); वत्स माधव &c. after कामन्दकी N.; क्रन्द° for कम्प° Bh.

१९३. मालत्याः for तस्याः Bh. K1. K2.

१९४. वत्से before पुरः N.; पुरा for पुरः K1. K2. O.

१९५. तनू for तनु Bh.; म्लानिर्यस्य B. N. ज्या (corrected into ग्ला in marg.) निर्यस्य O. for ग्लानिर्यस्य; तव च for च तव B.

* हा धिक् हा धिक् after हा Com. † अम्मका for कन्यका Com.

युवा सोयं प्रेयानिह सुवदने मुञ्च जडतां
विधातुर्वैदग्ध्यं विलसतु सकामोस्तु मदनः ॥

लव०। भअवदि कसणचउद्दसीरअणीमसाणसंचारणिव्वत्ति-

---

शीतभयहर्षरोषस्पर्शजरासंभवः कम्पः ।

नर्मस्फोटोयम् । यदाह ।

नर्मस्फोटस्तु भावानां देहस्थानां प्रकाशनम् ।

चिबुकमुन्नमय्यौष्ठाधः प्रदेशमुत्तोल्य ॥ अधः स्याच्चिबुकमित्यमरः ॥ पुरावृत्तं संकलय्याह । पुर इत्यादि । प्रथमं नेत्रप्रीतिरथ मनसस्तद्गतत्वं शरीरग्लानिश्च त्वद्विषये यस्याभूद्यद्विषये तवाप्येतादृशा अभूवन्हे सुमुखि सोयं युवा प्रेयान्प्रियतमः । अतो जडतां कार्याप्रतिपत्तिं त्यज गान्धर्वविवाहपरा भवेत्याशयः । तेन धातुः प्रयत्नो विलसतु । कामः पूर्णेच्छो भवतु । आत्मव्यापारस्त्वनौद्धत्याय नोक्तः । इह चक्षूरागादिकं कामावस्था । यदाह ।

चक्षुःप्रीतिर्मनःसङ्गः संकल्पोत्पत्तिरेव च ।
निद्राच्छेदस्तनुत्वं च व्यावृत्तिर्विषयान्तरात् ॥
लज्जाप्रणाश उन्मादो मूर्च्छामरणमेव च ॥ इति ।

मनसोनन्यपरतया मनःसङ्गसंकल्पोत्पत्ती उक्ते । ग्लानिरित्यनेन निद्राच्छेदादयो मूर्च्छान्ता उक्ताः। तेषां ग्लानिहेतुत्वात् । अत्र च पुरस्तदन्वित्यादिना हेतुफलभावः सूचितः । युवत्वप्रियत्वे प्रवृत्तिहेतू उक्ते । प्रियश्च

यो विप्रियं न कुरुते न चायुक्तं प्रभाषते ।
तथार्जवसमाचारः स प्रियः परिकीर्तितः ॥

इति भरतोक्तः ॥ तत्रापि प्रकर्षे इयसुन् ॥ जडताप्रियदर्शनात् ।

१९८–२११. अत्र कृष्णरजनी कृष्णपक्षचतुर्दशीरात्रिः । विष-

---

१९८. N. om. भअवदि; किसण for कसण N. O.; °इसीए B. °इसि Bh. K1. K2. for °इसी; B. om. रअणी; रअणि for रअणी Bh. K1. K2.; म्मसाण for मसाण K1.; संचरण for संचार A. B. C. E.; णिव° for णिव्व° A. Bh. C. E.; °ह्रिद Bh. °ह्रिद K1. K2. for °त्तिद.

दविसमव्ववसाअणिव्वापिअचण्डपासण्डपअण्डदोद्दण्डसाहसो
२०० साहसिओ क्खु एसो । अदो पिअसही उक्कम्पिदा । ( क )
मक० । स्वगतम् । साधु लवङ्गिके साधु । अवसरे खल्व-
नुरागोपकारयोर्गरीयसोरुपन्यासः ।
माल० । हा ताद हा अम्ब । ( ख )

---

(क) भगवति कृष्ण*चतुर्दशीरजनीश्मशानसंचारनिर्वर्तितवि-
षमव्यवसायनिर्वापित†चण्डपाखण्डप्रचण्डदोर्दण्डसाहसः साहसिकः
खल्वेषः । अतः‡ प्रियसख्युत्कम्पिता ।
(ख) हा तात हा अम्ब ।

---

मव्यवसायो महामांसविक्रयः । निर्वापितो निहतः । पाखण्डोघोरघ-
ण्टः । साहसं स्त्रीवधरूपम् । साहसिकाद्धि भयं भवत्येव । तथा च
प्राणदानेन माधवक्रीतमात्मानं कथं न समर्पयसीति भावः । [मा०
वा०] साहसविवाहारम्भाद्दुर्जनभयात्पित्रादिवियोगाशङ्कनाच्च खेदे हा-
शब्दः ॥ उत्तंसः कर्णपूरे च शेखरे च प्रकीर्तित इति विश्वः ॥

---

१९९. वव° for व्वव° Bh. C. K1. K2. N.; वेअ B. साहसो N. after °साअ; णिव्वापिअ A. णिव्वाविद Bh. णिव्वविदK1. N. णिव्वाविद K2. णिव्वविय O. for णिव्वापिअ; B. om. पासण्ड; C. K1. K2. N. om. पअण्ड; प्पयंड for पअण्ड O.; C. om. दोद्दण्ड; दंड for °द्दण्ड Bh.; K1. K2. om. साहसो; °हसे for° हसो Bh.
२००. N. O. om. साहसिओ; °सिको for °सिओ B. C.; खु for क्खु Bh. K1. K2. O.; मे after अदो K2.; प्पिय for पिअ O.; णुक्कंप्पिदा for उक्कम्पिदा Bh.
२०१. B. K1. K2. N. om. स्वगतं; स्थाने for अवसरे N.
२०२. रागो° for अनुरागो° B. C. E.
२०३. स्वगतम् after माल० N.; N. om. हा ताद.
* Com. om. चतुर्दशी. † निर्वापित Com. ‡ अतोमे Com.

काम० । वत्स माधव ।

माध० । आज्ञापय । २०९

काम० । इयमशेषसामन्तमस्तकोत्तंसपरागरञ्जितचरणाङ्गुलेरमात्यभूरिवसोरेकमपत्यरत्नं मालती भगवता सदृशसंयोगरसिकेन वेधसा मन्मथेन मया च तुभ्यं दीयते । इति रोदिति ।

मक० । फलितं नस्तर्हि भगवतीपादप्रसादेन । २१०

माध० । तत्किमिति बाष्पायितं भगवत्या ।

काम० । चीवराञ्चलेन नेत्रे प्रमृज्य । विज्ञापयामि कल्याणिनम् ।

---

अङ्गुलिपद्देन चरणाग्रे प्रणामादधृष्यतोक्ता । अन्योन्यदर्शनेन धात्रा । प्रीतिजननात्कामेन । चौरिकाविवाहान्मयेत्याशयः । बाष्पायितमुद्गतबाष्पं वृत्तम् । मातृवत्स्नेहेनेदमुपपन्नम् ।

---

२०४. B. C. E. om. माधव.

२०६. भुवन after अशेष B.; °न्तको° for °न्तमस्तको° Bh.

२०७. °लिर° for °लेर° Bh.; °रेकापत्य° for रेकमपत्य° B. Bh.; K1. K2. om. मालती; नाम after मालती B.; वस्तु for संयोग N.

२०८. च before मया Bh. C. K2.; प्रदीयते for दीयते A.; N. om. इति-ति.

२१०. हि after फलितं A. K2. N. O.; E. N. om. नः; समीहितं after नः K2.; °वत्याः for °वती N.; Bh. K1. K2. N. om. पाद.

२११. Bh. N. O. om. माध० । but O. has it in margin; इव for इति Bh. O.; आननं before भग° N.; °वत्याः for °वत्या N.

२१२. चीर for चीवर C. K2. N.; आननं for नेत्रे O.; परिमृज्य A. B. Bh. K1. K2. अपमृज्य O. for प्रमृज्य; वत्स किमपि for विज्ञापयामि N.

२१३. त्वां वक्तुकामास्मि after °णिनम् N.

माध० । नन्वाज्ञापय ।

२१९ काम० । परिणतिरमणीयाः प्रीतयस्त्वद्विधाना-
महमपि तव मान्या हेतुभिस्तैश्च तैश्च ।
तदिह सुवदनायां तात मत्तः परस्ता-
त्परिचयकरुणायां सर्वथा मा विरंसीः ॥

इति नन्तुमिच्छति ।

---

२१९—२२०. परिणतीत्यादि । त्वद्विधानां कुलादिमतां प्रीतयः परिपाकरम्या भवन्ति । अधुनावश्यत्वेन परिणतिपदम् । तैस्तैर्हेतुभिः पितृबन्धुत्वोपदेशकत्वादिभिरहं तव मान्या । हेतूनां बहुत्वेन वीप्सा । तत इह मालत्यां मत्तः परस्तान्मत्परोक्षे परिचयरूपकरुणायां मा विरंसीर्मा विरतो भविष्यसि । करुणाया इति पाठे जुगुप्साविरामप्रमादार्थानामुपसंख्यानमिति पञ्चमी ॥ तातेति सर्वं ततं व्याप्तमनेनेति तात व्यापक हे । यद्वा । तातो विधेयः ॥ तातो विधेये जनक इति विश्वः ॥ विरंसीरित्यत्र माङि लुङिति भविष्यति लुङ् ॥ वात्सल्यात्प्रपन्नानुकम्पातः । अतिक्रमोन्यथात्वम् । अत्र माला नाम नाट्यालंकारकथनम् । यदाह ।

---

२१४. B. N. om. ननु.

२१५. °स्ताद्वि° for °स्त्वद्वि° K2.

२१६. वयं for अहं N.

२१७. परस्मात् for परस्तात् N.

२१८. °णायाः for °णायां N.

२१९. Bh. K1. K2. O. om. इति but O. gives it in margin; N. om. इति—°च्छति; पादयोः पतितुम् A. Bh. K1. K2. गंतुम् O. for नन्तुम्.

माध० । वारयन् । अहो वात्सल्यादतिक्रामति प्रसङ्गः । २२०

मक० । भगवति

श्लाघ्यान्वयेति नयनोत्सवकारिणीति
निर्व्यूढसौहृदभरेति गुणोज्ज्वलेति ।
एकैकमेव हि वशीकरणं गरीयो
युष्माकमेवमियमित्यथ किं ब्रवीमि ॥ २२५

काम० । वत्स माधव ।

माध० । आज्ञापय ।

काम० । वत्से मालति ।

---

माला बहूनां हेतूनां निर्देशः साध्यसिद्धये ॥ इति ।

२२२—२२५. श्लाघ्यान्वयेत्यादि । उज्ज्वलकुला । चक्षुःप्रीतिजननी रूपवती । उपचितसौहार्दातिशयानुरक्ता । गुणोज्ज्वला शीलादिमती । एतत्सर्वं वशीकरणमस्त्येव गुरुतरम् । एवं सति युष्माकमियमिति हेतोरनन्तरं किं ब्रवीमि । अतः परं न वाच्यमस्तीत्यर्थः । इतिकारचतुष्टयं स्वरूपोपदर्शनाय । तथा च त्वदभ्यर्थना सहजसिद्धैवेति भावः । इह प्रसिद्धिनामा नाट्यालंकारः । यदाह ।

वर्णने वस्तुनो यत्तु गुणस्योत्कीर्तनं भवेत् ।
प्रसिद्धिरिह सा ज्ञेया नाटके कथिता बुधैः ॥ इति ।

---

२२०. मक° for माध° N. ; निवारयन् A. धारयन् O. for वारयन् ; B. N. om. वारयन् ; B. K2. O. om. अहो; क्रमादति before प्रसङ्गः N.

२२३ °मयीति N. दशेति O. for भरेति.

२२५ काम°। वत्स माधव । माध°। आज्ञापय । काम°। स्वीक्रियतामियम् । माल°। हद्धी हद्धी अम्ममाजणविरुद्धं किं उण उवण्णस्सदि । and पुत्ति कातरे–अम्ब (the portion previously omitted, ll. 191–203) after ब्रवीमि N.

२२६. B. C. E. om. माधव.

२२८. B. C. E. om. मालति; मालति लवाङ्गिके Bh. K1. मा-तील-के K2. O. for मालति.

मालo । आणवेदु भअवदी ।( क )

२३० कामo । प्रेयो मित्रं बन्धुता वा समग्रा

सर्वे कामाः शेवधिर्जीवितं वा ।

स्त्रीणां भर्ता धर्मदाराश्च पुंसा-

मित्यन्योन्यं वत्सयोर्ज्ञातमस्तु ॥

मकo । अथ किम् ।

२३५ लवo । जधा तुम्हे आणवेध । ( ख )

कामo । वत्स मकरन्द त्वमनेनैव वैवाहिकेन मालतीनेप-

---

( क ) *आज्ञापयतु भगवती ।

( ख ) †यथा यूयमाज्ञापयथ ।

---

२३०—२३३. प्रेय इत्यादि । वत्सयोर्मालतीमाधवयोरन्योन्य-मेतद्विदितमस्तु यत्स्त्रीणां भर्ता प्रेयः प्रियतमं वस्तु मित्रं सुहृद्बन्धुता बन्धुसमूहः सर्वे ईप्सिताः समग्रा मिलिता शेवधिर्निधिर्जीवनं च । पुरुषाणां धर्मदाराः पाणिगृहीताः प्रेय इत्यादि ॥ बन्धुतेत्यत्र ग्राम-जनबन्धुसहायेभ्यस्तलिति समूहे तल् ॥ निधिर्ना शेवधिरित्यमरः ॥ अनेन गान्धर्वविवाहो दर्शितः । स चानुरागमूलत्वाच्छ्रेष्ठः । यदाह ।

अनुरागात्मकत्वेन गान्धर्वः श्रेष्ठतां गतः । इति ।

२३७—२५४. परिवर्तस्व परिवृत्य गच्छ । जवनिका पिधानप-

---

२२९. लवo । A. N. उभे । Bh. K1. K2. O. for मालo ।; oवती for oवदी Bh.

२३१. संपदो for शेवधिः N. O. च for वा A. Bh. C. E.

२३४. माधo for मकo N.

२३५. भअवदी C. E. भअवादि A. B. before जधा; जह B. N. जहा Bh. K1. for जधा ; B. C. E. om. तुम्हे; आणवेदि for आणवेध C. E.

२३६. B. om. मकरन्द ; N. om. त्वं ; B. K1. om. एव ; वैवाहिकनैपथ्येनापवारितः प्रवर्तस्व परिणयाय आत्मनः for वैवा–त्मानं N.; K1. K2. om. मालती.

* Com. has लवo वाo before this. † Com. with A.

थ्येन प्रसाधितः परिणाययात्मानम् । इति पेट्टालकमर्पयति ।

मक० । यथाज्ञापयति भगवती । यावदितश्चित्रजवनिकामन्तर्धाय नेपथ्यं धारयामि । तथा करोति ।

माध० । भगवति सुलभबह्वनर्थमतिसंकटमिदं वयस्यस्य । २४०

काम० । आः कस्त्वमस्यां चिन्तायाम् ।

माध० । एवं भगवत्येव जानाति ।

---

टः । तत्रान्तर्धानम् । स्त्रीणामग्रे स्त्रीवेषादिकरणेनौचित्यात् । मालत्यस्मि संवृत्त इत्यनेन वैमूढकनामा भाव उक्तः । यदाह ।

वैमूढकं तु लास्यं स्यात्पुंसः स्त्रीवेषधारणम् ॥ इति ।

सस्मितमिति क्रियाविशेषणम् । मुहूर्तमित्यनेनानन्तर एव विच्छेद उक्तः । कामयिष्यत इत्यनेन पराङ्कावतारः कृतः । अनुपलम्भार्थमाह । वृक्षगहनेनेति । गहनेन वनेन विषमेन वा ॥ गहनं विषमे त्रिष्विति विश्वः ॥ उद्वाहमङ्गलं विवाहार्थं कर्म । गाढेत्यादि । तद्भुवो भागा उद्यानवाटिकायाः प्रदेशा वां युवयोः श्रेयः शृङ्गारादिकं विधास्यन्ति शृङ्गारस्योपवनविहरणजन्यत्वात् । यदाह ।

उपवनगमनविहारैः शृङ्गाररसः समुद्भवति ॥

---

२३७. °धितशरीरः for °धितः E.; परिवर्तस्व after प्रसाधितः K2; परिणय for परिणायय A. Bh. C. E. K1. K2. O.; N. om. इति; पेट्टालम् A. पिट्टालकम् B. Bh. पट्टालकम् C. पेटलकम् K1. K2. पटलकम् N. पेटालकम् O. for पेट्टालकम्.

२३८. यदा° for यथा° A. K1. K2. N.; °यसि for °यति N.; N. om. भगवती; एतत् for इतः Bh.; यवनिका° for जवनिका° N.; °कायाम् for °काम् Bh. K1.

२३९. °धाप्य for °धाय N.; नैपथ्यं for नेपथ्यं N.; रचयामि for धारयामि B.; °रोमीति निष्क्रान्तः for °रोति Bh.

२४०. सुलभमपि वञ्चनं ब° Bh. सुलभमपि वचनं ब° K1. K2. सुलभमपि ब° N. O. for सु-ब°; Bh. K1. K2. om. अनर्थम्; Bh. K1. K2. N. om. अति; Bh. K1., K2. N. om. इदं; इति after वयस्यस्य. B.

२४१. N. O. om. आः.

२४२. Bh. K1. K2. O. om. एव.

प्रविश्य मकरन्दः । विहसन् । वयस्य मालत्यस्मि । सर्वे स-
कौतुकं पश्यन्ति ।

२४५ माध० । मकरन्दं परिष्वज्य सोपहासम् । भगवति कृतपुण्य
एव नन्दनो यः प्रियामीदृशीं कामयिष्यते ।

काम० । वत्सौ मालतीमाधवौ इतो निर्गत्य वृक्षगहनेन
गम्यतामुद्वाहमङ्गलार्थमस्मद्विहारिकायाः पश्चादुद्यानवाटः ।

---

कीदृशाः । ताम्बूली पर्णलता तासां समूहैः पिनद्धा वेष्टिताः फलिनाः
फलयुक्ता अत एवानता क्रमुकवृक्षा येषु ते ॥ सापेक्षकत्वेपि ग-
मकत्वात्समासः ॥ कीदृशैः । गाढोत्कण्ठा यस्याः सा च कठोरा
तृतीययौवनवयाः केरलदेशवधूस्तस्याः कपोलवदवपाण्डुरीषद्धूसरश्छ-
दः पत्रं येषां तैः ।

रतिसंभोगे दक्षा प्रतिपक्षासूयिका गुणाढ्या च ।
अनिभृतगर्वितचेष्टा सा विज्ञेया तृतीया तु ॥

इति भरतः । अत एवोत्कण्ठाधिक्यम् । केरलदेशजत्वेन गौरत्वमु-
क्तम् । अतः पीतिमसंबन्धाच्छ्वेत ईषत्पाण्डुरत्वम् । यदाह ।

सितपीतसमायोगादीषत्पाण्डुरिति स्मृतः

पिनद्धेति वष्टि भागुरिरल्लोपमित्यल्लोपे रूपम् । फलिन इति फलबर्हा-

---

२४३. मालतीवेशधारी before मक° C. ; विहस्य for विहसन् Bh. K1. N. ; B. om. विहसन् ; N. O. om. वयस्य ; संवृत्ता B. संवृत्तः Com. after अस्मि.

२४४. °विस्मयं च for °कौतुकम् N.; सकौतुकस्मितं for स-कं O.

२४५. Bh. K1. K2. N. O. om. मकरन्दं ; Bh. K1. K2. N. O. om. सोपहासम्.

२४६. एष for एव K1. K2.; यतः for यः N.; प्रियवयस्यमीदृशं for प्रियामीदृशीं N. O.; एतादृशीं for ईदृशीं Bh. K1. K2.; मनसा मुहूर्तमपि A. N. मनसापि O. before काम°; °ष्यति for °ष्यते A. B.

२४७. गहनं B. गहने Bh. C. K1. K2. for गहनेन.

२४८. निर्गम्यताम् for गम्यताम् A.; अस्ति च तत्र विहाराय for अस्म-याः N.; वाटिकायाः A. वाटिकायां B. for विहारिकाया.

सुविहितं तत्र वैवाहिकं द्रव्यजातमवलोकितया । भूयश्च

गाढोत्कण्ठकठोरकेरलवधूगण्डावपाण्डुच्छदै- २५०

स्ताम्बूलीपटलैः पिनद्धफलितव्यानम्रपूगद्रुमाः ।

कङ्कोलीफलजग्धिमुग्धविकिरव्याहारिणस्तद्भुवो

भागाः प्रेङ्खितमातुलुङ्गवृतयः प्रेयो विधास्यन्ति वाम् ॥

गत्वा च तत्रैव मकरन्दमदयन्तिकागमनं यावत्स्थातव्यम् ।

---

भ्यामिनज्मत्वर्थीयः ॥ तथा कक्कोलीफलस्य जग्ध्या भक्षणेन मुग्धाः प्रीता ये विकिराः पक्षिविशेषास्तेषां व्याहार उक्तिर्येषु ते ॥ कक्कोली बदरी कोलीत्यनेकार्थः ॥ भूमिं नखैर्विलिख्य ये चरन्ति ते विकिराः ॥ नगौको वाजिविकिरविविष्किरपतत्रय इत्यमरः ॥ अदो जग्धिः ॥ व्याहार उक्तिर्लपितमित्यमरः ॥ तथा प्रेङ्खिता वातेन चालिता मातुलुङ्गवृतिर्वेष्टनं येषु ते । तथा चैवंविधनानागुणवनगमनेन सर्वमनोरथसिद्धिस्ते भविष्यतीति भावः । मातुलुङ्गश्छोलङ्गवृक्षः ॥ रुचको मातुलुङ्गक इत्यमरः ॥

२५५-२६२. कल्याणान्तरावतंसा मकरन्दविवाहकल्याणभूषणा माधवविवाहसंपत्तिः । कलहंसकवाक्ये [ दिष्ट्येत्यादि ] । मकरन्दवि-

---

२४९. संविहितं Bh. संनिहितं C. विहितं E. संविहितः K1. सुविहितः K2. सुसंविहितं O. for सुविहितं ; च before तत्र B. C. E. ; एव after तत्र A. K2. N. ; B. om. वैवाहिकं ; °हिक for °हिकं A. ; मङ्गल for द्रव्य K1. K2. ; सर्वं संपादितमास्ते after °तया. A. Bh. K1. K2.

२५१. फलिन for फलित A. Bh. E.; व्यानद्ध for व्यानम्र Bh.

२५२. कक्कोली Bh. Com. तङ्कोली N. for कङ्कोली.

२५३. भोगाः for भागाः O.; मातुलङ्ग A. मातुलिंग B. C. E. K1. O. for मातुलुङ्ग; श्रेयो for प्रेयो B. Bh. K1. K2. O.

२५४. अत्र: N. यतः O. for गत्वा ; Bh. K1. N. O. om. च ; B. om. एव, मदयंतिकामकरंदयोरागमनं for मक-मनं N.; मंगल for आगमनं. B. E.

२५५ माध० । सहर्षम् । कल्याणावतंसा हि कल्याणसंपदुपरिष्टा-
द्भवति ।

कल० । दिट्ठिआ एव्वं पि णो भविस्सदि । (क)

मक० । कथं संदेह एवात्र भवतः ।

लव० । सुदं पिअसहीए । (ख)

२६० काम० । वत्स मकरन्द भद्रे लवङ्गिके इत इतः प्रतिष्ठामहे ।

(क) दिष्ट्या एवमपि नो भविष्यति ।
(ख) श्रुतं प्रियसख्या ।

---

वाहेनाप्यस्माकं प्रमोदः स्यादित्यर्थः । संभोगार्थं विजनकरणाय कर्त-व्यमकरन्दविप्रलम्भार्थं च सर्वेषां निष्क्रमणमाह वत्स इत्यादि ।[माल० वा०] सखि त्वयापि गन्तव्यम् । एकाकिन्या मयात्र कथं स्थातव्यमिति भावः । [ल० वा०] सांप्रतं खलु वयमत्रावशिष्यामहे । यूयं सर्व एव स्वार्थं चलिता इत्यर्थः ।

२६५–२६८. आमूलेत्यादि । अस्या रम्यं हस्तं हस्तेन गृह्णामि । यथा सरस्या ईषद्रक्तपद्मं मनोज्ञं हस्ती करेण स्थूलहस्तेन गृह्णाति तथे-

---

२५५. Bh. K1. K2. N. O. om. सहर्षं; N. O. om. कल्या-हि; °णान्तरावतं° A. K1. K2. °णान्तरवत Bh. for °णावतं°; °दुपर्युपरि for उपरि° Bh. K1. K2.

२५७. दिट्ठिया K1. O. कहं N. for दिट्ठिआ; एदं A. Bh. K1. K2. एवं O. for एव्वं; B. Bh. E. K1. om. णो भोदि for भ-दि C.

२५८. माध° for मक° A.; असंदेह for संदेह O.; N. om. एवात्र; भगवत्याः for भवतः O.

२५९. तुए for पिअसहीए B.; प्पिय for पिअ O.

२६०. वत्से for भद्रे A. B. C. E.; N. O. om. one. इतः; प्रविशामः for प्रतिष्ठामहे Bh.

मालo। सहि तुए वि गन्तव्वं। (क)

लवo। विहस्य। संपदं क्खु अम्हे एत्थ उवराम। (ख)

इति निष्क्रान्ताः कामन्दकीलवङ्गिकामकरन्दाः।

माधo। अयमहमिदानीम्।

आमूलकण्टकितकोमलबाहुनाल-
मार्द्राङ्गुलीदलमनङ्गनिदाघतप्तः। २६५

---

(क) सखि त्वयापि गन्तव्यम्।

(ख) सांप्रतं खलु वयमत्रावशिष्यामहे।

---

त्यर्थः। कोमलाङ्ग्याः कर ईषद्रक्त एवेति साम्यम्। कीदृशम्। आमूलं कक्षादेशपर्यन्तं कण्टकितो रोमाञ्चितः कोमलो बाहुरेव नालं यस्य तम्॥ कण्टकः क्षुद्रशत्रौ च रोमाञ्चेपि च दृश्यत इति विश्वः॥ आर्द्राङ्गुल्य एव दलानि पत्राणि यस्य तम्। रोमाञ्चितत्वार्द्रत्वे सात्त्विकभावात्। अहं कीदृशः। अनङ्ग एव ग्रीष्मस्तेन तप्तः। तथा च कामतापप्रशान्त्यर्थं करग्रहणमित्यर्थः। पद्मस्याप्युद्धृततया तस्य कण्टकितकोमलनालत्वमार्द्रपत्रत्वंच भवति। गजोपि ग्रीष्मतप्तः। पद्मपक्ष आमूलं कन्दपर्यन्तम्। तदनेनानन्तरकर्तव्यताध्यवसायस्य धैर्यमुक्तम्।

---

२६१. लवंगिए before तुए Bh. K1. K2.; गंदव्वं for गन्तव्वं B. Bh. K1.

२६२. O. om. क्खु; खु for क्खु Bh. K1. K2.; वअं for अम्हे A.; उवचरामो A. तुवरामो B. E. K1. K2. उचरामो C. O. अवसरामो N. for उवराम.

२६३. O. om. इति; निष्क्रान्ता काम-रन्दश्च B. C. E.

२६४. इदानीमहं for अहमिदानीं O.

अस्याः करेण करमाकलयामि कान्त-
मारक्तपङ्कजमिव द्विरदः सरस्याः ॥

इति निष्क्रान्ताः सर्वे ।

२७० ॥ चौरिकाविवाहो नाम षष्ठोऽङ्कः ॥

---

सूते स्म यं रत्नधरः पवित्रः पवित्ररूपा दमयन्तिकापि ।
जगद्धरं तत्कृतटिप्पणेऽङ्कः षष्ठोऽगमद्भव्यरसाधिवासः ॥

॥ इति षष्ठोऽङ्कः ॥

---

२६९. N. om. सर्वे.

२७०. मालतीमाधवे चौरिकाविवाहो नाम A. मालत्युपहारो नाम B. मालतीमाधवे मालती-स्वयंवरो नाम Bh. श्रीमालतीमाधवे नाटके चौरिकाविवाहो नाम K2. for चौरि-म; C. E. N. O. om. चौरिकाविवाहो नाम ;] समाप्तः after अङ्कः C.

## ॥ सप्तमोऽङ्कः ॥

ततः प्रविशति बुद्धरक्षिता ।

बुद्ध० । अम्महे सुसिलिट्ठमालदीणेवच्छलच्छीविप्पलद्धणन्दणकिदकरग्गहो अमच्चभूरिवसुमन्दिरे भअवदीवअणसंविहाणेहिं खेमेण गोवाइदो मअरन्दो । अज्ज अम्हे पि णन्दणावासं

---

(क) अम्महे सुश्लिष्टमालतीनेपथ्यलक्ष्मीविप्रलब्धनन्दनकृतकरग्रहोमात्यभूरिवसुमन्दिरे भगवतीवचन*संविधानैः क्षेमेण गोपायितो मकरन्दः । † अद्य वयमपि नन्दनावासमुपगताः । ततो भगवती नन्दनमापृच्छ्य गतावसथम् । अयं च नववधूगृहप्रवेशविरचिताकाल-

---

अधुना मालतीरूपधारिणा मकरन्देन कथं नन्दनविप्रलम्भो मदयन्तिकाहरणं च कृतं भवेदिति प्रबन्धाभिधानाय नियुक्तेव तत्र मयेत्यादिना प्रथमाङ्कसूचितबुद्धरक्षिताप्रवेशः ।

२-१२. अत्र माधवविवाहनिर्वाहाद्धर्षाश्चर्येम्महेशब्दः । सुश्लिष्टत्वं मकरन्दस्य गौरत्वादश्मश्रुलत्वादिना मालतीसाम्यात् । भगवतीति

---

१. प्रविश्य for ततः प्रविशति. N.

२. अम्हें for अम्महे K1. O.: सुसिलिड for सु-ट्ठ Bh.; मालती for मालदी O.; °वत्थ C. K1. K2. °पत्थ B. °पच्छ N. for °वच्छ; लच्छी for लच्छी Bh. O.

३. Bh. N. om. किद; N. om. अमच्च; °वदीए for °वदी N.; °हाणेण A. N. °धाणेहिं. K1. K2. °हाणएहिं O. for °हाणेहिं.

४. खखेमेण for खेमेण B.; गोपा° for गोवा° E.; अज्ज after गोवाइदो N.; मकरन्द for मअरन्दो K2.; C. om. मअरन्दो; नृत्यति A. इति नृत्यति Bh. K1. K2. before अज्ज; अम्हेहि for अम्हेवि N.; Bh. K1. K2. O. om. पि; इमं A. Bh. K1. K2. O. समं N. before णन्दणा°.

* संविधानेन Com. † अयच्च वयमिमं नन्दनावसथमुप° Com.

५ उवगदा । तदो भअवदी णन्दणमापुच्छिअ गदा आवसहं । अअं च णववहूघरप्पवेसविरइदाकालकोमुदीमहूसवप्पउत्तिप-ज्जाउलासेसपरिअणो पदोसो अणुऊलइस्सदि अज्ज णो वव-सिदं । संपदं तुवरन्तकामो कामिणिं कामेदुं बहुसो सपादवन्दणं

कौमुदीमहोत्सवप्रवृत्तिपर्याकुलाशेषपरिजनः प्रदोषोनुकूलयिष्यत्यद्य नो व्यवसितम् । *सांप्रतं त्वरमाणकामः कामिनीं कामयितुं बहुशः सपादवन्दनमभ्यर्थ्य पुनरपि बलात्कारेणाभिद्रवन्मकरन्देन निष्ठुरं प्रति-

भगवत्यैवालंकृत्य प्रहित इत्यर्थः । क्षेमेण कुशलेन । एतत्तु केनाप्यनु-पलम्भात् । गोपायितो गुप्तीकृतः । आपृच्छ्य संवादं कृत्वा । तत्र नन्दन गृहं गच्छामीति तद्भवाननुमन्यतामिति संवादः । आपृच्छिः संवादार्थ इति शाब्दिकाः । अत एवापृच्छस्व प्रियसखममुमिति मेघ-दूतादौ टीकाकृता तथैव विवृतमित्यवधेयम् । आवसथं गृहम् । कौमुद्याश्विनपूर्णिमाव्रतम् । यद्वा । कार्तिक्यां चन्द्रमण्डलपूजा कौ-

५. गआ N. उपगदा O. for उवगदा; तत्थ after °गदा Bh.; भ-दी तदो for त-दी Bh. N.; आउछिअ Bh. K1. आउच्छिआ K2. आउछिय O. for आपुच्छिअ; णि-अवासं गआ for ग-हं N.; गदा after आव° instead of before, O.; °सधं for °सहं. Bh. K1. K2. O.

६. अण्णं for अअं A. B.; N. om. च; वधू for वहू K1.; गिह A. B. C. E. वर O. for घर; °इआ for °इदा N.; O. om. महूसव; पमत्त Bh. C. K1. K2. N. for प्पउत्ति.

७. °व्याउला° for °ज्जाउला° K2.; एसो after परिअणो B.; पउसो Bh. पओसो K1. K2. पजोसो N. प्पदोसो O. for पदोसो; अणुकूल° K1. O. °णुकूल° K2. for अणुऊल°; °यिस्सदि for °इस्सदि K2; Bh. K1. K2. om. अज्ज; K1. K2. om. णो; व्वव° for वव° A. E.

८ क्खु A. खु Bh. K2. O. after संपदं; O. om. कामिणि-सो; Bh. E. K1. N om. कामिणिं; °णीं for °णिं A. C. K2.; कामेद्धं for कामेदुं K1.; वहुसो Bh. बहुस K2. for बहुसो; N. om. बहुसो; वाद for पाद B. E. K1 K2.; पडनं Bh. पडणं N. वडणं O. for वन्दणं.

*Com. with A.

अब्भत्थिअ पुणो वि बलामोडिअ अहिहवन्तो मअरन्देण णिद्धुरं पडिहदो जामादा। तदो सो क्खु अधिअवेलक्खखलन्तअक्खरो १० रोसणिब्भरदुःक्खिदो मदप्पप्फुरन्तणअणो ण मे संपदं तुए

हतो जामाता* । ततः स खल्वधिकवैलक्ष्यस्खलदक्षरो रोषनिर्भरदुः-खितो मदप्रस्फुरन्नयनो न मे सांप्रतं त्वया कौमारबन्धकया प्रयोजन-

मुदीरितम् । तदुभयं च ग्रीष्मे प्रवृत्तमित्यकालकौमुदीत्युक्तम्। यद्वा। जननयनानन्दकत्वेन कौमुदीव कौमुदीति रूपकम् । कौमुदी चन्द्र-ज्योत्स्ना यथाकालसंभवा संध्याकालीना वर्षर्तुभवा जनानन्दाय तथेय-मपीत्यर्थः। अः केशवस्तस्य कालो वर्षाकालः संध्याकालश्च॥ प्रदोषो रजनीमुखमित्यमरः॥ व्यवसितं मदयन्तिकाविवाहरूपम् । अन्य-कार्यव्यावृत्ते जने तदप्रत्यूहं निर्वहेदिति भावः। त्वरमाणेति विल-म्बासहकामावेश इत्यर्थः। तिरस्काराद्वैलक्ष्येण स्खलन्नक्षरैः सह स्वरो यस्य सः। रोषेण निर्भरं व्याप्तम्। खुलुङ्कितमिति पाठे

९. अभ° for अब्भ° Bh.; °त्थिअ Bh. °च्छिअ C. °च्छिय O. for °त्थिअ; Bh. N. O. om. वि; वला° for बला Bh.; °मोडिआ K2. °मोडिएण N. for °मोडिअ; अभि for अहि Bh. K2. N. O.; दवन्तो for हवन्तो A. C.; णिट्ठुर for णिट्ठुरं A.

१०. अहि° N. अभि° O. for पडि°; जामाता Bh. जामादरा C. for जामादा; A. Bh. N. om. तदो; स for सो A. K2.; अ A. K2. खु Bh. O. for क्खु; K1. N. om. क्खु; Bh. N. om. अधिअ; दर after अधिअ A. K2.; वैलक्ख B. K2. N. विलक्ख O. for वेलक्ख; खलदक्खरवैलक्ख for वे-क्खरो Bh.; रोस after °लक्ख B. E. K1. K2.; N. O. om. खलन्तअक्खरो; °न्तक्खर-सुरो for °न्तअक्खरो K2.

११. B. C. E. have सरोस for रोस; °रदुखिदो Bh. °रोखुत्ताङ्किदओ K2. °रोवरुद्ध O. for °रदुक्खिदो; रुदिअ A. रुण Bh. र(रु?)ण्ण K2. रुइद N. for मद; O. om. मद; पप्फु° A. B. C. K2. N. पफु° Bh. प्फु° K1. O. for प्पप्फु°; वअणो Bh. K2. N. वयणो O. for णअणो; सरोसणिब्भरदुक्खिदो मदप्पफुरंतण-अणो in margin, O.; तुए संपदं for सं-ए O.; तुमए A. इमाए N. for तुए;

* जामाता। स चाधिकतरवैलक्ष्यस्खलदक्षरस्वरो रोषनिर्भरसंशुष्कितारुदितप्रस्फुरद्व-दनो Com.

कोमारबन्धईए पओअणं त्ति ससवहं पइण्णं काउण वासभ-
वणादो णिग्गदो त्ति । एदिणा पसङ्गेण मदअन्तिअं आणीअ
मअरन्देण सह संजोजइस्सं । (क)

१५ इति निष्क्रान्ता । प्रवेशकः ।

---

मिति सशपथं प्रतिज्ञां कृत्वा वासभवनान्निर्गत इति । एतेन प्रसङ्गेन
मदयन्तिकामानीय मकरन्देन सह संयोजयिष्ये ।

---

खुलुङ्कितं मौनम् । खुलुङ्कितमाहुर्मुखसंकोचं च काव्यविद इत्य-
भिधानात् । कौमारबन्धकी वेश्या । माधवानुरक्तत्वात् । तदत्र न-
न्दनस्य विवाहदिन एव बलादभिद्रवणेनाधार्मिकत्वम् । कामशा-
स्त्राविज्ञत्वं च दर्शितम् । यदाह ।

सुकुमाराः पुरुषाणामाराध्या योषितः सदा ।
अनिच्छया प्रवृत्तश्चेच्छृङ्गारं नाशयेद्रसम् ॥

बन्धकीति परुषवाक्येन दुराचारत्वमप्यस्य । यदाह ।

ताडनं बन्धनं वा यो न विमृश्य समाचरेत् ।
ब्रूते परुषवाक्यं च दुराचारः स उच्यते ॥

प्रसङ्गेन संविधानकेन । एतेन सूचनात्प्रवेशः ।

---

१२. बन्धइए for बन्धईए Bh.; पयो° for पओ° O.; पउअणित्ति for प-त्ति Bh.; ति for त्ति K1. O.; °सवधं Bh. °सपहं N. for °सवहं; पडिण्णं B. K1. पाडिण Bh. पडिण्णां K2. पदिण्णं O. for पइण्णं; कदुअ B. काऊण Bh. K1. K2. कदुय O. for काउण.

१३. विणिग्ग° Bh. विण्णोग्ग° K1. for णिग्ग°; N. om. त्ति; ता एदेण for एदिणा N.; पसंगेण for पसङ्गेण O.; °अन्दिअं for °अन्तिअं K2.; आणिअ Bh. K1. K2. आणिय O. for आणीअ.

१४. समं for सह N. O.; संजोइस्सं B. जोजइस्सं K1. जोजयिस्सं K2. संयोज-इस्सं O. for संजोजइस्सं; त्ति after °इस्सं N.

१५ N. O. om. इति; परिक्रम्य after इति Bh. K1. K2.

ततः प्रविशति शय्यागतो मालतीवेशो मकरन्दो लवङ्गिका च।

मक०। लवङ्गिके अपि नाम बुद्धरक्षितासंक्रान्ता भगवतीनीतिर्विजेष्यते।

लव०। को संदेहो महाभाअस्स। किं बहुणा जहा एसो २० मञ्जीरसद्दो सुणीअदि तहा जाणामि तेण ववदेसेण

(क) कः संदेहो महाभागस्य*। किं बहुना यथैष मञ्जीरशब्दः श्रूयते तथा जानामि† तेन व्यपदेशेनानीता बुद्धरक्षितया मद-

१६–२३ सुप्तस्य प्रवेशो भरतनिषिद्ध इति शय्यागत इत्युक्तम्। भगवतीनीतेरव्यभिचारित्वेप्याश्रयभेदात्तदाशङ्क्याह। अपीति संभावनायाम्। अव्यभिचारित्वमेवाह। लवङ्गिकावाक्ये। कः संदेहोत्र महानुभावस्य। मदयन्तिकापरिणयोवश्यं भावीति भावः।

१६ गत for गतो K2.; Bh. N. om. मालतीवेशो; °वेषो for °वेशो K1 K2. O.

१७. उपविष्टा Bh. उपविष्टा च K1. K2. before लव°; K1. K2. om. च at end.

१८. B. om. लवङ्गिके; इयं after नाम B.; K1. om. भगवती.

१९. °तिरविपर्यैष्यति A. °तिर्विजेष्य Bh. °तिर्विपर्यैष्यते C. °तिर्विपर्यैष्यते E. °तिः संपद्यते O. for °तिर्विजेष्यते.

२०. कहं for को N. O.; A. B. C. E. have एत्थ before महा;° °णुभाअस्स A. B. °णुभावस्स C. E. °भागस्स K2. भाअ N. for °भाअस्स; सा क्खु निपुणा for किं बहुणा N.; बहुना for बहुणा K2.; जदा K2. जधा O. for जहा; Bh. K1. om. जहा.

२१. एस for एसो Bh. K1. K2. O.; सुणि° for सुणी° K1. K2.; तह K1. K2. तधा O. for तहा; तक्केमि for जाणामि A. Bh. K1. K2.; तेण तेणाव° for तेण वव° Bh.; व्वव° for वव° A. E. K2. O.

* महानुभावस्य Com. † तर्कयामि Com.

आणीदा बुद्धरक्खिदाए मदअन्तिआ त्ति । ता उत्तरीआववा-
रिदो पसुत्तलक्खणो चिट्ठ । ( क ) मकरन्दस्तथा करोति ।

ततः प्रविशति मदयन्तिका बुद्धरक्षिता च ।

२५ मद० । सहि सच्चं जेव्व परिकोविदो मे भादा मालदीए । (क)
बुद्ध० । अध इं । ( ख )

---

यन्तिकेति । तदुत्तरीयापवारितः *प्रसुप्तलक्षणस्तिष्ठ ।
( क ) सखि सत्यमेव †परिकोपितो मे भ्राता मालत्या ।
( ख ) अथ किम् ।

---

अत्र किं बहुना भणितेनेत्यर्थः । मञ्जीरो नूपुरम् । व्यपदेशेन माल-
तीप्रबोधच्छलेन । उत्तरीयेत्युपरिवासः पिहिताङ्ग इत्यर्थः । लक्षेण
व्याजेन । इह नर्मगर्भा कैशिकीवृत्तिः । यदाह ।

कार्यकारणतो यत्र नायको गोपयेत्तनुम् ।
नर्मगर्भः स कथितो नाट्यवेदिभिरुत्तमः ॥

---

२२. आणिदा for आणीदा B. Bh. C. K1. K2. O.; °आए for °दाए N.; अं-
त्तिअं Bh. °अंतिए° C. E. K1. K2. °यंतिए° O. for °अन्तिआ; B. om. त्ति;
°रीओवारिदो A. E. °रीअवारिदो B. °रीआवांतारिदो C. °रीयापवारिदो O. for °री-
आववारिदो.

२३. Bh. om. प-णो; सुत्त for पसुत्त N. O.; लख्खणो A. C. N. लक्खो
E. लच्छणो B. Bh. लख्खेण O. for लक्खणो; चिट्ठदु A. चिष्ट Bh. for चिट्ठ.

२४. °शतो for °शति O.; बुद्ध° मद° for मद° बुद्ध° K1. K2.;° क्षिते for °क्षिता
O.; O. om. च.

२५. सच्च for सच्चं Bh. K1.; भ्भादा for भादा O.

२६. अह for अध N.; इ for इं K1.

* सुप्तलक्षेण Com. † Com. om. परि.

मद०। अहो अच्चाहिदं। ता एहि वामसीलं मालदिं णिब्भच्छेम्ह। (क) परिक्रामतः।

बुद्ध०। इदं वासभवणदुवारं। (ख) प्रविशतः।

मद०। सहि लवङ्गिए जाणीअदि पसुत्ता दे पिअसही त्ति। (ग) ३०

लव०। एहि मा णं पडिबोधेहि जदो एसा चिरं दुम्मणा-

(क) अहो अत्याहितम्। तदेहि वामशीलां मालतीं निर्भर्त्सयावः।

(ख) *इदं वासभवनद्वारम्।

(ग) सखि लवङ्गिके† ज्ञायते प्रसुप्ता ते प्रियसखीति।

(घ) ‡ एहि मैनां प्रतिबोधय § यत एषा चिरं दुर्मनायमानेदानीमे-

२७-२९ अत्रात्याहितमतिक्रमः। निर्भर्त्सयाम इति।

त्रिरात्रं नायकं ज्ञात्वा वाचा हीनं तु कन्यका।
पश्यन्ती स्तम्भवच्छन्नं निर्विद्येत ततः परम्॥

इति भरतानुरोधेन कन्याविस्रम्भपरे मे भ्रातरि व्यर्थमियं रुष्टेति निर्भर्त्सनमस्या इति भावः। बुद्धरक्षितावाक्ये। एतद्वासभवनद्वारम्। तत्प्रविशेति शेषः।

३१-४० अत्र कथमस्माद्दुराचारात्स्यास्यामीति चिन्तया दौर्मनस्यान्निद्रा। यदाह।

२७. Bh. om. अहो; णं before वाम° Kl. K2.; °शीलं A. C. E. सीलां B. for सीलं; णिब्भच्छिअ before माल° N.; °दीं for °दिं C.; णिब्भछेम्ह Bh. Kl. णिब्भत्थेम्ह K2. गच्छम्ह N. णिब्भच्छेम्ह O. for णिब्भच्छेम्ह.

२८. इति before परि° Bh. Kl. K2.

२९. एदं Kl. एमं K2. इमं O. for इदं; °वणं for °वण Bh. Kl. K2. N.; Bh. Kl. K2. N. om. दुवारं; दुआरं for दुवारं O.; ता सहि पविसम्ह after °वणं K2.; इति A. C. E. उभे Kl. K2. N. before प्रविशतः

३०. जाणीहि दाव for जाणीअदि A.; सुत्ता for पसुत्ता O.; ते for दे B.; पिय for पिअ O.; °सहि for °सही Bh. O.; न वे° before त्ति A.; E. Kl. K2. om. त्ति.

३१. सहि before एहि A. Kl. K2. N.; सहि for एहि Bh. O.; एणं for णं K2.; पडिबोधइस्ससि Bh. पडिओधेहि E. पडिवेधेहि Kl. पडिवोधायिस्सादि O. for पडिबोधेहि; Bh. N. om. जदो; हि before चिरं K2.; दुमाणा° for दुम्मणा° Bh.

* एतद् for इदं Com. †Com. with A. ‡सखि before एहि Com. §प्रतिबोधयिष्यसि एषा हि चिरं Com.

अन्ती दाणिं जेव्व ईस मण्णुं उज्झिअ पसुत्तेत्ति । तदो स-
णिअं इध जेव्व सअणुद्धन्ते उवविस । ( घ )

मद० । तथा कृत्वा । सहि दुम्मणाअदि इअं वामसीला।(क)

१५ लव० । कहं णाम णववहूविस्सम्भणोवाअजाणुअं लडहं

---

वेषन्मन्युमुज्झित्वा*प्रसुप्तेति । ततः शनैरिहैव शयनो †ध्वान्त उपाविश ।

( क ) सखि दुर्मनायत इयं वामशीला ।

( ख ) कथं नाम नववधूविस्रम्भणोपायज्ञातारं मनोहरं विदग्धम-

---

आलस्यदौर्मनस्यक्लेशश्रमचिन्तनस्वभावेभ्यः ।

रात्रौ जागरणादपि निद्रा मनुजे दिवापि संभवति ॥

तथा च दुःखहानाय निद्रयापि क्षणं नयत्वियमित्याशयः।अत्र विस्रम्भणं विश्वासमुत्पाद्य वशीकरणम् । लडहं मनोहरम् । विदग्धं कलाभिज्ञम् । नववधूविस्रम्भणोपायस्ताम्बूलादिदानम् । यदाह । बाला ताम्बूलमालाफलरससुरसाहारसंमानहार्येत्यादिकः सुप्रसिद्ध एव । प्रकृते तूपालम्भप-

---

१२. इदाणीं A. C. E. दाणीं K1. K2. for दाणिं; N. om. जेव्व; एसा K2; ईसि N. O. for ईस; माणं Bh. मण्णं K1. दण्णुं K2. मण्णे N. O. for मण्णुं; Bh. N. om. उज्झिअ; परिच्चइअ K1. परिच्चजइ K2. for उज्झिअ; पसु° for पसु° O.; °त्तेति A. B. E. K1. °त्तति Bh. °त्ता इति K2. for त्तेत्ति; इदो C. अदो N. for तदो; N. om. सणिअं.

१३. °रिअं for °णिअं Bh.; इह B. इद K2. एदस्सिं N. इदो O. for इध; N. om. जेव्व; अणुप्पन्ते B. सअणीअद्धन्ते Bh. K2. सअणुप्पन्ते A. C. सअणुप्पंतं E. सहणीअद्धंते K1. सअणध्धम्मि N. for सअणुद्धन्ते; उव for उव C.

१४. Bh. K1. N. O. om. सहि; कीं after सहि A.; °यदि for °अदि K2.; कधं Bh. कथं K1. किं N. after °अदि; K1. om. इअं.

१५. कधं A. O. कथं Bh. for कहं; ण before णव B.; वधू for वहू Bh. K1.; वीस° Bh. O. विस° K1. K2. for विस्स°; °म्भिणो° for °म्भणो° K2.; °वाय for °वाअ K2.; जाणअं B. C. K2. ञ्जाणुअं Bh. ञ्जाणअं K1. जाणयं O. for जाणुअं; मनोहरं B. लडुहं C. लटह K2. for लडहं.

* त्यक्त्वा Com. † शयनीये Com.

विअड्ढमहुरभासिणं ससिणेहं अरोसणं अ दे भादरं भत्तारं समासादिअ सही ण दुम्मणाइस्सदि । (ख)

मद० । बुद्धरक्खिदे पेक्ख विप्पदीअं अम्हे वि उवालम्भीआमो । (क)

---

धुरभाषिणं सस्नेहमरोषणं च ते भ्रातरं भर्तारं समासाद्य* सखी न दुर्मनायिष्यते ।

(क) † बुद्धरक्षिते प्रेक्षस्व ‡विप्रतीपं वयमपि उपालभ्यामहे ।

---

रत्वाद्विपरीतार्थकत्वामिति भावः । विप्रतीपं विपरीतम् । पादपतितनन्दनाननुवर्तनान्मालत्येवोपालभ्या तदकरणाद्विपरीतत्वामिति भावः । पादपतनेनुवृत्तौ भरतः ।

व्रीडायुक्तापि या योषिदतिरुष्टापि या भवेत् ।
पादे पतन्तं पुरुषमनुवर्तेत सर्वदा ॥

बुद्धरक्षितावाक्ये । विप्रतीपं न वा विप्रतीम् । तच्चित्तानुवर्तनेन स्वीकृतयुक्त्या निराकरणेन न वैपरीत्यमिति भावः ।

---

१६. विअढ Bh. विअद्ध K1. N. विरुद्ध K2. वियद्ध O. for विअड्ढ; B. om. विअड्ढ; महुरालाव N. महुरा° O. for महुर; भासणं for भासिणं C. O.; A. Bh. K1. K2. N. om. ससिणेहं; च for अ B.; अकाअरं दे for अ दे N.; दे भाअरं A. दे भ्भादरं O. for दे भादरं; दे after °दरं K2.; पाविअ for समासादिअ Bh. K1. K2.

१७. पिअ before सही A. Bh. E. K1. K2.; N. om. सही; E. om. ण; णो for ण B. O.; दुव्वाइस्सदि Bh. दुम्माइस्सदि K1. दुम्मणायिस्सदि K2. for दु-दि; मे पिअसही after °इस्सदि N.

१८. कहं before बुद्ध° N.; पेक्ख Bh. K1. K2. प्पेक्ख O. before बुद्ध° instead of after; °रक्खिदे for °रक्खिदे Bh. K1.; पेक्ख पेक्ख for पेक्ख A. B.; °दीतं B. °दीवं Bh. N. O. °देवं K1. K2. for °दीअं; K1 N. om. अम्हे वि; उआलंभीआमो C. उपालम्भीआमो K2. उवालम्बह्मि N. उवालंभणीआमो O. for उवालम्भीआमो.

* समासाद्य मे प्रियसखी Com. † सखि before बुद्ध° Com. ‡ पश्य पश्य वयमेव Com.

बुद्ध० । विप्पदीअं ण वा विप्पदीअं । (क)

मद० । कधं विअ । ( ख )

बुद्ध० । जं दाव चलणपडिदो भत्ता ण बहुमाणिदो एत्थ लज्जादोसेण एसो जणो उआलम्भणिज्जो । जं पिअसहि णव-

---

( क ) विप्रतीपं न वा विप्रतीपम् ।

( ख ) कथमिव ।

---

४२–४८ स्वाभिप्रायं गोपायितुं साधारणोक्त्या स्ववचो वदति [ बुद्ध० ] । अत्रेयमिति वक्तव्ये जन इत्याभिधानं मालतीमकरन्द-साधारण्यार्थम् । नववध्वा लज्जयातिक्रमेण दोषः । यदाह ।

नवपरिणीता योषिद्यत्नादपनीय साध्वसं सद्यः ।
विविधविनोदकथाभिर्विश्वासं नीयते सरसैः ॥

रभसोपक्रमः सहसा प्रवृत्तिः स च विरुद्धः । यदाह ।

सहसा वाप्युपक्रान्ता कन्याचित्तमविन्दता ।
साध्वसं त्रासमुद्वेगं सद्यो द्वेषं च विन्दति ॥
सा प्रीतियोगमप्राप्य तेनोद्वेगेन दुःखिता ।
पुरुषद्वेषिणी वा स्याद्विद्विष्टा वा ततोऽन्यगा ॥

---

४०. °दीतं B. °दीवं Bh. K1. N. O. °देवं K2. for °दीअं in both places; वा before ण Bh., at end E. N.; वि for वा A.; C. om. वा.

४१. कथं K1. कहं N. O. for कधं.

४२. °णपडिओ A. E. K1. °णोपणदो Bh. °नोपडिओ K2. °णाणदो N. °णणदो O. for °णपडिदो; वि after पडिदो A. B. C. E.; O. om. बहु; मण्णिदो Bh. मण्णिदो N. for माणिदो; Bh. om. एत्थ-ज्जादो.°

४३. सो for एसो O.; ण after जणो A. C. E. N. O.; उवा° for उआ° Bh. K1. K2. N. O.; णं for जं O.; पि after जं A. C. E. K1.; प्पिय for पिअ O.

बहूविरुद्धरहसोवक्कमक्खलणवेलक्खविच्छडिदमहाणुभावत्तण-
स्स भादुणो दे वाआगदं किं वि अपरिट्ठाणं तेण तुम्हेत्ति। ४५
किं च। कुसुमसधर्माणो हि योषितः सुकुमारोपक्रमाः।
तास्त्वनधिगतविश्वासैः प्रसभमुपक्रम्यमाणाः सद्यः संप्रयोगावि-
द्वेषिण्यो भवन्ति। एवं किल कामसुत्तआरा आमणन्ति। (क)

(क) यत्तावच्चरणपतितो भर्त्ता न बहुमानितोऽत्रलज्जादोषेणैव
जन उपालम्भनीयः। यत्प्रियसखि नववधूविरुद्धरभसोपक्रमस्ख-
लनवैलक्ष्यविच्छर्दितमहानुभावत्वस्य भ्रातुस्ते वाचागतं किमप्य*प-
रिस्थानं तेन यूयमिति। एवं किल कामसूत्रकारा आमनन्ति।

स्खलनमुपक्रान्तानिर्वाहः। विच्छर्दितं विशीर्णम्। अपरिस्थानकमपरि
स्थितिः। अधैर्यमिति यावत्। यूयमुपालभ्या इति मदयन्तिकां प्रति वच-
नम्। भ्रातृपक्षप्रवेशात्। अम्हे इति पाठे बुद्धरक्षिता मदयन्तिकया सह स्वा-
भेदं मन्यमाना वयमित्याह। शिल्पकारित्वात्संस्कृताभयणम्। यदाह।

४४. साहसो° B. C. E. रभसो° N. for रहसो°; °पक्कम for °वक्कम K2. N. O.; विलक्ख for वेलक्ख° O.; विछडिअ Bh. K1. विचक्रन्दिअ K2. विच्छाडिअ N. विब्भड्डिय O. for विच्छडिद; °भाअत्त° for °भावत्त° B. Bh.

४५ भ्भादुणो for भादुणो O.; व° for वाआ° K2.; गमं B. गअं K2. N. for गदं; पि for वि B. Bh. K1. K2. O.; N. om. वि; अपडि° N. अवरि° O. for अपरि°; °ठ्ठाणं Bh. °त्थाणं K1. for ट्ठाणं; Bh. om. तेण तुम्हे त्ति; वि C. जाणीअदि अवरद्धा वि E. जाणीआदि किआवराद्धा N. जाणीयदि अवरद्धा O. after तेण; वअं B. अम्हे N. O. for तुम्हे; त्ति C. ति K1. O. for त्ति.

४६. अ N. य O. for च; संस्कृतमाश्रित्य before कुसुम° A. N.; कुसुमध° B. कुसुमसमध° N. for कुसुमसध°.

४७. E. om. तास्तु; च for तु A. Bh. K1. K2. O.; अधि° for अनधि° Bh.; प्रसभम् after उप° instead of before, O.; संप्रयोगे A. संयोग Bh. प्रयोग K2. for संप्रयोग; E. K2. O. om. वि.

४८ °रिपुरुषद्वेषिण्यो after °षिण्यो N.; किर for किल Bh.; °आरो for °आरा Bh. K1. K2.; भणंति A. C. E. मंतेदि Bh. K1. K2. आमणंदि N. मंतंति O. for आमणन्ति.

* अपरिस्थानक Com.

लव० । साक्षम् । घरे घरे पुरिसा अम्मकाओ समुव्वहन्ति
५० ण क्खु को वि लज्जापराधीणं अणवरद्धं मुद्धललडहसहावं कुल-
कुमारीअणं पहवामि त्ति वाआणलेण पज्जालेदि । एदे क्खु दे हि
अअसल्लणिक्खेवा आमरणं संभरिज्जन्तदूसहा पदिघरणिवास-

(क) गृहे गृहे पुरुषाः कुलकन्यकाः समुद्वहन्ति न खलु कोऽपि लज्जा-
पराधीनमनपराद्धं मुग्धसुकुमारस्वभावं कुलकुमारीजनं *प्रभवामी-
ति वाचानलेन प्रज्वालयति । एते खलु ते हृदयशल्यनिक्षेपा आमरणं

दिव्याया गणिकायाश्च शिल्पकार्यास्तथैव च ।
विदग्धायाः स्त्रिया भाषां संस्कृतेनापि योजयेत् ॥

यद्वा । कामसूत्रानुकरणात्संस्कृतभाषा । सधर्माणस्तुल्याः । उपक्रम
आरम्भः । प्रसभं हठात् । संप्रयोगः सुरतम् । किल प्रसिद्धौ । काम-
सूत्रकारा मन्त्रयन्ते ।

५२-५६. अत्र निक्षेप आरोपणम् । जुगुप्सन्ते निन्दन्ति । दुःशीला

४९. पुरुसा for पुरिसा B. N.; कुलकण्णकाओ A. K2. कण्णआओ B. K1. कण्णकाओ Bh. अम्हगाओ N. for अम्मकाओ; उव्व° for समुव्व° Bh. K1. K2. O.

५०. हु B. C. अ Bh. K1. K2. N. य O. for क्खु; पि for वि Bh.; वराधीणं B. पराहणं Bh. N. पराहीणं C. प्पराहणं O. for पराधीणं; °रद्ध B. °रद्ध Bh. °लद्धं E. for °रद्धं; A. om. मुद्ध; लड B. लडुह C. लहड E. for लडह; N. om. लडह.

५१. °रिआअणं Bh. K1. K2. °रीणं C. °रियाजणं O. for °रीअणं; पहरामीति A. पहवादि त्ति E. पहवामीति K2. प्पहवामित्ति O. for प-त्ति; अणले for °णलेण B; प्पजालेदि Bh. पज्जाकुलेअदि N. प्पज्जालेदि O. for पज्जालेदि; खु for क्खु Bh. K1. K2.; E. om. दे; °न्देमि K1. ते O. for दे.

५२. णिक्खेवा for णिक्खेवा A. B. N.; असरणं Bh. आमरण K2. N. for आमरणं; सुमरिज्जन्त A. Bh. समरिण्णंत B. संस्मरिज्जन्त K2. for संभरिज्जन्त; दुःसहा A. B. C. E. दुस्सहा K2. for दूसहा; आसा after °हा N.; Bh. om. पदि; पर for पदि B. C. E. K1. K2. O.

* प्रहरामीति Com.

वेरग्गकारिणो महापरिभवा जाणं कदे इत्थिआजम्मलाहं जुगुच्छन्ति बान्धवा । ( क )

मद० । बुद्धरिक्खदे अदिदुम्मिदा पिअसही लवङ्गिआ । ५५ महन्तो को वि मे भादुणा वाआवराधो कदो । ( क )

बुद्ध० । अध इं । सुदं अम्हेहिं जधा ण मम तुए संपदं कोमारबन्धईए पओअणं त्ति । ( ख )

---

*संस्मर्यमाणदुःसहाः पतिगृहनिवासवैराग्यकारिणो महापरिभवा येषां कृते स्त्रीजन्मलाभं जुगुप्सन्ते बान्धवाः ।

(क) †बुद्धरक्षिते ‡अतिदूना प्रियसखी लवङ्गिका।§महान्कोपि मे भ्रात्रा वाचापराधः कृतः ।

(ख) ¶अथ किम् । श्रुतमस्माभिर्यथा मम न त्वया सांप्रतं कौमारबन्धक्या प्रयोजनमिति ।

---

कन्या मा जायतामिति भावः । [ मद० वा० ] कथमन्यथात्युद्विग्नेयमि-

---

५३. °आरिणो for °कारिणो N.; °रिहवा B. K1. K2. O. °रिभा Bh. for °रिभवा; किदे B. किए N. भयेण O. for कदे ; इत्ति° for इत्थि° K2.; जणाणं ज° B. °आणं ज° A. C. अणाज° E. for °आज°; लावं for लाहं K2.

५४. जुगुच्छन्दि B. जुगुछन्ति Bh. जुउच्छान्दि N. जुगुछंदि O. for जुगुच्छन्ति ; बंधवा B. K1. K2. O. बंधवा Bh. बंधवजणा N. for बान्धवा.

५५. अई A. सहि N. before बुद्ध°; रक्खिए N. for रक्खिदे; अइ for आदि Bh.; दुम्मविदा A. दूमाविदा Bh. दूमाइदा K1. दूमायिता K2. धूमिआ N. दूमिया O. for दुम्मिदा; N. om. पिअ ; प्पिय for पिअ O.

५६. अदि A. Bh. लव° । E. अवि N. O. before महन्तो; क्खु A. E. खु K1. K2. after महन्तो; दे E. मं K1. for मे; भादुणो N. भाउणा O. for भादुणा; अवराहो for वा-धो Bh. K1. K2.; अवराधो A. °वराहो N. O. for °वराधो; से before कदो A. B. C. E.; किदो for कदो B. N. O.

५७. खु after सुदं Bh. K1. K2.; जहा for जधा Bh. K1. K2.; A. N. om. जधा; मद° । सहि कीदिसो । बुद्ध° । before सुदं C.; मद° । सहि केरिसो । बुद्ध° । before मम A.; मम ण A. ण मह K1. ण मे N. for ण मम; मह for मम C. E.; संपदं तुए Bh. K1. K2. संपदं इमाए N. O. for तु-दं ; कुमार for कोमार C.

५८. वन्ध° for बन्ध° Bh.; °इए A. Bh. K1. °कीए K2. for °ईए; पउ° Bh. प्पयो° O. for पओ°; ति Bh. वि K1. for त्ति; ससपहं पइण्णं काऊण वासभवणादो गदो after त्ति N.

*स्मर्यमाण Com. † Com. with A. ‡ अत्युपतापिता Com. § Com. with A. ¶ Com. with A. except that it has यथा before मम.

मद० । कर्णौ पिधाय । अहो अदिक्कमो । अहो पमादो । सहि
१० लवङ्गिए असमत्थम्हि दे मुहं पि संपदं दंसिदुं तधावि पहवामि
त्ति किं पि मन्तइस्सं । ( क )

लव० । साधीणो दे अअं जणो । ( ख )

मद० । चिट्ठदु जेव्व मह भादुणो दुस्सीलदा अवरिट्ठाणं

---

( क ) अहो अतिक्रमः । अहो प्रमादः । सखि लवङ्गिके असमर्थास्मि ते मुखमपि सांप्रतं दर्शयितुं *तथापि प्रभवामीति किमपि मन्त्रयिष्ये ।

( ख ) स्वाधीनस्तेयं जनः ।

( ग ) तिष्ठत्वेव मम भ्रातुर्दुःशीलतापरिस्थानं च । युष्माभिरीदृ-

---

ति भावः । [ मद० वा० ] अत्र प्रभवामीति वरभगिन्यपि त्वयि प्रणयवशादाश्वासवत्यहमिति भावः । [ ल० वा० ] अत्र यथेच्छसि तथा ब्रूहीत्यर्थः । [ म० वा० ] अत्रेदृशोपि दुःशीलोपि । यथाचित्तं चित्तानतिक्रमेण । भर्तेति ।

कोपि देवः कुलस्त्रीणां पतिरेव पतन्नपि ॥

---

५९. अति for अदि K2.; प्पमादो for पमादो A. B. C. E. K1. K2. O.; सखि for सहि K2.

६०. °मच्छम्हि for °मत्थम्हि K1.; दे संपदं मुहं Bh. संपदं दे मुहं K1. संपदं दे मुहं वि K2. दे अहं संपदं मुहं पि O. for दे—पदं; C. E. om. पि; वि for पि B. N.; दअदुं A. दंसेदुं Bh. K1. K2. for दंसिदुं; तथा° K1. तहा° K2. तह N. O. for तधा°; प्पहवामि A. C. E. O. पभवामि Bh. for पहवामि.

६१. वि for पि N.; °यिस्स for °इस्सं K2.

६२. स्साधीणो B. सहीणो Bh. साहीणो N. O. for साधीणो; त्ति after जणो Bh.

६३. दिट्ठादु K2. दिट्ठं O. for चिट्ठदु; दाव for जेव्व N.; मम for मह B. Bh. K1. K2. O.; N. om. मह; भादुयस्स for भादुणो O.; °स्सीलयं for °स्सीलदा O.; अपरि° Bh. K1. K2. अप्परि° N. अपडि° O. for अवरि°; °ट्ठाणअं B. C. °ठाणं Bh. °ग्धाणं K2. °ट्ठाणयं O. for ट्ठाणं.

* तथापि च प्रभ° Com.

अ । तुम्हेहिं ईदिसो वि संपदं जधाचित्तमणुवत्तणीओ जेण भत्ता एसो त्ति । अण्णं च । तुम्हे इमस्स अणहिजादक्खराहिक्खेवो- ६५ वालम्भदूसणस्स जं मूलं तं ण आणध । ( ग )

लव० । कधं वाआमन्तिदं वि ण जाणीमो । ( क )

मद० । जं दाणिं तस्सिं महाणुभावे माहवे किं पि किल

---

शोपि सांप्रतं यथाचित्तमनुवर्तनीयो येन भर्तैष इति । अन्यच्च । *यूयमस्यानभिजाताक्षराधिक्षेपोपालम्भदूषणस्य यन्मूलं तन्न जानीथ ।

( क ) कथं †वाचामन्त्रितमपि न जानीमः ।

( ख ) यदिदानीं तस्मिन्महानुभावे माधवे किमपि किल मालत्या-

---

इतिवचनात्स्त्रीषु भर्ता प्रभवतीति भावः । न चेति न च न जानीथ । किं तु जानीथ एवेत्यर्थः ।

६८-७५. अत्र किल प्रसिद्धौ । तारामैत्रकं प्रेम । तत्र माधवे ।

---

६४. च for अ B.; O. om. अ; वि after °हिं instead of after °सो B. Bh. N.; एरिसो A. ईरिसो Bh. for ईदिसो; त्ति before संपदं Bh.; B. om. संपदं; उण after संपदं Bh.; जहा Bh. K1. K2. जह N. for जधा; °यत्त for °वत्त B.; जहो Bh. जहा K1. K2. for जेण.

६५. ण for अण्णं K1. K2. O.; Bh. N. om. अण्णं च; अ B. K1. K2. य O. for च; ण अ before तुम्हे A.; इमस्सिं for इमस्स B.; इत्थीअण A. किं C. इत्थीयाजणा° E. after इमस्स; अणभिजा° A. °णहिजा° E. अणहिआ° N. O. for अणहिजा°; B. C. om. °हिजाद; °ददुरक्खरा° A. °दाक्खरा° K2. °दअक्खरा° N. °रक्खर O. for °दक्खरा°; °राधि° Bh. K1. K2. °रवि° O. for °राहि°; °वाल° for °वोवाल° O.

६६. °वाम्भदूस ( or म्म ) णसस्स for वा-स्स K2.; A. Bh. K1. N. om. दूसण°; O. om. जं; O. om. तं ण; B. om. ण; जाणध A. O. आणधा Bh. आणद्धा K2. आणेह N. for आणध.

६७. कहं for कधं N.; अम्हे after कहं N.; वाआगदं Bh. K1. K2. असंतं N. वायागयं O. for वाआमन्तिदं; पि for वि Bh. K2.; K1. om. वि; णाम before ण A. B. C. E.; N. E. om. ण; जाणमो for जाणीमो Bh. N.

६८. Bh. K1. K2. om. दाणिं; °णीं for °णिं E.; °णुभाए B. भाअधेए Bh. K1. भागधेए K2. °णुहवे N. for °णुभावे; वि for पि A. C. E.; किर for किल Bh. K1.

*Com. with A. except that it has उपालम्भदौर्मनस्यस्य. †वाग्गतमपि Com.

मालदीए तारामेत्तअं आसी तहिं सव्वलोअस्स अदिभूमिं गदो
७० पवादो । तं क्खु एदं विअम्भदि । ता पिअसहि जधा एस
भत्तुणो अवक्खाहिणिवेसो णिरवसेसं हिअआदो उद्धरीअदि
तधा करेध । अण्णधा महादोसो त्ति जाणिदं भोदु । णिक्कम्प-
दारुणा अम्मकाओ दूमावेन्ति हिअअं मणुस्साणं ईदिसादो दु-

---

स्तारामैत्रकमासीत्तत्र सर्वलोकस्यातिभूमिं गतः प्रवादः । तत्खल्विदं विजृम्भते । तत्प्रियसखि यथैष भर्तुरपक्षाभिनिवेशो निरवशेषं हृदयादुद्ध्रियते तथा कुरुत । अन्यथा महादोष इति ज्ञातं भवतु । नि-

---

अतिभूमिमतिदूरम् । तत्खल्विति । माधवानुरक्ता मालतीत्यस्यानुशय इत्याशयः । विजृम्भते प्रकाशते । अपक्षे मालती माधवपरेत्यसत्पक्षे । अभिनिवेशो रोषः । निरवशेषमिति क्रियाविशेषणम् । दोष इत्यस्या दौर्भाग्यं त्यागो वा नित्यशङ्काकुलतया स्यादिति

---

६९. वाआ A. N. वाया O. for तारा; मेत्तकं Bh. K1. O. मेत्तिअं C. मेलकं K2. मेत्तं N. for मेत्तअं; आसि for आसी B. Bh. C. E. K1. K2.; त्ति K2. सहि तस्सि N. for तहिं; अ A. E. य O. before सव्व; अधि for अदि K1.

७०. प्पवादो for पवादो A. C. E. K1. K2. O.; Bh. om. पवादो; ता for तं A.; खु for क्खु Bh. K1. K2. O.; एव्वं for एदं Bh.; विअह्मदि Bh. विअह्महि C. विअम्बदि K2. विइम्भइ N. वियंभिदं O. for विअम्भदि; K2. om. ता; प्पिय for पिअ O.; जहा Bh. K1. K2. जह N. for जधा; एसा B. E. एसो N. for एस.

७१. अक्खरा° B. अवक्खेवा° Bh. वक्खरा° C. अधिक्खेवा K2. वेलक्खा N. अवण्णा O. for अवक्खा°; °भिणि° for °हिणि° Bh. K1. K2.; णीर° for णिर° Bh.; ओसरीयदि for उद्धरीअदि O.

७२. तह for तधा N.; करेसिध Bh. करेसि K1. K2. करेह N. for करेध; अण्णहा for अण्णधा N. O.; अण्णं मिदा for अ–हा K1.; पमादो for दोसो Bh.; एसो before त्ति Bh.; जणिदं Bh. जाणिदा K1. for जाणिदं; होदु for भोदु N.

७३. °णासु B. °णो C. °णं K2. for °णा; क्खु अण्णकाओ A. अह्मकासु B. क्खु अणकासु C. क्खु अम्मकाओ E. क्खु अमक्काओ K1. खु अम्मकाओ K2. खु अम्मका O. for अम्मकाओ; दुम्मवेदि A. C. E. दुमावेदि B. Bh. K1. दूमाविन्ति K2. दूमावेदि O. for दूमावेन्ति; O. om. ईदिसादो; ईरिसो A. K2. इरिसा Bh. ईदिसो C. ईरिसी E. ईरिसादो K1. for ईदिसादो.

रभिसङ्गादो त्ति। मा णं भणिस्सध मदअन्तिआए कधिदं त्ति।(ख)

लव०। अइ असावधाणे असंबद्धलोअप्पवादमोहिदे अ- ७५
वेहि ण तुए सह जम्पिस्सं। (क)

मद०। सहि पसीद पसीद। अह वा ण तुम्हे अफुडं भणिदाओ

---

ष्कम्पदारुणाः कन्यका*दुन्वन्ति हृदयं मनुष्याणामीदृशादुरभिसङ्गा-
दिति। मैनां भणिष्यथ मदयन्तिकया कथितमिति।

(क) अयि † असावधाने असंबद्धलोकप्रवादमोहिते अपेहि न
त्वया ‡ सह जल्पिष्यामि।

(ख) सखि प्रसीद प्रसीद। अथवा न यूयमस्फुटं §भणितास्तिष्ठथ।

---

भावः। निष्कम्पेति। सततपरपुरुषालोकनेन लज्जाहीनतया दारुण-
त्वमत एवेयं कुलटा न वेति परेषां संदेह इति भावः। [लव० वा०]
अवापेहि दूरं गच्छ।

७७-९०. अत्र न यूयमिति त्वदस्फुटवादे मेवसाद इत्यर्थः। न
खलु न जानीमः। अपि तु जानीम एव। तथा च त्वमपह्नवं किं

---

७४. °संगो A. B. C. °संके° E. °संग° K2. °संगदो O. for °सङ्गादो; K1. K2. om. मा णं–त्ति; A. Bh. N. O. om. णं; भणह N. भणेध O. for भणिस्सध; °आ for °आए B.; कधिद Bh. कहिदं N. ण भणिदं O. for कधिदं.

७५. Bh. K1. K2. N. om. असावधाणे; °हिते for °हिदे O.

७६. न for ण Bh.; N. om. ण; किं पि A. Bh. K2. किं K1. ण N. after सह; मन्तिदव्वं A. जपिस्सं K2. मंतइस्सं N. मंतयिस्सं O. for जम्पिस्सं.

७७. N. om. सहि; प्पसीद for पसीद B. K1. O.; C. O. om. one पसीद; णं for ण E.; Bh. om. ण; अपुडं A. फुडक्खरं Bh. अफुटं C. अप्फुटं E. अप्फुडक्खरं K1. अप्फुटक्खरं K2. मह एव्वं N. फुडं O. for अफुडं; अ before भणि° O.

* Com. with E. and has उपतापयन्ति for दुन्वन्ति. † Com. om. असाव-धाने. ‡ सह किमपि मन्त्रयिष्ये Com. § भणन्त्यः Com.

चिट्ठध । किं च । अम्हे सच्चं जेव्व माहवेक्कमअजीअलोअं मालदिं जाणीमो । केण वा कठोरकेदईगब्भविब्भमावअवदोब्बल्लणि-
८० व्वहिदसुंदरत्तणविसेसं माहवसहत्थणिम्माविदबउलावलीविरइ-
दकण्ठावलम्बमेत्तसंधारिदजीवणं मालदीए माहवस्स अ पभात-

---

किं च । वयं सत्यमेव माधवैकमयजीवलोकां* मालतीं जानीमः । केन वा कठोरकेतकीगर्भविभ्रमावयवदौर्बल्यनिर्वाहितसुन्दरत्वविशेषं माधवस्वहस्तनिर्मितबकुलावलीविरचितकण्ठावलम्बमात्रसंधारितजीवनं मालत्या माधवस्य च प्रभातचन्द्रमण्डलापाण्डुरपरिक्षामरमणीय-

---

करोषीत्यर्थः । कठोरः परिणतो जातपाण्डिमेत्यर्थः । यद्वा । अकठोरा बाला केतकीत्यर्थः । तादृशी सातिपाण्डुरेव भवति । न विभावितं न ज्ञातम् । अपि तु सर्वैरेव ज्ञातमित्यर्थः । तत्किमपह्नवं करोषीति

---

७८. चिट्टद A. चिट्ठह N. for चिट्ठध; O. om. किं च; अ for च A.; E. om. च; Bh. K1. om. अम्हे; वयं for अम्हे K2.; वि N. उण O. after अम्हे; सच्चकं for सच्चं A. Bh. C. E. K1. K2. ; एव्व for जेव्व N.; माहवैक K2. माधव N. for माहवेक्क; Bh. om. °मअ; जीव for जीअ Bh. K2. ; जीविदं for जीअलोअं N. O.; लोअ for लोअं K2. ; °दीं for °दिं A. B. C. E.

७९. क्खु ण A. ण B. Bh. E. खु ण K2. before जाणीमो; आणीमो Bh. जानीमो K1. जाणामो N. for जाणीमो; कढोर Bh. अकठोर N. for कठोर; केदअ A. C. E. कवाअअ B. कई Bh. केतइ K1. केतई K2. केदयी O. for केदई; दोब्बेल्ल Bh. दोब्बल्लि K1. दोब्बल्लि K2. सोहा N. for दोब्बल्ल.

८०. णिव्वत्तिद A. E. णिवडिअ Bh. णिव्वड्डिअ K1. णिव्वड्डिद K2. वड्ढिअ N. णिवाडिद O. for णिव्वहिद; °त्तणं for °त्तण N.; N. om. विसेसं; विणिम्मिद Bh. K1. K2. णिम्मिद E. O. for णिम्माविद; वउलमाला for व—ली N.; रइअ Bh. K1. रइद C. E. K2. O. विरइअ N. for विरइद.

८१. °वलम्भ K1. K2. °वलंबिअ N. for °वलम्ब; K1. K2. O. om. संधारिद; A. Bh. N. om. धारिद; °विदं for °वणं O.; पिअसहीए before माल° N. ; माध° for °माह° K1.; वि for अ O.; प्पभात A. पभाद Bh. प्पभाद K1. K2. O. पहात N. for पभात.

* मालतीं खलु न जानीमः Com. but Jag. takes मालतीं न खलु न &c.

चन्दमण्डलावाण्डुरपरिक्खामरमणीअदंसणं ण विभाविदं सरीरं।
किं च। तद्दिअसे कुसुमाअरुज्जाणपेरन्तरच्छामुहसमागमे सवि-
ब्भमुल्लसिदकोदूहलुप्फुल्लपसरन्तणअणुप्पलबहलविलासमसि-
णसंचारचारुतारआविराअन्तविब्भमा अणङ्गणट्टाआरिअसव्वा- ८५

---

दर्शनं न विभावितं शरीरम्। किं च। तद्दिवसे कुसुमाकरोद्यानपर्यन्तर-
थ्यामुखसमागमे सविभ्रमोल्लसितकौतूह*लोत्फुल्लप्रसरन्नयनोत्पल-
बहलविलासमसृणसंचारचारुतारकाविराजमानविभ्रमा अनङ्गना-
टयाचार्य†सर्वाकारोपदेशनिर्मितवैदग्ध्यमुग्धमधुरास्त्वयापि न निरू-

---

भावः। विभ्रमो विलासः। स च स्त्रियां यथा।

यानस्थानासनादीनां नेत्रवक्त्रादिकर्मणाम्।
उत्पद्यते विशेषो यः स विलास इति स्मृतः॥

पुरुषे यथा।

मन्दसंचारिणी दृष्टिर्गतिश्च वृषभायिता।
स्मृतिपूर्वस्तथालापो विलासः कथ्यते यथा॥

---

८२. °पाण्डुर A. K2. °वंडुर Bh. °पंडुर E. N. °वपंडुर O. for °वाण्डुर; कपोल for परिक्खाम N.; किं before ण Bh.; विहा° for विभा° O.

८३. अ A. C. N. य O. for च; तस्सि for तद् N.; °अहे C. N. °यस O. for °असे; °करु° for °अरुज्जाण K2.; रत्था A. B. K2. O. रच्छा Bh. for रच्छा; °अमे for °गमे K2. N.

८४. °सिअ for °सिद N.; कोऊह° for कोदूह° N.; °लुफुल्लिआ Bh. लुफुल्ल K2. °लुप्फुण्ण N. °लफुल्ल O. for °लुप्फुल्ल; पफुल्लाणण Bh. परिसरुवत्तमाण N. for प-प्पल; A. K1. K2. O. om. पसरन्त; लोअण A. K1. K2. णण O. for णअणु°; A. K1. K2. O. om. °प्पलबहल; स for बहल Bh. N.

८५. संचरण for संचार Bh. K1. K2.; विइम्भमाणाण° for विरा-अण° N.; विब्भमा for विब्भमा K1.; °णंग for अणङ्ग Bh.; सिंगारापूरिअ after °णङ्ग N.; णीट्टारिअ B. णट्टावारिअ Bh. णट्टारिअ K1. णट्टआरिअ K2. °णसंचारिय O. for णट्टाआरिअ; N. om. °आरिअसव्वा°.

* °लोत्फुल्ललोचनविलास Com. † नृत्याचित for नाटयाचार्य Com.

आरोवदेसणिम्माविअविअङ्कुमुद्दमहुरा तुए वि ण णिरूविदा इमाणं दिट्ठिसंभेदा । किं अ । मम भादुणो दाणवुत्तन्तं सुणिअ तक्खणुच्छलिदगम्भीरावेअव्वइअरमिलाअन्तदेहसोहाणं उव्वत्तमाणमूलं विअ ण लक्खिदं हिअअं । किं अ । एदं पि अवरं सुमरिदं मए ।(ख)

---

पिता अनयोर्दृष्टिसंभेदाः । किं च । मम भ्रातुर्दानवृत्तान्तं श्रुत्वा तत्क्षणोच्छलितगम्भीरावेगव्यतिकर*म्लायमानदेहशोभयोरुद्वर्तमानमूलमिव† न लक्षितं हृदयम् । किं च । ‡एतदप्यपरं स्मृतं मया ।

---

किं न त्वया निरूपिता येनापह्नुष इत्यर्थः । आवेगोऽप्राप्तिदुःखम् । अङ्कारितं सुतप्तम् । उद्वर्तमानमुत्पतत् । आवेगोऽयमिष्टानाप्तिजः । यदाह ।

आवेगश्च भवेत्पुंसामिष्टानावाप्तिसंभवात् ॥

---

८६. °अरो° Bh. °वयवो° O. for °आरो°; णिम्मिद A. णिम्मिअ Bh. K1. K2. N. णिम्मिय O. for णिम्माविअ; °यद्ध for °अङ्कु O.; O. om. मुद्द; मणहरा N. मधुरा O. for महुरा; ण तुए for तुए वि ण K2.; मए for तुए A. B. Bh. N. O.; Bh. K1. N. O. om. वि; णं for ण N.; °रूविदा Bh. °भाइदा O. for °रूविदा; इमाण for इमाणं Bh. O.

८७. दिट्ठ for दिट्ठि Bh.; संभवा Bh. संभेआ K1. K2. for संभेदा; च for अ B. Bh. K1. K2.; मह for मम N.; दाव after °दुणो Bh.; विवाह for दाण Bh.

८८. °भ्भरिद B. E. K2. °रंभ्भरिद Bh. °भ्भरिअ K1. वत्तमाण N. भ्भूद O. for °च्छलिद; गभीरा for गम्भीरा° C. °रवेअ K2. °हव्वेअ N. for °रावेअ; वेअरुणरिद for व्वइअर Bh.; वइ° K1. वइअ° K2. N. O. for व्वइअ°; °रंगारिदमिला° A. °रुद्दीविदमिला° E. °रुंगारिदमाला° K1. °रंगारिदमिला° K2. °रं ईसि यि मिला° O. for °रमिला°; सोहणं Bh. सोहं N. for सोहाणं; उव्वंडिअमाण for उव्वत्तमाण N.; मूलबन्धणं for मूलं A. Bh. K1. O.; K2. om. मूलं विअ.

८९. O. om. विअ; किं before ण Bh. K1. K2.; लक्खिअं for लक्खिदं N.; च for अ B. Bh. K1. K2.; मए before एदं K2.; अअं B. एअं E. एत्तिकमेत्तं O; for एदं; A. K1. N. om. एदं; वि for पि C. O.; A. K1. N. om. पि; मए before अवरं K1.; अवरम्पि for अवरं A.; विसुम° for सुम° Bh. C. E. K1. K2. N.; °रिदव्वं for °रिदं K1; Bh. K1. K2. om. मए.

* व्यतिकरांगारितम्लायमान Com. † मूलबन्धनमिव Com. ‡ Com. with A.

लव०। किं दाणिं अवरं । (क) ९०

मद०। जं मम तस्स जीविदप्पदाइणो महाणुभावस्स चेअ-णापडिलम्भपिअणिवेदिआए मालदीए भअवदीविअड्ढवअणोव-ण्णासबोधिदेण हिअअं जीविदं अ माहवेण पारितोसिअत्तणेण सअंगाहसाहसे णिउत्तं। अह अ लवङ्गिए तहिं तुए जेव्व भ-

(क) किमिदानीमपरम् ।

(ख) यन्मम तस्य जीवितप्रदायिनो महानुभावस्य चेतनाप्र-तिलम्भप्रियनिवेदिकाया मालत्या भगवतीविदग्धवचनोपन्यासबोधि-तेन हृदयं जीवितं च माधवेन पारितोषिकत्वेन स्वयंग्राहसाहसे नियु-

[ लव० वा० ] किमिदानीमपरम् । त्वया स्मृतमिति शेषः ।

९१–९६ अत्र चेतनाप्राप्तिरूपमेव प्रियम् । पारितोषिकं यद्वा-लवणितेत्यादिश्लोके दर्शितम् । नियुक्तं दत्तम् । तच्चित्तानुरागं विना नोपपन्नमिति भावः । अर्थान्तरोक्तिप्रसङ्गेन प्रकृतापह्नवार्थमाह ।

९१. क्खु after जं A. E.; तस्स मम for मम तस्स Bh. K1. K2. O.; मह for मम C. N.; व्वदा° for प्पदा° O.; °दाइणो for प्पदाइणो B. C.; महानु° for महाणु° K1.; °भाअस्स B. Bh. °हवस्स K2. °हावस्स N. for भावस्स; चेद° for चेअ° K2.

९२ °णालहि B. C. °णापडिलब्भ Bh. °णालम्भ K2. O. °णोवलंभ N. for °णा-पडिलम्भ; प्पिय for पिअ O.; B. om. मालदीए; विदद्ध B. वियड्ड O. for विअड्ढ-वहणो° for वअणो° K1.; °वण्णसा° Bh. °व्वणासेण° N. for वण्णास.

९३. °वबधिदेण Bh. चोदिदेण N. बोहिएण O. for बोधिदेण; °विअं for °विदं Bh. K1. K2.; B. C. om. अ; च for अ N.; परितोसि° K1. पारिदोस° N. पारिदोसि° O. for पारितोसि°; °अत्तणो B. °आतणेण K1. °यद्दाणे O. for °अत्तणेण.

९४. अ before सअं Bh.; ग्गहेण B. E. गाहस K2. गाहे N. for गाह; B. N. om. साहसे; णिडतं C. णिवुत्थं K2. णिवुत्तं O. for णिउत्तं; अध for अह O; B. Bh. K1. K2. N. om. अ; Bh. K1. K2. N. O. om. तहिं; तुय for तुए K1.; एव्व C. एव्वे E. वि N. for जेव्व.

९५ णिदं पडिच्छिदो क्खु णो पिअसहीए अअं पसादो त्ति। (ख)
लव०। कदमो उण महाभाओ त्ति विसुमरिदं मए। (क)
मद०। सहि सुमर सुमर जेण तस्सिं दिअसे विअडदुट्ठसाव-
दावदेसकालगोचरं गदा असरणा तक्कालसंणिहिदेण जीवि-

न्कम्। अथ च लवङ्गिके तत्र त्वयैव भणितं प्रतीष्टः खलु नः प्रियसख्या अयं प्रसाद इति।

( क ) *कतमः पुनर्महाभाग इति विस्मृतं मया।

(ख) सखि स्मर स्मर येन तस्मिन्दिवसे †विकटदुष्टश्वापदापदेशकालगोचरं गताशरणा ‡तत्कालसंनिहितेन जीवितप्रदायिना पीवर§भुज

[ लव० वा० ] आं सखि इति। आमिति पूर्वस्मरणार्थः। विस्मृतमिति। ज्ञात्वापि तत्कथाकथनायायं प्रश्न इति भावः।

९७—१०५ अत्र स्मर इति मकरन्दमिति भावः। विक्रुष्टो रुष्टः। श्वापद इति व्याघ्रव्याजेन यम इत्यर्थः। अवलम्बसंनिहितेति पाठे-

९५. प्पडि° for पडि° O.; च्छदो° B. °च्छिदो Bh. °च्छिदं K2. for °च्छिदो; खु for क्खु Bh. K1. K2; प्पिय for पिअ O.; महा after अअं Bh.; प्पसादो A. O. प्पसादे Bh. for पसादो.

९६. आं सहि A. सहि Bh. K1. K2. O. after लव°।; कधमो K1. कधम K2. for कदमो; Bh. om. उण; सा Bh. सो K1. K2. before महा; °णुभावो Bh. C. N. O. भावो E. for भाओ; B. N. O. om. त्ति; विअ after °रिदं Bh. K2.; मे K2. अह्मेहिं O. for मए.

९७. K1. K2. N. om. सहि; Bh. K1. K2. N. O. om. one सुमर; °अहे Bh. C. N. °वहे E. °यहे O. for °असे; विकट for विअड A.; दुट्ट for दुट्ठ A.; Bh. om. दुट्ठ; सद्दूला° A. सापद N. for सावदा°.

९८. °दविणिवाद Bh. °दवाद N. for °दावदेसकाल; A. om. काल; गोअरं A. K1. K2. N. गोअर Bh. for गोचरं; गआ for गदा N.; सरणाणुग्गहेक्कलग्ग Bh. अवलग्ग K1. K2. सुलग्ग N. °वलग्ग O. for तक्काल; °हिदजीविदेण Bh. K1. O. °हिदणिअजीविदेण K2. for °हिदेण; N. O. om. जी—णा.

* आं सखि कतमः पुनरसौ महा° Com. † विक्रुष्ट for विकट Com. ‡ °रणा पवनसंनिभनिजजीवितेन जीवित° one Ms. Com. °रणाम्बजलसंनिभनिजजीवितेन another Ms. Com. अवलम्बसंनिहितेन noticed by Com. § भुजस्तंभसंभावित-निष्कारण Com.

दप्पदाइणा पीअरभुअत्थम्भेण णिक्कारणबन्धवेण सअलभुवणे-क्कसारणिअदेहोवहारसाहसं कदुअ परिरक्खिदम्हि । जेण अ १०० दिढदाढाविदारिअविअडमंसलुत्ताणपरिणाहिवक्खत्थलेण जर-ढजज्जरिदजवापीडहारिणा करुणेक्कमणेण मम किदे विसहिदा

स्तम्भेन निष्कारणबान्धवेन सकलभुवनैकसारनिजदेहोपहारसाहसं कृत्वा परिरक्षितास्मि । येन च दृढदंष्ट्राविदारितविकटमांसलोत्तानपरिणाहिवक्षःस्थलेन* जरठजर्जरितजवापीडहारिणा करुणैकमनसा

वलग्नं कण्ठः । संभावितः ख्यातः ॥ कर्मधारयोत्र ॥ विकटं विशालम् । मांसलं स्थूलम् । उत्तानमुच्छ्रितम् । जरठं कठिनं जर्जरितं विध्वंसितं यदोड्रपुष्पमुकुटं तदिव हरति ॥ कर्तर्युपमान इति णिनिः ॥ हरणमिह समीकरणम् । रक्ताक्तदेहतया साम्यम् । [ल० वा० ] अत्र हुं वितर्के ॥ हुं वितर्के विस्मय इत्यमरः ॥

९९. °दायिणा for °दाइणा C. E.; पीवर Bh. K1. N. O. पीअ K2. for पीअर; भुज for भुअ C. E.; त्थम्भ A. K1. O. त्थिमसहअरेण Bh. त्थम्ब K2. for त्थम्भेण; संभाविद A. Bh. K1. K2. संभाविदा N. O. before णि ( or नि ) क्का°; निक्का° for णिक्का° K1.; सिणिध्ध after °रण N.; बान्धवेण A. संबंधिणा Bh. बंधुणा C. O. for बन्धवेण.

१००. णिज्ज for णिअ E.; °पहार for °वहार N.; कदुव for कदुअ Bh.; N. om. परि; O. om. जेण अ; आ for अ Bh.; K2. om. अ.

१०१. N. om. दि-रिअ; विखिवत्ता य for दि-रिअ O.; दढ Bh. दड्ड C. अतिदिड्ड E. दिढतर K2. for दिढ; Bh. om. दाढा-रिअ; दंड्ढा for दाढा E.; दारिअ C. विआरिद E. for विदारिअ; मंसलो° E. मांसलु° K2. N. for मंसलु°; °त्ताल for °त्ताण Bh. E.; वक्खत्थलञ्छणेण A. वछलजणेण Bh. वक्खत्थललंछणं E. वच्छलेण K1. ववच्छत्थलछाञ्छणेण K2. वञ्छथ्थलुचलंत N. for व-लेण;

१०२. जरठ A. O. जठर B. C. for जरढ; जाआपीड E. मुत्तालदा N. for जवापीड; °डधारिणा K1. K2. °डाणुकारिणा O. for °डहारिणा; धारिणा for हारिणा N.; कलि before करुणे° E.; करुणाअरेण N. करुणमणेण O. for क-ण; °णक्क Bh. °णेक्क K1. °णेक्क K2. for °णेक्क; °क्कण for °क्कमणेण K1.; कदे for किदे Bh. C. E. K1. K2.; N. O. om. विसहिदा; °हिदो Bh. K1. °हिनो K2. for °हिदा.

* वक्षःस्थललांछनेन Com.

अतिदुट्ठसद्दूलणहसिहावज्जप्पहारा मारिदो अ सो दुट्ठसावद-महारक्खसो त्ति । ( ख )

१०५ लव० । हुं मअरन्दो । ( क )

मद० । सानन्दम् । पिअसहि किं किं भणासि । ( ख )

लव० । णं भणामि मअरन्दो त्ति । ( ग ) सस्पृहं शरीर-मस्याः स्पृशन्ती संस्कृतमाश्रित्य ।

---

मम कृते विसोढा अतिदुष्टशार्दूलनखशिखावज्रप्रहारा मारितश्च स दुष्टश्वापदमहाराक्षस इति ।

( क ) हुं मकरन्दः ।

( ख ) प्रियसखि किं किं भणासि ।

( ग ) ननु भणामि मकरन्द इति ।

---

१०६-१०७ [ मद० वा० ] अत्राह्लादातिशयात्पुनः पुनः प्रश्नः । प्रियनाममधुपानेपि न तृप्तातोभुत्वेवाहेति भावः । [ लव० वा० ] ननुशब्द आशयाविष्कारे ।

---

१०३. णिमज्जंतसअल for अति-ल N.; अतिदुट्ट A. निवडंत B. E. णिव-डंत Bh. K1. अदिदुट्ठ C. णिसूदन्त K2. णिसुंभंत O. for अतिदुट्ठ; दरिअ Bh. दन्तुरिअ K1. दारिअ K2. धरिड्ड O. before सद्दूल; णहर for णह A. E. K1. O.; णिग्घाद B. E. णिहाद Bh. K1. णिह K2. णिकाअ N. for सिहा; O. om. सिहा; पंजर after वज्ज Bh. K1. K2. N. O.; प्पहारो Bh. K1. K2. पहारो N. for प्पहारा; Bh. K1. om. सो; एसो for सो E.; दुस्सा° for दुट्ठसा° Bh; सद्दूल for सावद A. E.; B. om. सावद.

१०४. B. om. महा ; N. om. त्ति.

१०६. प्पिय for पिअ O.; N. om. पिअ; A. Bh. C. E. om. one किं.

१०७. णणु A. ननु C. E. ण तु K1. K2. for णं; मक° for मअ° K2.; °रीरक° for रीर° O.; सस्मितं for सस्पृहं Bh. N. O.

वयं तथा नाम यथात्थ किं वदा-
म्ययं त्वकस्माद्विकलः कथान्तरे । ११०
कदम्बगोलाकृतिमाश्रितः कथं
विशुद्धमुग्धः कुलकन्यकाजनः ॥

मद० । सलज्जम् । सहि कीस मं उवहससि । णं भणामि णिव्वावअन्ति मं तारिसस्स अप्पणिरवेक्खव्ववसाइणो

(क) सखि किं मामुपहससि। ननु भणामि निर्वापयन्ति मां तादृशस्यात्मनिरपेक्षव्यवसायिनः कृतान्तकवल्यमानजीवितबलात्कार-

१०९-११२ अहमित्यादि । यथा त्वमात्थ तत्तथा । मालती माधवानुरक्तेति स्वीकृतमित्यर्थः । अहं किं नाम वदामीत्यभिनिवेशमात्रम् । अयं पुनः कुलकन्यकाजनः कथामध्ये कथमकस्मात्कदम्बगोलकाकारमाश्रितः । बहलपुलकशालित्वात् । विकलो विह्वलः सन् । कीदृशः । विशुद्धः निष्कलङ्कः । कामाभिषङ्गदोषशून्य इति यावत् । मुग्धो रसानभिज्ञः । सर्वमिदं सोत्प्रासम् । अत एव वैदग्ध्यतया शिल्पकारिणीत्वेन संस्कृताश्रयणम् ।

११३-१२१ अत्र उपहससीति नाहं मकरन्दानुरक्ततया हृष्टा किं तु तद्धीरत्वमभिनन्दामीति न हासस्थानमिति भावः । अत एव त्वित्त-

१०९. अहं for वयं B. E.; यथा for तथा Bh.; यदात्थ A. B. C. E. N. यथार्थ Bh. for यथात्थ.

११०. च for त्व° A. N.

११२. मुग्धा for मुग्धः K2.; किल for कुल O.

११३. किं त्ति K1. किंत्ति K2. किं for कीस N. O.; तुमं for मं N.

११४. णिव्वावेदि A. Bh. E. K1. O. णिव्वादेवेदि K2. सुहआदि N. for णिव्वावअन्ति; N. O. om. मं; अंगाणि for मं C.; तादि° for तारि° A. C. E.; °पेक्ख° for °वेक्ख° N.; ववसा° B. K2. N. इववसा° K1. for व्ववसा°; °साग्गिणो for °साइणो C. E. K2.

११९ किदन्तकवालिज्जन्तजीविदवलामोडिअपच्चाणअणगुरुओवआ-
रिणो जणस्स संकधासु णामग्गहणसुमरणाइं । तधा अ
सो तुए वि गाढप्पहारवेअणारम्भविम्हारिदसरीरसंगलिदसेअस-
लिलुप्पीलो मोहमउलाअन्तणेत्तकन्दोट्टजुअलो भूमिविलग्गि-

---

प्रत्यानयनगुरुकोपकारिणो* जनस्य संकथासु नामग्रहणस्मरणानि।
तथा च स त्वयापि गाढप्रहारवेदनारम्भविस्मारितशरीरसंगलितस्वेद-
सलिलोत्पीडो †मोहमुकुलायमाननेत्रनीलोत्पलयुगलो भूमिविलग्ना-

---

चोरिकयाह । नन्विति । एवं स्वहर्षस्यान्यथासिद्धिमुक्त्वा निजाङ्गसङ्गजं स्वेदादिकं मकरन्देऽन्यथयति तथा चेति । विस्मारितशरीरेति मूर्छाकथनम् । संगलितो मिलितः । उत्पीडः पूरः । कन्दोट्टो नीलोत्पलम्। मोहेति मोहेन नेत्रमीलनं न तु मदङ्गसङ्गादिति भावः । यदाह । व्यसनाभिघातभयपूर्ववैरस्मरणजो भवति मोह इति । प्रहारमूर्छने कथमयं भूमौ न

---

११५. कदंत B. Bh. कअंत N. कियंत O. for किदन्त; °लिज° for °लिज्ज° K2.; जीविअ for जीविद N.; °मोडि Bh. O. °मोडिआ K2. for °मोडिअ; जीविद before पच्चा° K2.; पच्चाअण B. प्पच्चाणयण O. for पच्चाणअण; गुरुदरोव° A. गरुडव° Bh. गुरुअरोव° K1. K2. गुरुयोव° O. for गुरुओव°.

११६. °कहा for °कधासु N. O.; °हणं for °हण Bh. K1. K2.; °रणं Bh. °रणाः K2. °रणो O. for °रणाइं; अ after °णाइं ( or णाः) K1. K2.; तहा Bh. K1. K2. तह N. for तधा; A. O. om. तधा; K2. N. O. om. अ.

११७. तए for तुए Bh.; गहपर after गाढ N.; वेदणा° for वेअणा° B.; °लंभ for °रम्भ N.; O. om. °रम्भ; विह्मराविद Bh. K1. K2. O. विम्भमाविद C. E. विवालिअ N. for विम्हारिद; °रीरो for °रीर O.; O. om. सं-प्पीलो; °लिअ for °लिद N.; N. om. सेअ; सेद for सेअ K2.

११८. °लोप्पीलो K2. °लुप्पधो N. for °लुप्पीलो; मउलंत B. Bh. E. K1. K2. O. मुउलंत N. for मउलाअन्त; णित्त Bh. नेत्त K1. for णेत्त; कंदोइ A. B. E. K1. K2. कंदुइ Bh. कंदोत्थ O. for कंदोट्ट; विगालिदासि A. विअलिआसि Bh. K1. लग्गिदासि C. E. विकलितासि K2. णिहिदासिं N. णिम्मियासि O. for वि-दासि.

* गुरुतरोपकारिणो Com. † मोहमीलन्नेत्र Com.

दासिलदाविट्टुम्भधीरधारिदसरीरभारो पच्चक्खीकिदो जेव्व मदअन्तिआणिमित्तमेत्तविछड्डिअमहामहग्घजीवलोओ महा- १२०
भाओ त्ति । (क) मदयन्तिका स्वेदादीन्विकारान्नाटयति ।
बुद्ध॰ । ववसिदं पिअसहीए सरीरेण । ( क )

---

सि*लताविष्टम्भधैर्यधारितशरीरभारः† प्रत्यक्षीकृत एव मदयन्तिका-निमित्तमात्रविच्छर्दितमहामहार्घजीवलोको महाभाग इति ।
( क ) ‡व्यवसितं प्रियसख्याः शरीरेण ।

---

पतितोत आह भूमीति । विष्टम्भः संबन्धः । विच्छर्दितःपरित्यक्तः । महामहार्घमतिदुर्लभम् । जीवलोको मर्त्यभुवनम् । प्रियालिङ्गनस्मरणादिना स्वेदादिकम् । स्वेदादीनित्यनेन किलकिंचितभावाविष्करणम् । यदाह।

यदन्तर्निहितस्याङ्गैः सव्यापारैर्मनोभुवः ।
सव्रीडाविष्कृतिः स्त्रीणां तदाहुः किलकिंचितम् ॥

१२१–१३०. अत्र स्वेदादिमता तव शरीरेण मकरन्दसंभो-

---

११९. जट्ठि Bh. K2. यट्ठि K1. O. for लदा; विछंभ Bh. णिट्ठंभ O. for विट्ठम्भ; धीरत्तण for धीर A.; धारिअ B. K2. परिधारिअ Bh. K1. for धारिद; सरीरो A. B. सरीरसारो N. O. for स–रो; पच्च॰ for पच्च॰ O.; कदो for किदो A. Bh. C. E. K1. K2.; एव्व for जेव्व N.

१२०. ॰न्तिणिआ for ॰न्तिआ Bh.; मेत्तनिमित्तअ for णिमित्तमेत्त N.; ॰च्छडिअ B. C. E. K1. K2. ॰छडित Bh. ॰छंडिय O. for ॰छड्डिअ; N. om. first महा; महप्प for महग्घ O.; जीअ for जीव B. Bh. C. K1. K2.; जीविदो for जीवलोओ N.

१२१. भाउ Bh. भाअ K1. भागो K2. for भाओ; N. om. त्ति; Bh. E. K1. K2. N. O. om. मदयन्तिका; इति before स्वेदा॰ N.; ॰दि for ॰दीन् Bh. K1. K2. N.; B. om. विकारान्; विकारं for विकारान् K1. K2.

१२२. सहि सद्धससरीरे किं वा Bh. सहि K1. K2. शरीरमस्याः स्पृशन्ती N. after बुद्ध॰; व्वव॰ for वव॰ A. O.; अस्सथ्थसरीरे पिअसहि for वव-रेण N.; व्व after ॰सिदं K1. K2.; दे Bh. K1. K2. प्पियसहीए O. for पिअसहीए; पिअसहीए आवेदिअं after ॰रेण K2.

*यष्टि for लता Com. †शरीरः Com. ‡व्यवसितमिव ते शरीरेण प्रियसख्यावेदितं Com.

मद० । सलज्जम् । पिअसहि अवेहि । उब्भिण्णम्हि सह-वासिणीए वीसम्भेण । ( क )

१२५ लव० । सहि मदअन्तिए अम्हे वि जाणिदव्वं जाणीमो । ता पसीद विरम ववदेसादो । एहि वीसम्भगब्भकधाबन्धसरिसं सुहं चिट्ठम्ह । ( ख )

बुद्ध० । सोहणं लवङ्गिआ भणादि । ( ग )

---

( क ) प्रियसखि अपेहि । उद्भिन्नास्मि सहवासिन्या विस्रम्भेण ।*
( ख ) सखि मदयन्तिके वयमपि ज्ञातव्यं जानीमः† । तत्प्रसीद विरम व्यपदेशात् ।‡एहि विस्रम्भगर्भकथा§बन्धसदृशं सुखं तिष्ठामः ।
( ग ) शोभनं लवङ्गिका भणति¶ ।

---

गोभिलषित इत्यर्थः । अत्र सहवासिन्याः सख्याः । नाहं काम स्वेदादिनोद्भिन्ना किं तु त्वद्विस्रम्भकथयेति भावः । अभिण्णम्हि पाठेभिज्ञातास्मीत्यर्थः । अत्र जानीम एवेति कामन्दक्यादिद्वारा तव मकरन्दस्य च चेष्टितं ज्ञातमेव । तत्कथमपह्नव इति भावः । व्यपदेशाच्छलात् । सदृशमिति मकरन्दे स्नेहानुबन्धमपि कथयेत्याश-

---

१२३. A. O. om. सलज्जं; अयि विसंवादसीले प्पिय for पिअ O. ; K2. om. पिअ; N. om. पि-वेहि; अपेहि for अवेहि B. ; उब्भिणह्मि Bh. उब्विणह्मि K1. उब्विणह्मि O. अभिण्णह्मि noticed by Com. for उ-ह्मि; इमाए before सह° O.

१२४. चारि° for वासि° O. ; वीसम्हदाए Bh. विसंभेण K1. K2. पिअसहीए मालदीए N. विस्संभेण O. for वीसम्भेण.

१२५. अह्म for अम्हे K2; जाणामो Bh. N. जाणेमि K2. for जाणीमो.

१२६. Bh. O. om. ता; प्पसीद for पसीद O.; N. om. विरम; व्ववदेसादो A. B. C. K1. O. उवदेसावदेसादो E. व्ववसाआदो K2. for वव-दो; सहि before एहि E.; विस° K1. K2. विस्स N. for वीस°; संकहाए सविसेसं for गब्भ-रिसं N. ; गब्भिण for गब्भ Bh. O.; कहा for कधा Bh. K1. K2. O.; °णुबन्ध for बन्ध A. K1. K2. ; Bh. om. बन्धः सुरसं for सरिसं O.

१२८. सहि before सोहणं N. ; °ङ्गिआए for °ङ्गिआ N.; भणिदं for भणादि N.
* विस्रंभतया Com. † जानीम एव Com. ‡ सखि before एहि Com. § कथानुबंध Com. ¶वदति Com.

मद० । विधेअम्हि संपदं पिअसहीणं । (क)

लव० । जइ एव्वं ता कहेहि कहं णु दे कालो गच्छदि त्ति । (ख) १३०

मद० । णिसामेहि पिअसहि । मम बुद्धरक्खिदापक्खवादप-
च्चएण पढमं जेव्व तस्सिं जणे भरिदुव्वरन्तकोदूहलुक्कण्ठाम-

(क) विधेयास्मि सांप्रतं प्रियसख्योः ।

(ख) यद्येवं तत्कथय कथं नु ते कालो गच्छतीति ।

(ग) निशामय प्रियसखि । मम* बुद्धरक्षितापक्षपातप्रत्ययेन प्रथममेव तस्मिञ्जने † भृतोद्वृत्तकौतूहलोत्कण्ठामनोरथं हृदयमासीत् ।

---

यः । उभयमपि क्रियाविशेषणम् । अत्र शोभनं कथयितुमर्हसीत्यर्थः । (लव० वा०) अत्र मकरन्दवियोगेन कथं वर्तस इति भावः ।

१३१–१३८. अत्र निशामय शृणु । एकवचनमिह लवङ्गिकापेक्षया । बुद्धरक्षिताया विदितवृत्तान्तत्वात् । कथाकथनं तु रागवृद्धये यदाह ।

यात्रा पुरस्कन्दनमुत्सवो वा स्वप्नोऽथ चित्रं रतिसंकथा च ।
भवन्त्युपायाः प्रथमावलोके यूनोर्यतो वृद्धिमुपैति रागः ॥

---

१२९. E. om. विधे–दि त्ति (l. 130); विहे° for विधे° B.; संप्पदं for संपदं O.; प्पिय for पिअ O.; सहीओ for सहीणं B. C.

१३०. जदि for जइ O.; कधेहि for कहेहि A. C.; कधं for कहं A. B. C.; B. om. त्ति.

१३१. णीसा° for णिसा° A. C. E.; °सेहि Bh. °मेह N. for °मेहि; प्पिय for पिअ O.; B. om. मम; मह for मम N.; दाव Bh. K1. हि K2. O. before बुद्ध°; परोक्ख for पक्ख A. C. O.; पाद K2. वाय O. for वाद; पच्चयेण K2. वअणेण N. प्पच्चयेण O. for पच्चएण.

१३२. पुढमं for पढमं N.; एव्वं for जेव्व N.; A. B. C. E. add तस्सिं जणे अदिभूमिं गदो अणुराओ । अवि अ । after जेव्व, O. has this without अवि अ instead of तस्सिं जणे–तदो; अविरलु° for भ–लु° N.; भरिदुच्चरन्त E भरिदुत्तप्पन्त K1. अविरलोद्धरन्त K2. for भ–न्त; °हलो° for °हलु° K2.; Bh. om. मणो–न्तओ° (l. 134); मणोहरं B. E. मनोहरं (मनोरथं in छाया) K2. मणहरं N. for मणोरहं.

* मम हि तावद्बुद्ध° Com. † भृतोद्वृत्तकौ° Com.

णोरहं हिअअं आसी। तदो विहिणिओअणिव्वुत्तदंसणा भविअ
दुव्वारदारुणाणङ्गदुक्खसंदाविदकडुन्तचित्तविहडन्तजीविदा
१३५ संभाविअम्हि। विअम्भिआपुव्वसव्वङ्गप्पज्जालिअमअणहुअव-

ततो विधिनियोगनिर्वृत्तदर्शना भूत्वा दुर्वारदारुणा*नङ्गदुःखसंता-
पित†क्वथच्चित्तविघटमानजीविता संभावितास्मि। विजृम्भितापूर्वस-
र्वाङ्ग‡प्रज्वालितमदनहुतवहोद्दामदुःसहायासदुर्मनायमानपरिजना

पक्षपात इति बुद्धरक्षितापक्षपातो गुणबाहुल्यं विना न भवतीति वि-
श्वास इति भावः। भूतोद्वृत्तमतिरिक्तीभवत्। कौतूहलमुत्कण्ठा च
मनोरथश्चेति विग्रहः। ततो बहुव्रीहिः। यद्वा। अतिरिक्तीभवत्कौ-
तूहलमुत्कण्ठा च यत्र मनोरथे तादृशो मनोरथो यत्र तत्तथा।
सर्वाङ्गदाहो व्याध्यवस्थायाम्। यदाह।

मनःसंमोहसर्वाङ्गदाहवृत्त्यादिभिस्तथा।
शिरसो वेदनाभिश्च व्याधेरभिनयो यथा॥

१३३. मे before हिअअं K2. आसि for आसी A. B. C. K1. K2.; तदो तदो for तदो K2.; विधि for विहि A. C. E. K1.; अचिर for विहिणिओअ O.; णिउत्त A. णिउणिवुत्त K2. णिवुत्त O. for णिव्वुत्त; रमणी for दंसणा C.; N. om. भविअ.

१३४. °आस for °णङ्ग N.; संग after °णङ्ग C. E. K1.; संदाविदउक्कण्ठिअ A. E. संदाविदुक्कण्ठिद K1. संतावोक्कडन्त K2. संदावढज्जंत N. संदावदड्ढंत O. for संदा-डुन्त. जीविआ A. जीविदावच्छा Bh. जीविदावत्था K1. जीदात्था (जीवितास्था in छाया). K2. जीविआसा N. for जीविदा.

१३५. Bh. K1. K2. N. om. संभाविअम्हि; संपादियम्हि for सं-म्हि O.; °दम्हि for अम्हि B. सदाव Bh. K1. दूर N. before वि°; विआम्भिदअ° A. विअंभिदा° Bh. K1. विअम्भिआअ° C. विडम्बिदा° K2. विइंभिआ° N. जाअ (altered in margin to विजंभिदा°) O. for विअम्भिआ°; अव्व for विअ-पुव्व B. संदाव after सव्वंग N.; सज्जलिद A. पज्जालिदा° Bh. K1. पज्जालिद C. जालिद E. पज्जलिद K2. संजालिअ N. संजालिद O. for प्पज्जालिअ; °णंग for °मअण Bh. K1.; K2. O. om. मअण; हुद B. Bh. K1. K2. N. हुत O. for हुअ.

* मदन for अनङ्ग Com. † संतापितोत्कण्ठितचित्त Com. ‡ संज्वालित Com.

हुद्दामदूसहाआसदुम्मणाअन्तपरिअणा पच्चासाविमोक्खमेत्तसु-लहमिच्चुणिव्वाणपाडिऊलबुद्धरक्खिदावअणवाड्डिदावेअव्वइअर-विसंठुला इमं जीअलोअपरिवत्तं अणुभवामि । ( ग )

संकप्पसिविणअन्तरेसु अ मणोरहुम्मादमोहिदा पेक्खामि

---

प्रत्याशाविमोक्षमात्रसुलभमृत्यु*निर्वाणप्रतिकूलबुद्धरक्षितावचनवर्धितावेगव्यतिकरविसंष्ठुलेमं जीवलोकपरिवर्तमनुभवामि ।

(क) संकल्पस्वप्नान्तरेषु च मनोरथोन्मादमोहिता प्रेक्षे† तं जनम्। ‡सोपि प्रियसखि मुहूर्तानिर्व्यूढविस्मयविसंष्ठुलोद्वेल्ल§विस्तीर्यमाण-

---

मरणमेव निर्वाणं मोक्षः । सर्वदुःखापहारकत्वात् । मच्चत्वादिष्टस-ङ्गस्तव स्यादिति बुद्धरक्षितावचनम् । विसंष्ठुला संशयितचित्ता । जीवलोकस्य परिवर्तोन्यथात्वं मूर्छेत्यर्थः । यद्वा । मूर्छानन्तरं पुनर्जीवलोकप्रवेशोत्र परिवर्तनम् ।

१३९-१४२. संकल्पान्तरे भावनाबलजज्ञानमध्ये स्वप्नज्ञान-

---

१३६. °हाह for °हाम B.; दाह after °हाम N.; दूमणा° for दुम्मणा° B.; विमुइअ for विमोक्ख O.; मित्त K1. चित्त O. for मेत्त.

१३७. मरण A. E. मित्तु B. मच्च K2. for मिच्चु; °व्वाणे for °व्वाण O.; पाडि for पडि O.; °ज्जलं K1. °ऊण K2. °कूल O. for °ऊल; °क्खिदा Bh. °क्खिआ N. for क्खिदा; विरइदा° B. वढिदा° Bh. विड्डिदा K1. वल्डिता° K2. for वाड्डिदा°; °तावेग K2. आवेग N. °दावेस (altered in margin to °आवेअ ) O. for °दावेअ; वइ° for °व्वइः Bh. K1. K2. N.

१३८. °ठुला for °ठुला K1. O.; ज्जीअ K1. जीव K2. O for जीअ; लोक for लोअ A. B.; °वुत्तं for °वत्तं N.; मन्दभाइणी after °वामि K2.

१३९. संकप्प for संकप्प Bh ; °णन्तरेसु A. °णान्तरेसु K2. °णएसु N. for °ण-अन्तरेसु; च for अ K1.; हरु° for रहु° B. N.; °हिता K2. °हिआ N. for °हिदा; पेक्खामि Bh. प्पेक्खामि O. for पेक्खामि.

* मरण for मृत्यु Com. † पश्यामि Com. ‡ स चापि Com. § °लोद्वेल्लि° Com.

मक०। स्वगतम्। भवत्वेवं तावदाक्षिपामि। प्रकाशम्। वयस्य माधव।

एतस्मिन्मदकलमल्लिकाक्षपक्ष-
व्याधूतस्फुरदुरुदण्डपुण्डरीकाः।
८५ वाष्पाम्भः परिपतनोद्गमान्तराले
दृश्यन्तामविरहितश्रियो विभागाः॥

माधवः सावेगमुत्तिष्ठति।

८१-८७ आक्षेपोन्यमनस्कता। एतस्मिन्नित्यादि। अत्र सरसि भुवः प्रदेशा दृश्यन्ताम्। अश्रुपूर्णनेत्रतयादर्शनमाशङ्क्याह। एकस्य नेत्रजलस्य परिपतनमन्यस्योत्थानं तयोर्मध्ये। कीदृशाः। हर्षाव्यक्तमधुररवहंसविशेषपक्षकम्पितचलद्दीर्घनालपद्माः। नीलोत्पलयुक्ताश्च। पूर्वं विशिष्टपद्ममुक्तमिह तु नीलपद्ममात्रमित्यपौनरुक्त्यम्। यद्वा। पूर्वं श्वेतपद्ममुक्तम्। इह तु नीलं तदित्यदोषः। श्वेतश्यामकमलसंवलनेनातिरम्यतोक्ता। अविरहितश्रिय इति पाठे श्रीः शोभा लक्ष्मीर्वा। सरसि तस्याः सतताधिवासात्। तथा च श्रीयुक्ता इत्यर्थः॥ मलिनैर्मल्लिकाक्षास्त इत्यमरः॥ मल्लिको हंसभिद्यपीति मेदिनीकरान्मल्लिक आख्या यस्येति ज्ञायते। अनुप्रासश्च नागरागेति समानश्रुत्यापि संभवतीत्यवधेयम्। सोद्वेगं शीतवातादिदुःसहत्वादिति भावः।

८१. B. O. om. स्वगतं; °दन्यतः प्रक्षिपामि for °दाक्षिपामि A. E.; B. O. om. प्रकाशम्.

८२. O. om. माधव.

८३. °काख्य A. Bh. E. °काक्षि B. for °काक्ष; पक्षी for पक्ष Bh.

८४. स्फुटदु° for स्फुरदु° K1.

८५. °द्गता° Bh. °द्भवा° O. for °द्गमा°.

८६. °न्तां कुवलयिनो भुवो appears to be the reading of Com.

८७. सोद्वेगमु° for सावेगमु° A. B. K1. K2.

मक० । कथं प्रतिपत्तिशून्यमुत्थायान्यतः प्रवृत्तः । निःश्व-स्योत्थाय च । सखे प्रसीद । पश्य पश्य

वानीरप्रसवैर्निकुञ्जसरितामासक्तवासं पयः ‎ १०
पर्यन्तेषु च यूथिकासुमनसामुज्जृम्भितं जालकैः ।

---

८८-९२ प्रतिवाक्यप्रदानादिभुस्त्वालोकनवर्जनम् ।
तूष्णींभावो विचेतस्त्वं जडतायां भवन्ति हि ॥

इति जडताचिह्नं माधवे सचमत्कारमाह । कथमिति । निरूप्य नेयं जडता किं त्वनुस्मृतिरित्याह शून्यमिति । शून्यं निर्लक्षमन्यतो गमनेनानुस्मृतिः । यद्वा । अन्यतः शून्यं मालतीव्यतिरिक्तवस्त्व-ज्ञानात् । अत एव प्रद्वेषादन्यकार्याणां कथितानुस्मृतिरिति । अप्र-तिपत्तिशून्यमिति पाठेनवधानेन चैतन्यविरहो यथा तथोत्थायेत्यर्थः । वानीरेत्यादि । सखे कुञ्जसंबान्धि नदीनां पयः पश्य । वेतसपुष्पै-र्लग्नसौरभम् । तासामेवोपान्तेषु च यूथिकाकुसुमानां जालकैः कोर-कैर्विकसितम् । यद्वा । यूथिकाश्च सुमनसश्च तासां जालकैः । यूथिका जुहीति प्रसिद्धा । सुमनसो जात्यः ॥ सुमना मालती जातिरित्यमरः ॥ तथा गिरेः सानुनैकदेशानालम्ब्येह प्राग्भारेषु शिखरेषु वर्तमानैर्मेघैर्वितानाय्यते । वितानाचारः क्रियते । मयूर-नृत्यविधाननिमित्तम् । निमित्तसप्तमीयम् । कीदृशेषु । विकस-त्कुटजपुष्परूपहासवत्सु । तदिह मयूरनृत्यार्थं मेघैर्वितानं कुटजै-र्हास इति यत्तत्पश्येत्यर्थः । एवं च कुटजवृक्षा द्रष्टारो मयूरा

---

८८. कथमप्रति° for क-ति° C. K1. K2. कथमप्रतिपत्तिरेवं शू° for क-शू°. O; निश्व° for निःश्व° Bh. K2.

८९. उत्थाप्य for उत्थाय A.; C. N. om. च; B. N. repeat प्रसीद; A. B. N., om. one पश्य.

९०. नीवार for वानीर B.

उन्मीलत्कुटजप्रहासिषु गिरेरालम्ब्य सानूनितः
प्राग्भारेषु शिखण्डिताण्डवविधौ मेघैर्वितानाय्यते ॥
अपि च । जृम्भाजर्जरडिम्बडम्बरघनश्रीमत्कदम्बद्रुमाः
९५ शैलाभोगभुवो भवन्ति ककुभः कादम्बिनीश्यामलाः ।

---

नर्तका मेघो वितानमिति नृत्यसामग्री । ध्वनिस्तु शिखण्डिपदेन पञ्चचूडोपेतशिरस्कत्वेन विदूषक उक्तः । प्राग्भारपदेन च प्राञ्च-तीति प्राक्प्रकृष्टज्ञानवान्भारो दुःसहो यस्य स मूर्खो द्रष्टोक्तः । तस्य च हास उचित एव । यद्वा । शिखण्डिपदेन त्रिशिखण्डयोगितया बाल उक्तः । तस्य च नृत्ये मूर्खो हसत्येव ।

बालानामपि कर्तव्यं त्रिशिखण्डविभूषणम् ॥

इति बालानां शिखण्डित्वे मानम् ॥ वानीरवञ्जुला इत्यमरः । क्षारको जालकं क्लीबे कलिका कोरकः पुमानिति च ॥ वितान-माचरतीत्यर्थे क्यङन्ताद्यकि वितानाय्यत इति रूपम् ॥

९४-९७ जृम्भेत्यादि । सखे शैलपर्यन्तभूमयो जृम्भया वि-कासेन जर्जरः पृथग्भूतो यो डिम्बो गोलकस्तस्य डम्बरेणार-म्भेण व्याप्ता अत एव श्रीमन्तो नीपवृक्षा यत्र तादृश्यो भवन्तीति यत्तत्पदयोरर्थः । एवं सर्वत्र दिशो मेघमालाश्यामा भवन्ति । यद्वा । कादम्बानां कलहंसानां स्त्रियः कादम्बिन्यस्ताभिः श्यामाः । नदी-प्रवाहानां कच्छाः कूलान्युद्यद्भिर्विकसितैः कन्दलैर्नवाङ्कुरैः कान्ता मनोज्ञा ये केतकवृक्षास्तद्धारका भवन्ति । यद्वा । उद्यन्कन्दलः कन्दो यस्य कान्तकेतकस्येत्यर्थः । यद्वा । उद्यन्यः कन्दलो म-ल्लीवृक्षस्तं कान्तकेतकं च बिभ्रतीत्यर्थः । वनानां मालाविर्गन्धानि

---

९२. प्रहासिनि for प्रहासिषु C.; °निह A. °म्यत: O. for °नितः

९३. प्राग्भावेषु Bh. प्राग्भागेषु E. प्राग्भागे तु N. for प्राग्भारेषु; वितानायते B. E. K1. K2. N. विततिष्यते Bh. for वितानाय्यते.

९४. जर्झर for जर्जर N.; बिंब for डिम्ब O.

उद्यत्कन्दलकान्तकेतकभृतः कच्छाः सरित्स्रोतसा-
माविर्भूतशिलीन्ध्रलोध्रकुसुमस्मेरा वनानां ततिः ॥

माध० । सखे पश्यामि किं तु दुरालोकरमणीयाः संप्रत्य-
रण्यगिरिभूमयः । तत्किमेतत् । साम्रम् । अथवा किमन्यत् ।

उत्फुल्लार्जुनसर्जवासितवहत्पौरस्त्यझञ्झामरु- १००
त्प्रेङ्खोलस्खलितेन्द्रनीलशकलस्निग्धाम्बुदश्रेणयः ।

---

व्यक्तीभवत्सौरभानि यानि शिलीन्ध्रलोध्रकुसुमानि तैः स्मेरा सहासेव । मनोज्ञा वा ॥ शिलीन्ध्रं कन्दलीपुष्पमिति विश्वः ॥ शिलीन्ध्रं सूल [ सून ] इति ख्यातम् । वनमिह पद्मं जलं विपिनं वा ॥ जृम्भा विकासजम्भयोरिति विश्वः । डिम्बोण्डेपि च गोलक इति धरणिः । डम्बरोस्त्री समारम्भ इति विश्वः । कादम्बिनी मेघमाला कादम्बरी च कथ्यत इति शाश्वतः । कन्दलः कलहे कन्दे मह्या-मङ्कुरसंचयोरिति मेदिनीकरः । पुंसि कच्छस्तथाविध इत्यमरः । वनं नीरेम्बुजे क्लीबं काननेप्यालये वनमिति मेदिनीकरः ॥

१००–१०२ उत्फुल्लेत्यादि । अधुना त एते दिवसाः प्राप्ता ये मनोराज्येन मया धृता इत्यर्थः । इह त एत इति सर्वनामभ्यां दिनानामत्युत्कण्ठाहेतुत्वं ध्वनितम् । कीदृशाः । उत्फुल्लाभ्यामर्जुन-शालाभ्यां वासितः सुरभीकृतो वहन्पौरस्त्यः प्राच्यो यो झञ्झानिलः

---

९६. B. has lost the part from उद्यत्कन्दल to स्निग्धाम्बुदश्रेणयः; केतन for केतक Bh.

९७. °माविर्भूतसिलिन्द्र K2. °माविर्गंधशिलीन्ध्र N. O. Com. for °मा–न्ध्र; रोध्र for लोध्र K2. O.

९८. दूरालोक for दुरालोक E.; °त्यारण्य for °त्यरण्य N.

९९. A. N. om. गिरि; साभ्री for साभ्रं Bh.

१००. मर्जरा° Bh. सार्जवा° C. for सर्जवा°; झञ्झानिल for झञ्झामरुत् A. Bh. E.

१०१. प्रेंखोल्लस्खलितेंदु Bh. प्रेंखोलत्स्खलितेन्द्र N. प्रेंखोलल्ललितेंद्र O. for प्रे–न्द्र; °तेंद्रशेखरमाणिस्निग्धा° for °ते—ग्धा° C.; निवय for शकल E.

धारासिक्तवसुंधरासुरभयः प्राप्तास्त एतेधुना
घर्माम्भोविगमागमव्यतिकरश्रीवाहिनो वासराः ॥

हा प्रिये मालति

१०५ तरुणतमालनीलबहुलोन्नमदम्बुधराः
शिशिरसमीरणावधूतनूतनवारिकणाः ।

---

प्रचण्डवायुः प्रावृषेण्यवातो वा तस्य प्रेङ्खोल आन्दोलनं तेन स्खलिताः स्वस्थानच्युता इन्द्रनीलमणिखण्डा इव श्यामा मेघपङ्क्तयो येषु ते । अत्रार्जुनग्रहणेपि द्वितीयतरोः सर्जस्य ग्रहणं कदम्बाद्युपलक्षणार्थम् । तथा ग्रीष्मोष्मतप्तमहीसिक्तसौरभवन्तः । ईषद्वृष्टौ तदुद्गमात् । घर्मस्य ग्रीष्मस्य विगमोपगमोम्भस आगम आगमनं तयोर्व्यतिकरः संबन्धस्तेन श्रियं शोभां वोढुं शीलं येषां ते । यद्वा । घर्माम्भसः स्वेदजलस्य यौ विगमागमौ तयोर्व्यतिकरः संभेदः । वर्षारम्भ इत्यर्थः । तस्य श्रीः संपत्तिस्तद्वाहिन इत्यर्थः ॥ पौरस्त्य इति पुरसस्त्यक् ॥ झञ्झा ध्वनिविशेषे स्यादिति मेदिनीकरः ॥ तदन्वितोनिलो झञ्झानिलः । यद्वा । झञ्झानिलः प्रावृषेण्य इति रत्नकोशः ॥ अत्र वास्यमानेति कर्तव्ये संपूर्णक्रियात्वपरनिष्ठाप्रत्ययान्तवासितपदोपादानात्समस्तपुष्पसौरभसंक्रान्तिर्वायोर्ध्वनिता । अत एव मलयानिलाज्झञ्झानिलोत्कर्षः कटाक्षितः । उन्मादावस्थो माधवः । उन्मादश्चेष्टवियोगात् । यदाह ।

इष्टजनस्य वियोगादुन्मादो विभवनाशाच्च ।

१०५–१०९ तरुणेत्यादि । कथमधुना दिशोहमवलोकयेयम् । तरुणतमालान्नीलास्तद्वद्वा नीलाः प्रचुरा उद्गच्छन्तो मेघा यासु

---

१०२. एवाधुना for एतेधुना A. E. N.
१०३. वाहिणो for वाहिनो B. C.
१०५. °न्नदमंबु for °न्नमदम्बु Bh.
१०६. °णाविधुत for °णावधूत N.

कथमवलोकयेयमधुना हरिहेतिमती-
मदकलनीलकण्ठकलहैर्मुखराः ककुभः ॥

शोकार्ति नाटयति ।

मक० । कोप्यतिदारुणो दशाविपाकः संप्रति वयस्यस्य । ११०
सास्रम् । मया पुनर्वञ्चायमाणेन विनोद आरब्धः । निःश्वस्य ।

ताः । शीतवातक्षिप्तनवजलकणाः । हरेरिन्द्रस्य हेतिरस्त्रं धनुस्तद्वतीः । मदकलमयूरकोलाहलैःशब्दवतीः ॥ कलहं कलकलेपि चेति विश्वः ॥ सरित इति पाठे प्रतिबिम्बेन मेघवत्त्वम् । हरेः कृष्णस्य हेतिश्चक्रं तन्नामकपक्षियुक्ताः । दुःखितेनर्तुज्ञानं दुःखमयत्वेनैव । यदाह ।

ऋतून्पश्यति दुःखार्तः सर्वान्दुःखसमाश्रितान् ॥ इति ।

तदनेन प्रबन्धेन वर्षाकाल उक्तः । यदाह ।

कदम्बनीपकुटजैः शाद्वलैः सेन्द्रगोपकैः ।
मेघवातैः सुखस्पर्शैः प्रावृट्कालं प्रदर्शयेत् ॥

शोकेति । मूर्च्छितः पततीति भावः ।

१११-११७ विनोदश्चित्तस्वास्थ्यम् । प्रमुग्धः संज्ञाशून्यः । अनुक्रोशोनुकम्पा तद्विपरीतासि । अपेत्यादि । अगणितमात्रादिके हे

१०७ °येहमधुना for °येयमधुना E.

१०८ मद for °मद Bh.; विरुतैः for कलहैः O.; हरितः C. K1. K2. O. सरितः noticed by Com. for ककुभः

१०९. इति before शोकार्ति B.; शोकार्तं for शोकार्ति C.

११०. कोप्यतिशय B. कोयमति C. K1. K2. for कोप्यति; अयं after °रुणो O.; °को वयस्यस्य वर्तते for कः—स्यस्य Bh.; C.K1. om. संप्रति; वर्तते after संप्रति N.

१११. वञ्चमयेन for व-न A. E.; पुनर्वञ्चायमाणेन पुरो विनोदनमारब्धं B. पुनर्वञ्चमयेन विनोद आरभ्यः Bh. पुनरज्ञानेन वञ्चमयेन किल विनोदनं प्रारब्धं N. पुनर्वञ्चमयेन किल विनोद आरब्धः O. for पु-ब्धः; कोपि before विनोद A. E.; निश्वस्य for निःश्वस्य A. Bh. C. E. N.

एवं च पर्यवसितप्रायैव नो माधवमस्याशा । सभयं विलोक्य । कथं प्रमुग्ध एव । आकाशे । मालति मालति किमपरं निरनुक्रोशासि ।

११९ अपहस्तितबान्धवे त्वया विहितं साहसमस्य तृष्णया ।
तदिहानपराधिनि प्रिये सखि कोयं करुणोज्झितक्रमः ।

कथमद्यापि नोच्छ्वसिति । हन्त मुषितोस्मि दैवेन ।

मातर्मातर्दलति हृदयं ध्वंसते देहबन्धः
शून्यं मन्ये जगदविरतज्वालमन्तर्ज्वलामि ।
१२० सीदन्नन्धेतमसि विधुरो मज्जतीवान्तरात्मा

---

सखि अस्य लोभेन त्वया साहसं कृतम् । तदिह प्रिये प्रीते निरपराधेपि निर्दयः क्रमः कोयम् । केयं परिपाटिस्तवेत्यर्थः । कथमीदृशं पतिं त्यक्त्वा निर्दयासीति भावः । उच्छ्वासः संज्ञालाभः ।

११८-१२२ मातरित्यादि । मातर्मातरित्यावेगः । द्विधा भवति हृदयमिति पीडा । अवयवसंधिः शिथिलीभवतीत्यस्वस्थता । विश्वं शून्यं मन्य इति बाह्यासंवेदना निर्वेदः । अविरतज्वालं यथा तथान्तर्ज्वलामीति चिन्ताजनितो दाहः । अन्तरात्मा निरालम्बः सीदन्नवसादं गच्छन्गाढान्धकारे मज्जतीवेति ग्लानिः । विष्वक्सर्व-

---

११२. A. E. om. च; °प्रायेव for °प्रायैव Bh.; °प्रायैव माधवप्रत्याशा नः B. °प्रायैव नो माधवं प्रत्याशा K1. K2. °प्रायैव नो माधवं प्रति प्रत्याशा A. Bh. C. E. for मा-शा.
११३. मुग्ध for प्रमुग्ध Bh.; वयस्यः after एव C. K1. K2.; N. om. आकाशे; सखि A. Bh. E. हा N. before मालति; A. Bh. E. N. om. one मालति; किं परं निरनु° Bh. किं वा निरनु° N. for कि-नु°
११५. साहसमप्यधृष्टया for सा-या Bh. N.
११६. °तः क्रमः for °तक्रमः B. K1. K2. O.
११७. E. om. अपि; E. om. अस्मि; Bh. N. om. दैवेन.
११९. अविकल B. अविरल C. for अविरत.

विष्वङ्मोहः स्थगयति कथं मन्दभाग्यः करोमि ॥

कष्टं भोः कष्टम् ।

बन्धुताहृदयकौमुदीमहो मालतीनयनमुग्धचन्द्रमाः ।
सोयमद्य मकरन्दनन्दनो जीवलोकतिलकः प्रलीयते॥

हा वयस्य माधव १२९

गात्रेषु चन्दनरसो दृशि शारदेन्दु-
रानन्द एव हृदये मम यस्त्वमासीः ।
तं त्वां निकामकमनीयमकाण्ड एव
कालेन जीवितमिवोद्धरता हतोस्मि ॥ स्पृशन् ।

---

तो मोहश्छादयतीति मोहः । मन्दभाग्योहं किं करोमीति दैन्यम् । कथंशब्दः किमित्यर्थे । सर्वनामत्वाज्ज्ञानार्थता ॥ विष्वगित्यत्र सुष-मादित्वात्षत्वम् ॥ परिदेवितमाह । कष्टमिति ।

१२३–१२९ बन्धुतेत्यादि । सोयं बन्धुसमूहचित्तकार्तिक्यु-त्सवो मालतीनेत्रबालचन्द्रो मकरन्दहर्षजनकः सर्वजनतिलकोद्य प्रलयमापद्यत इत्यर्थः ॥ मह उद्धव उत्सव इत्यमरः ॥ गात्रेष्वित्या-दि । यस्त्वं मम काये चन्दनरस आसीः । सुखस्पर्शत्वात् । नेत्रे शरत्कालीनचन्द्रः । आनन्दजनकत्वात् । चित्त आनन्द एव सा-क्षाद्धर्ष एवासीः । तं त्वामतिकान्तमकस्मादेव मम जीवनमिवोद्ध-रतोन्मूलयता कालेन समयेन यमेन वा हतोस्मि । यथा जीवनो-द्धारेहं हतस्तथा त्वदुद्धारेपीति भावः ।

---

१२१. विभङ्मोहः K1. विश्वं मोहः K2. for वि–हः

१२२. C. om. भोः.

१२३. पूर्ण A. Bh. E. बाल K2. for मुग्ध.

१२४. माधवोथ for सोयमद्य B.

१२६. हृदि for दृशि Bh.

१२८. तत्त्वां नि° A. तं त्वा नि B. E. तं त्वा प्र° Bh. for तं त्वां नि°.

१२९. °तासियं हरता for त-ता Bh.; गात्रमस्य C. गात्रमस्य सं° K1. K2. before स्पृशन्.

११० अकरुण वितर स्मितोज्ज्वलां दृशमतिदारुण देहि मे गिरम् ।
सहचरमनुरक्तचेतसं प्रियमकरन्द कथं न मन्यसे ॥

माधवः संज्ञां लभते ।

मक० । सोच्छ्वासम् । अयमचिरधौतराजपट्टरुचिरमांसल-
च्छविर्नवजलधरस्तोयसीकरासारेण प्रियवयस्यं मे जीवयति ।
११५ दिष्ट्या समुच्छ्वसितस्तावत् ।

---

१३०–१३३ सोन्मादो विलपति । अकरुणेत्यादि । हे निर्दय हासमनोज्ञां दृशं देहि । हासपूर्वं पश्येत्यर्थः । यद्वा । स्मितेन विकासेनोज्ज्वलां विकसितामित्यर्थः । वचनादानादतिदारुण हे मे वाचं देहि । मित्रमनुरक्तचित्तं हे प्रियमकरन्द कथं न मन्यसे । कथं नाङ्गीकरोषि । इष्टावेगादीनां सत्त्वात्करुणो रसः । यदाह ।

इष्टनाशधनापायबन्धुव्यसनताडनैः ।
शापक्लेशोपघातैश्च जायते करुणो रसः ॥
अश्रुनिश्वासवैवर्ण्यस्रस्ताङ्गैश्च स्मृतिक्षयैः ।
परिदेवितशोकाद्यैरभिनेयः स सूरिभिः ॥

अचिरधौतत्वेन राजपट्टस्य नीलत्वास्निग्धत्वे उक्ते । राजपट्ट खर्ढीति ख्यातम् । रुचिरा दीप्तिमती मांसला घना च्छविः कान्तिर्यस्य सः ।

---

११३. सका for मक° Bh.; प्रियं for अयं B.; अविरल for अचिर O.

११४. घघ(?) लधरस्तोय Bh. जलदस्तोय N. for ज-य; शीकरा° for सीकरा° E. N.; °सारवर्षेण for °सारेण B.; मे वयस्यं Bh. O. मे प्रियवयस्यं K1. K2. for प्रि-मे; A. E. om. प्रिय; C. om. मे; संजीवयति for जीवयति Bh. N.

११५. जगदुच्छ्वसितन्तावत् for स-त् A.; उच्छ्वसि° B. यदुच्छ्वसि° C. E. K1. K2. for स-सि°; °सितं तावत् for °सि-त् Bh.; माधवः after तावत् B. O.

माध०। तत्कमत्र विपिने प्रियावार्ताहरं करोमि। विलोक्य। साधु साधु।

फलभरपरिणामश्यामजम्बूनिकुञ्ज-
स्खलिततनुतरङ्गामुत्तरेण स्रवन्तीम्।
उपरि विघटमानः प्रौढतापिच्छनीलः १४०
श्रयति शिखरमद्रेर्नूतनस्तोयवाहः॥

सरभसमुत्थायोन्मुखः कृताञ्जलिः।

१३६-१४२ वार्ताहारो दूतः। अतिप्रवृद्धकालतया दूतप्रेषणम्। यदाह।

प्रसह्यमानकामार्तो बहुस्थानसमुत्थितः।
स्वावस्थादर्शनार्थं तु प्रेषयेद्दूतमात्मनः॥

फलेत्यादि। नवमेघो गिरेरग्रं श्रयति। फलभारपाकश्यामजम्बूनिकुञ्जात्स्खलनेनाल्पकल्लोलां नदीमुत्तरेण नद्या उत्तरसमीपे॥ एनपा द्वितीया॥ कीदृशः। उपरि विघटमान ऊर्ध्वस्थानं त्यजन्। विकासितमालपुष्पान्नीलस्तद्वद्वा नीलः। उपचितघनमालेति पाठ उपचिता घना च माला येषामित्यर्थः। घने नूतनत्वेनातिश्यामता। यद्वा। स्रवन्तीमुपरि विघटमानो विविधप्रकारेण श्रयन्। उत्तरेणोत्तरदेशे॥ उत्तरेणेति विभक्तिप्रतिरूपको निपातः॥ किंचिदेवो-

१३६. सावेगं before तत्क° Bh.; तत्कथमत्र A. B. O. तत्किमत्र K2. तत्किमिवात्र N. for त-त्र; E. om. विपिने; प्रियाया for प्रिया C. O.; वार्तामहं for वा-रं O.; हर्तारं E. करं K2. for हरं.

१३७. Bh. om. one साधु.

१३८. परिणाह for परिणाम N.

१३९. शरीराम्° for तरङ्गामु° N.; श्रवंतीं Bh. स्रवंती C. E. for स्रवन्तीम्.

१४०. उपचितघनमालप्रौढ for उ-ढ A.; मान for मानः Bh. N.

१४२. सादरं for सरभसं A. E.; उन्मुखं for उन्मुखः E.

कच्चित्सौम्य प्रियसहचरी विद्युदालिङ्गति त्वा-
माविर्भूतप्रणयसुमुखाश्चातका वा भजन्ते ।
१४५ पौरस्त्यो वा सुखयति मरुत्साधुसंवाहनाभि-
र्विष्वग्बिभ्रत्सुरपतिधनुर्लक्ष्म लक्ष्मीं तनोति ॥

त्तरणेतिवत्। आश्रयार्थकतया घटेः सकर्मकता ॥ स्रवन्ती निम्न-गापगेत्यमरः ॥ कृताञ्जलिरित्यनेन विनय उक्तः । विनयपूर्वकश्च संदेशः कार्यः । यदाह ।

संदेशं चैव दूत्यास्तु प्रदद्यान्मदनाश्रयम् ।
तस्येयं समवस्थेति कथया विनयेन हि ॥

१४३–१४६ कच्चिदित्यादि । प्रार्थनोचितं सुभगप्रश्नमाह । हे सौम्य सुन्दर प्रिया वल्लभा सहचरी सततानुगता विद्युत्त्वामालिङ्गति कच्चित् । कथयेत्यर्थः ॥ कच्चित्कामप्रवेदन इत्यमरः ॥ विरहित्वेन कान्ताभिलाषात्प्रथमं कान्तासंगमप्रश्नः ॥ चारुचन्द्र-जयोः सौम्य इति शाश्वतः ॥ प्रियालिङ्गने सुखं तद्विरहे दुःखमिति त्वमपि जानासीति ध्वनितम् । यद्वा । कच्चिदेवमभिमतं ममेत्यर्थः । उत्पन्नस्नेहेन सुभगाः सुमुखाश्चातकास्त्वां सेवन्ते । वा समुच्चये । अनेनार्थिसंपत्तिरुक्ता । पुरोवातश्च मृदुप्रेरणाभिस्त्वां सुखयति । अन्योपि सहायश्चरणमुष्टिग्रहणादिरूपसंवाहनां कुरुत इति ध्वनिः । अनेन सहायसंपत्तिरुक्ता । विष्वक्सर्वतो लक्ष्मीं शोभां बिभ्रदिन्द्र-धनुः ॥ कर्तृ ॥ लक्ष्म चिह्नं तव तनोति । अनेन प्रसाधनमुक्तम् । विश्वं बिभ्रदिति पाठे हे विश्वं बिभ्रद्भुवनं दधान । वर्षेण सस्या-

१४३. °चरं for °चरी A. Bh.; °ते ता° for °ति त्वा° Bh.

१४४. मुखराः B. O. सुखिताः E. सुभगाः Com. for सुमुखाः

१४५. सांद्र for साधु Bh.

१४६. विष्वग्बिभ्रक् B. विश्वाग्बिभ्रत् K1. विस्वं बिभ्रत् K2. विष्वग्द्रीचं N. विश्वं बिभ्रत् and बिंबं बिभ्रत् noticed by Com. for विष्वग्बिभ्रत्; °क्ष्मीवदेतत् for °क्ष्मीं-ति K2.

आकर्ण्य । अयं प्रतिरवभरितकन्दरानन्दितोत्कण्ठनीलकण्ठक-लकेकानुबन्धिना मन्द्रहुंकृतेन मामनुमन्यते । यावदभ्यर्थये । भगवन् जीमूत

दैवात्पश्येर्जगति विचरन्निच्छया मत्प्रियां चे-
दाश्वास्यादौ तदनु कथयेर्माधवीयामवस्थाम् । १५०

---

दिसमृद्ध्या जगदुपकारकत्वमुक्तम् । प्रसाधनमाह । इन्द्रधनूरूपं चिह्नं तव शोभां तनोति । बिम्बं बिभ्रदिति पाठे तु बिम्बं मण्डलं शोभां तनोति । कीदृशम् । इन्द्रधनुश्चिह्नं बिभ्रद्दधानम् । तदिह जगदु-पकारकतया ममाप्युपकारं करिष्यसीति भावः ।

१४७–१५४ गर्जितेनानुमतिमाह । अये इति । प्रतिशब्दभ-रितकन्दरत्वेनानन्दिता समृद्धोत्कण्ठा यस्य सः । यद्वा । आनन्दिता हृष्टा उत्कण्ठा उद्ग्रीवा इत्यर्थः । मन्द्रं गभीरम् । अनुम-न्यते स्वीकरोति । आर्तिवशाद्देवत्वारोपणेन भगवन्निति । अव-धारणे यावत् । जीमूत मेघ । दैवादित्यादि । इच्छया जगति विचरंस्त्वं मत्प्रियां यदि दैववशात्पश्येर्द्रक्ष्यसि तदा प्रथमं तां प्रबोध्याथ माधवदशां कथयिष्यसि । अवस्थानिवेदनेन तन्मरणमा-शङ्क्याह । कथयता त्वयाशा पुनःसंगमप्रत्याशा सैव तन्तुः ।

---

१४७. अथ किं B. अपि कथं O. before अयं; अये for अयं Bh. K1. K2. Com. °त्कंठनीलकंठेन कांतेन ध्वनिना Bh. °त्कंठितनीलकंठेन कांतेन ध्वनिना N. for °त्क-न; A. om. नीलकण्ठ; K1. K2. om. कल.

१४८. निकाम before मन्द्र O.; A. E. om. मन्द्र; इदमेव तावत् for यावत् B.; अर्थये for अभ्यर्थये A.; अभ्यर्थनीयो भगवाञ्जीमूतः for अभ्य- त Bh.

१४९. जीमूतनाथ for जीमूत N.

१५०. पश्येज्जगति स भवान् for प-रन् O.; यदि जगति तां मत्प्रियां मालतीं चे° for ज-चे° B.; मालतीं for इच्छया N. O.

१५१ आश्वस्य for आश्वास्य B. E. N.; °येत् for °येः O., माधवस्थाम् for माध-वीयाम् Bh. N. O.

आशातन्तुर्न च कथयतात्यन्तमुच्छेदनीयः

प्राणत्राणं कथमपि करोत्यायताक्ष्याः स एकः ॥

सहर्षम् । अये प्रचलितः । तदन्यतः संचरामि । परिक्रामति ।

१५५ मक० । साकूतम् । कथमिदानीमुन्मादोपरागो माधवेन्दुमास्कन्दति । हा तात हा अम्ब हा भगवति परित्रायस्व परित्रायस्व । पश्य माधवस्यावस्थाम् ।

---

जीवनबन्धहेतुत्वात् । नैवात्यर्थमुच्छेद्यः । चैवार्थे । अत्र हेतुमाह । स आशातन्तुरेकस्तस्याः प्राणत्राणं कष्टाकष्ट्या करोति नाहमित्यर्थः । इह तावत्कालं सा जीवति न वेति संभावना दर्शनस्य दैवादित्यनेनोक्तम् । प्रसंगतो मत्कार्यमिति जगति विचरन्नित्यनेनोक्तम् । मत्प्रियामित्यनेन सुकुमारत्वादिना विरहदुःखासहिष्णुतोक्ता । आदावाश्वासनं वार्ताश्रवणपटुत्वार्थम् । अत्यन्तमित्यनेन मध्यमविधया दशाकथनम् । तेन च तन्नैराश्यनिषेध इत्युक्तम् । कथमपीत्यनेनाशातन्तुमात्रं तद्रक्षणाय कल्पत इत्युक्तम् । आयताक्ष्या इत्यनेन कटाक्षादिस्मरणेन गुणकीर्तनम् । माधवस्येयं माधवीया ॥ वृद्धाच्छः ॥ उन्मादावस्थेयम् । असंबद्धप्रलापात् । सहर्षत्वं मद्वचनमङ्गीकृत्य प्रचलित इति ।

१५५–१६० उपरागो राहुग्रासः । शैशवे संकटप्रदेशे पित्रादीनां स्मरणस्य स्वभ्यस्ततया विरहसंकटेपि तदाह हा तातेति ।

---

१५२. विच्छेदनीयः for °मुच्छेदनीयः C.

१५३. भवति for करोति Bh.; °ताक्षणः for ताक्ष्याः B.; एव C. K1. एवं K2. for एकः

१५४. अहो A. E. अयं K2. for अये; B. om. अये; तावदयं after प्रचलितः B.; अन्यमनुसरामि for अन्य-मि K2.; अन्यत्र for अन्यतः A. Bh. C. E. K1. O.; इति before परि° C. K1. K2.

१५५. सोद्वेगं A. Bh. N. स्वगतं B. for साकूतम्; °द उपराग इव माध° for °दो-ध K1. K2.; °ग इव माध° Bh. °ग एव माध° C. N. O. for °गो माध°

१५६. A. E. om. हा before भग°; त्रायस्व for परित्रायस्व B.; B. Bh. N. om. one परित्रायस्व.

१५७. माधवावस्थां A. E. माधवीयामवस्थां Bh. माधवस्यामवस्थां N. for मा-म्.

माध० । धिक्प्रमादः ।

नवेषु लोध्रप्रसवेषु कान्तिर्दृशः कुरङ्गीषु गतं गजेषु ।

लतासु नम्रत्वमिति प्रमथ्य व्यक्तं विभक्ता विपिने प्रिया मे । १६०

हा प्रिये मालति ।

मक० । सुहृदि गुणनिवासे प्रेयसि प्राणनाथे

कथमपि सहपांसुक्रीडनप्रौढसख्ये ।

---

प्रमादोऽनिष्टम् नवेष्वित्यादि । नूतनलोध्रपुष्पेषु कान्तिः पाण्डिमा गौरत्वं वा । इह नवपदेन स्निग्धतोक्ता । दृशो विलोकितानि हरिणीषु । गमनं हस्तिषु । नम्रत्वं लतासु । इतिशब्द आद्यर्थे । हेला-लीलेत्यमी हावा इतिवत् । प्रमथ्य मारयित्वा मे प्रिया विपिने विभक्ता खण्डखण्डीकृत्य धृता । यद्वा । इतिः प्रकारार्थः । तेन लोध्रप्रसवादिभिर्मे प्रिया विभागीकृता । कान्त्यादिविभागद्वारा प्रिया विभाग एवोऽनीयत इत्यवधेयम् । विपिन इति प्राणिवधस्थानाभिप्रायम् ।

१६२-१६८ सुहृदीत्यादि । हे हतहृदय कथमपि विदीर्य द्विधा त्वं न प्रयासि । हतेति निन्दायाम् । मित्रे गुणनिधानेतिप्रेम-वति जीवेश्वरे सहधूलिक्रीडागाढमैत्रे कान्तावियोगमनोव्यथाव्याधि-मन्तर्दधाने सति । सुहृदित्यादौ हेतुहेतुमद्भावः ॥ धूलिः स्त्रियां

---

१५८ त्रिपदिकया सर्वतोवलोक्य after माध° A.; हा before धिक् K1. K2.

१५९. रोध्र for लोध्र K1. K2. O.; प्रभवेषु for प्रसवेषु C.; °न्ति दृ° for °न्तिर्दृ° K1. K2.; दृशौ कुरंगेषु for दृ-षु N.; कुरङ्गेषु for कु-षु K1. K2. O.; गजेषु यातं for गतं गजेषु A. C. E. K1. K2. O.

१६०. स्फुटं for व्यक्तं K1.; प्रियास्मिन् for प्रियामे A. C. E. K1. K2. O.

१६१. हे for हा K2.; इति मूर्च्छति after मालति A.

१६३. इव A. E. N. O. इह Bh. for अपि; पांशु for पांसु Bh.

प्रियजनविरहाधिव्याधिवेगं दधाने
१६९ हतहृदय विदीर्य त्वं द्विधा न प्रयासि ॥

माध० । सुलभानुकारः खलु जगति वेधसो निर्माणसंनिवेशः । भवत्वेवं तावत् । उच्चैः । अयमहं भोः प्रणिपत्य भूधरारण्यचारिणः सत्त्वान्विज्ञापयामि मां मुहूर्तमवधानदानेनानुगृह्णन्तु भवन्तः ।

१७० भवद्भिः सर्वाङ्गप्रकृतिरमणीया कुलवधू-
रिहस्थैर्दृष्टा वा विदितमथ वास्याः किमभवत् ।

---

पांसुर्नेत्यमरः ॥ प्रियाविभागाशङ्कां निरस्यति सुलभेति । संनिवेशः प्रकारः । अनुकारः सादृश्यम् । तथा च लोध्रप्रसवादीनि प्रियाकान्त्याद्यनुकारीणि न तु सा विभक्तेति भावः । सत्त्वान्प्राणिनो विज्ञापयामीति सानुनयं वचनम् ।

१७०-१७२ भवद्भिरित्यादि । भवद्भिरिहस्थैः सर्वाङ्गेषु स्वभावरम्या सा कुलवधूर्दृष्टा वा । अथ वास्या भवद्भिः किं वि-

---

१६४. खेदं for वेगं Bh. N. O.

१६५. विशीर्य किं वि[द्वि?]धा किं न यासि for वि-सि C.; विदीर्ण E. विशीर्य K1. O. for विदीर्य.

१६६. आश्वस्योत्थाय after माध° A.; अ (added in marg.) before सुल° O.; B. om. खलु; Bh. K1. om. जगति.

१६७. प्रणिपत्य Bh. प्रकाशं K1. K2. for उच्चैः; B. N. O. om. उच्चैः; अयमयं for अ-हं E. O.; Bh. om. प्रणिपत्य.

१६८. भो for भू K1.; भूय एवारण्य for भू-ण्य Bh.; वासिनः for चारिणः B. N. तेमां for मां K1. K2.; ते before मां A. C. E. O.; मां after दानेन instead of before मुहू° Bh.; अवधानेन for अवधानदानेन C. E. K1. O.

१६९. A. C. E. O. om. भवन्तः

१७०. खलु for कुल B. O. (in marg.)

१७१. विहितमिह (मथ in marg.) तस्याः for वि-स्याः O.; विहितम् for विदितम् E.; इह K1. अपि K2. for अथ.

वयोवस्थां तस्याः शृणुत सुहृदो यत्र मदनः
प्रगल्भव्यापारश्चरति हृदि मुग्धश्च वपुषि ॥

कष्टं भोः कष्टम्।

केकाभिर्नीलकण्ठस्तिरयति वचनं ताण्डवादुच्छिखण्डः १७५
कान्तामन्तःप्रमोदादभिसरति मदभ्रान्ततारश्चकोरः।
गोलाङ्गूलः कपोलं छुरयति रजसा कौसुमेन प्रियायाः
कं याचे यत्र तत्र ध्रुवमनवसरग्रस्त एवार्थिभावः ॥

---

दितमभवत्। शुभमशुभं वा किं विज्ञातमित्यर्थः। ननु तस्याः किं वय इत्याह। हे सुहृदस्तस्या वयोवस्थां शृणुत। यत्र वयोवस्थायां हृदि मदनः प्रगल्भव्यापारो वपुषि मुग्धो बालश्चरति। एतेन वयःसंधिरुक्ता। सर्वाङ्गेत्यनेनाभिज्ञानप्रकाशनम्। कुलवधूत्वेन चाञ्चल्याभावः। इहस्थैरित्यनेन परिचयचातुरी। वाकारद्वयेन दर्शनवृत्तान्तयोः सफलत्वं दर्शयति।

सुरते निःसाध्वसता प्रागल्भ्यं समुदाहृतम् ॥

इति भरतः।

१७५-१७८ केकाभिरिति। किं यत्र तत्र याचे। अपि तु न किमपि प्रार्थये। यतोप्रस्तावग्रस्तोर्थिभावोर्थित्वम्। अनवसरमाह। नृत्यादुन्नतपिच्छभारो मयूरः केकाभिर्वचनं छादयति। चकोरः पक्षिभेदो मत्ततया भ्रमत्तारकः संश्लिष्टहर्षात्प्रियामभिसर-

---

१७२. सुहृदोः B. सुहृदां E. for सुहृदो.

१७४. A. N. om. 2nd कष्टम्.

१७५. स्थगयति for तिरयति N.

१७६. कान्तामत्त for कान्तामन्तः B. C.; रसति for सरति C.

१७७. कौङ्कुमेन for कौसुमेन B.

१७८. किं B. कथं Bh. for कं; तत्र तत्र for यत्र तत्र N. O,; व्यस्त (corrected in marg. to ग्रस्त) for ग्रस्त O.

अयं च । दन्तच्छदारुणिमरञ्जितकान्तदन्त-

१८० मुन्नम्य चुम्बति वलीवदनः प्रियायाः ।

काम्पिल्लकप्रसवपाटलगण्डपालि

पाकारुणस्फुटितदाडिमकान्ति वक्त्रम् ॥

एष प्रियतमास्कन्धविश्रान्तकरः करी । कथमत्राप्यनवसरः ।

---

ति । गोलाङ्गूलः श्याममुखो वानरः पुष्पजधूल्या कान्तायाः कपोलौ चित्रयति । अतः सत्त्वानामन्यत्रासक्ततयार्थित्वानवसर इति भावः ॥ प्लवङ्गकीशप्लवगगोलाङ्गूलबलीमुखा इत्यमरमाला ॥ कं याच इति पाठे कं प्राणिनं प्रार्थय इत्यर्थः ।

१७९–१८३ दन्तेत्यादि वलीवदनो वनारोयं कान्ताया मुखमुत्क्षिप्य चुम्बति । कीदृशम् । अधररागेण रक्ता मनोज्ञा दशना यत्र तत् । काम्पिल्लो रोचनीवृक्षः ॥ स्वार्थे कन् । तस्य प्रसवेन पुष्पेण फलेन वा रक्तगण्डप्रदेशः । पाकान्तरमन्तिमपाकस्ततः स्फुटितं विदीर्णं यद्दाडिमफलं तत्कान्ति । तत्समित्यर्थः । तदिहाप्यनवसर एव ॥ शाखामृगबलीमुखा इत्यमरः । काम्पिल्लः कर्कशश्चन्द्रो रक्ताङ्गो रोचनीत्यपीत्यमरः ॥ रोहिणानोकहो रोहणवृक्षः ।

---

१७९. दंतकांत° for कान्तदन्त° N. O.

१८१. कांपिल्यक for काम्पिल्लक Bh. K1. K2. N.; पाली for पालि E. N.

१८२. पाकान्तर for पाकारुण G. Com.

१८३. अग्रतोवलोक्य । अये B. अग्रतो विलोक्य । अये O. before एष; अये अयं च रोहिणानोकह for ए-मा Bh. N., च after एष K2.; विश्रांत for विश्रान्त C.; रोहिणानोकहस्कन्धविश्रान्तकन्धरः before करी A. E. K1. (स्कन्द) K2.; °मप्यत्रा° K1. °मस्याप्यत्रा° K2. for °मत्राप्य°; अस्य for अत्र B.

कण्डूकुड्मलितेक्षणां सहचरीं दन्तस्य कोट्या लिख-
न्पर्यायव्यतिकीर्णकर्णपवनैराल्हादिभिर्वीजयन् । १८९
जग्धार्धैर्नवसल्लकीकिसलयैरस्याः स्थितिं कल्पय-
न्धन्यो वन्यमतङ्गजः परिचयप्रागल्भ्यमभ्यस्यति ॥

अन्यतोवलोक्य । अयं तु ।

नान्तर्वर्तयति ध्वनत्सु जलदेष्वामन्द्रमुद्गर्जितं
नासन्नात्सरसः करोति कवलानावर्जितैः शैवलैः । १९०

---

१८४-१८७ कण्डूत्यादि । अयं सुकृती वन्यहस्त्यस्याः प्रियायाः परिचयप्रागल्भ्यं सुरतनिःसाध्वसतामनुतिष्ठति । कीदृशः । कण्डूतिमुद्रितेक्षणां प्रियां दन्ताग्रेणालिखन्नीषदुल्लिखन् । कण्डूयन्नित्यर्थः । अत एव कण्डूकाले कुड्मलितेक्षणत्वं जातिः । पर्यायेण क्रमेण निःक्षिप्तौ कर्णौ तयोर्वातैः सुखदैर्वीजयन् । कवलितार्धैर्नवशल्लकीपल्लवैरस्याः प्राणधारणं कल्पयन् ।

१८८-१९२ नान्तरित्यादि । अयं स्तम्बेरमो हस्ती ताम्यति ग्लानो भवति । नूनं निश्चितं प्रेयसीविश्लेषेण विह्वलः । जलदेषु ध्वनत्सु सत्स्वीषद्गम्भीरमुन्नतकण्ठगर्जनं नान्तर्वर्तयति न करोति । समीप-

---

१८४. गंडू for कण्डू Bh., कुट्म° for कुड्म A. K1. K2. N.; °णामनुचरीं for °णां-रीं A. E. O.

१८५. जीवयन् for वजियन् C.

१८६. शाल्लकी for सल्लकी A. E.; किशल° for किसल° E.; कारयन् for कल्पयन् N.

१८७. मन्ये for धन्यो B.; प्रारंभ° for प्रागल्भ्य° N.

१८८. A. E. om. अन्यतोवलोक्य; विलोक्य for अवलोक्य Bh.; K1. K2. om. अयं तु.

१९०. कवलान्यावर्तितैः A. कवलान्यावर्जितैः E. for क-तैः.

दानज्यानिविषादमूकमधुपव्यासङ्गदीनाननो
नूनं प्राणसमावियोगविधुरः स्तम्बेरमस्ताम्यति ॥

अलमनेनायासितेन । एष सानन्दसहचरीसमाकर्ण्यमानमधुरगम्भीरकण्ठगर्जितध्वनिरपरो मत्तमातङ्गयूथपालः प्रत्यग्रवि-

---

स्थात्सरस आवर्जितैर्मिलितैः शैवलैः कवलान्न करोति । मदहान्या यो विषादस्तेन मूकानां भ्रमराणां व्यासङ्गेनान्यचित्ततया शोच्यमुखः । यद्वा । व्यासङ्गो विशेषेणासङ्ग इत्यर्थः । तदिह मदहानिश्चिन्तया संतापात् । दीनत्वमधोमुखचिन्तनात् । एतेनानुस्मृतिसंजाता विषयव्यावृत्तिरुक्ता ।

१९३–२०१ अहमिवायमपि कान्तातिरिक्तमन्यन्न वेत्तीत्यत आह । अलमिति । रतौत्सुक्यान्मधुरकण्ठगर्जितश्रवणाद्वा सानन्देति । मातङ्गो हस्ती । संपातः संपर्कः । संगलितो मिलितः । मांसलः पीनः । निष्यन्दो मदः । कषायः सुगन्धिः । करटो गण्ड-

---

१९१. ज्याति for ज्यानि Bh.

१९२. मधुरः for विधुरः E.

१९३. तद् before अलम् C. K1. K2.; मम Bh. अपि N. after अनेन ; अन्यतः संचरामि । विलोक्य A. अन्यतोवलोक्य सादरं Bh. अन्यतश्चावलोक्य सादरं K2. सानंदं N. before एष; सानंदं for सानन्द C.; गृह before सह Bh.

१९४. गंभीरधीरकंठध्वनिः प्रवृद्धनवयौवनोन्मादप्रस्तुतामंदसप्तपर्णप्रसूनमकरंदसुंदरमदवारिसंस्वाददत्तचित्तोन्मत्तानुरक्तेंदिंदिरानिकरझणझणायमानरणत्कारझंकारसंभारभवणालंबितकर्णो गोदावरींदीवरवासितामंदमकरंदतुंदिलमलयानिलोल्लासितामलविदलितलालितकमलपरंपरापुंजपरिमलप्राग्भारघ्राणसुखितेंद्रियवर्गोपरोन्मत्तमातंगवर्गपालः for गम्भी–पालः B.; ध्वनि–पालः corrected in margin into ध्वनिः प्रवृद्धम as in B. with प्रसृत for प्रस्तुत, with उन्मत्त omited, with °त्तेंदिं° for °क्तेंदिं°, °त्कार for °त्कर, अवलं° for आलं° वास before वासित, सुख before सुखित, °रो मत्त for °रोन्मत्त O.; °रोन्नम for °रो मत्त C.; अपि after °परो Bh.; °रोपि मत्तमातंगवर्गपालकः for °रो–लः N.

कसितकदम्बसंघातसुरभिशीतलामोदबहलसंगलितमांसलकपो- १९९
लनिष्यन्दकर्दमितकरटःसमुद्दलितकमलिनीखण्डविप्रकीर्णपर्ण-
कमलकेसरमृणालबिसकन्दकोमलाङ्कुरनिकरमनवरतप्रवृत्तक-
मनीयकर्णतालताण्डवप्रचलजर्जरितजलतरंगविततनीहारमुक्त-
स्तकुररसारसं सरोवगाह्य विहरति । भवत्वाभाषे । महाभाग
नागपते श्लाघ्ययौवनः खल्वसि कान्तानुवृत्तिचातुर्यमप्यस्ति २००
भवतः । किं तु । सापवादम् ।

---

देशः ॥ सुरभौ च कषायः स्यादिति शाश्वतः ॥ समुद्दलितमु-
न्मूलितम् । पर्णं पत्रम् ॥ तालो गीतक्रियामाने मध्यमाङ्गुलिसंमित
इत्यमरमाला । नीहारस्तु कुहेलिकेति हारावली ॥ कुररः पक्षिभेदः ।
अनुवृत्तिः सेवा । सापवादं सदोषम् ।

---

१९५. °कशित for °कसित A. E.; संपीत Bh. संपात C. संवादि N. संवाद O. for संघात; मेदुर for ब–सल N.; बहुल A. बल K1. for बहल; संवलित A. C. K1. K2. संकलि[त] E. for संगलित.

१९६. विस्यन्द for निष्यन्द K1. O.; कषायकरटः समुद्द° A. तटं समुद्द° Bh. कषायसमुद्द° C. कषायमुद्द° B. N. कपोलतटः समुद्द° K1. K2. for क–द्द; षण्ड प्रकीर्ण for ख–कीर्ण K2.; षण्डप्रकीर्ण for ख–मल N. विकीर्ण A. प्रकीर्ण C. K1. for विप्रकीर्ण; पत्र for पर्ण C.; Bh. O. om. पर्ण.

१९७. B. om. मृणाल; N. om. बिस; बिश for बिस O.; N. om. कोमल; °रमाहरत्र° A. E. °राविकिरम° B. °रमन्य° Bh. °रमनोहरम° C. K1. °रावकरम° O. for °रनिकरम°; K2. om. निकर; N. om. कमनीय.

१९८. A. E. O. om. कर्ण; तालतांडवकर्ण for क–व Bh.; Bh. K1. K2.; om. प्रचल; बल for प्रचल C.; कर्ण after प्रचल A. B. E. O.; जर्जरित K1. जर्झरिततरल N. for जर्जरित; नल before जल Bh.; तङ्ग for तरंग K1.; °रस-मुद्गस्त A. °रं समुच्चस्त C. K1. K2. °रसमुच्चस्त E. for °र–स्त.

१९९. क्रीडति for विहरति B. Bh. N. O.; एवं A. Bh. एनं E. before आभाषे; आभाषये for आभाषे B.; A. om. महाभाग.

२०१. A. Bh. E. K2. N. O. om. किं तु; सावक्रन्दम् for सा–दं K2.; तु after ° वादम Bh. N. O.

लीलोत्खातमृणालकाण्डकवलच्छेदेषु संपादिताः
पुष्यत्पुष्करवासितस्य पयसो गण्डूषसंक्रान्तयः।
सेकः सीकरिणा करेण विहितः कामं विरामे पुन-
२०५ र्न स्नेहादनरालनालनलिनीपत्त्रातपत्रं धृतम् ॥

कथमवधीरणानीरसं व्रजति । हन्त मूढ एवास्मि यो-
ऽस्मिन्वनेचरे वयस्यमकरन्दोचितं व्यवहरामि । हा प्रियवयस्य

---

२०२–२०६ लीलेत्यादि । क्रीडोन्मूलितबिसदण्डकवलसमा-
प्तिषु विकसत्पद्मसुरभितस्य जलस्य गण्डूषसंक्रान्तयः संबन्धाः सं-
पादिता दत्ताः । पुष्यदिति पाठे पुष्टीभवदित्यर्थः । अम्भःकणवता
स्थूलहस्तेन सेकः कृतः । तदिदं द्वयं कामं युक्तमेव । दोषमाह ।
विरामे सरोवगाहविरतौ गमनकाले पुनरकुटिलनालपद्मपत्रच्छत्रं न
स्नेहाद्धृतम् । एतदयुक्तमित्यर्थः । अतः कान्तानुवृत्तिं न जाना-
सीति भावः ॥ पुष्कराम्भोरुहाणि चेत्यमरः ॥ गण्डूषपदेन
स्वयं पीत्वा जलदानं ध्वनितम् ॥ नलिनी पद्मिनी पद्ममित्य-
मरलता । अरालः कुटिले मत इति मेदिनीकरः ॥ आतपा-
त्त्रायत इत्यातपत्रमित्युचितं पदम् । चलचित्तत्वेन पार्श्वस्थं
मित्रमपश्यन्सखेदमाह कथमिति ।

---

२०२. खंड for काण्ड B.; संपातिताः for संपादिताः B. C.

२०४. शीक° for सीक° A. E. K1. K2. N. O.

२०५. तद् for न N.; बाल for नाल A. B. E.; रूप for पत्र N.

२०६. निरूप्य B. O. विलोक्य K2. before कथम°; नीरसो for नीरसं O.; व्रजसि B. जनयति E. for व्रजति; A. om. अस्मि यः; यद् for यः Bh.

२०७. वन for वने N.; अपि after °चरे N; प्रिय for वयस्य Bh.; न E. कलयन् O. before व्यवह°; A. E. om. प्रिय; मकरंद before वयस्य Bh. मकरंद after वयस्य N.

धिगुच्छ्वसितवैशसं मम यदित्थमेकाकिनो
धिगेव रमणीयतां त्वदनुभावभावादृते ।
त्वया सह न याति योऽत्र दिवसोऽपि स ध्वंसतां  २१०
प्रमोदमृगतृष्णिकां धिगपरत्र या जायते ॥

२०८-२११ धिगित्यादि । इत्थमेकाकिनो मम यदुच्छ्वसितवैशसं प्राणधारणदुःखं तद्धिग्वृथा । एकाकित्वमत्र हेतुः । धिगेव रमणीयवस्त्वनुभवान्वृथाभाविन इति मुख्यपाठः । रम्यपदार्थविषयानुभवान्निष्फलोत्पादशीलान्धिक् । रमणीयवस्त्वनुभवादिति पाठे वृथाभाविनोऽनुभवाद्रम्यवस्तु धिक् । निष्फलं तज्ज्ञानमित्यर्थः। धिगेव रमणीयतां त्वदनुभावभावादृत इति पाठे मम सौन्दर्यादिकं धिक् । कुतः । तवानुभावः सहभावस्तत्र भावोऽभिप्रायस्तं विना । यद्वा । अनुभावे वागङ्गसत्त्वाभिनये भावः सत्त्वं तं विना ।

वागङ्गसत्त्वाभिनयेऽनुभावस्तु स्मृतो बुधैः ॥

इति भरतः । भावादित्यृतेर्योगे पञ्चमी ॥ त्वया मकरन्देन तया मालत्या च सह यो दिवसो नास्ति सोऽपि दिवसो विलीयताम् । अन्यत्र मालतीमकरन्दाभ्यां या प्रमोदमृगतृष्णा मम जायते

२०८. °च्छ्वसिमि for °च्छ्वसित° N.; समघटीत्थ° for मम यदित्थ° E.

२०९. धिगेव रमणीयवस्त्वनुभवान्वृथाभाविनः Bh. K2. Com. धिगेव रमणीभवंत्व-(य-वस्त्व) नुभवं वृथाभाविनं G. विरोधिरमणीयवस्त्वनुभवाद्विधाभाविनः N. विरोधरमणीयवस्त्वनुभवत् वृथाभावितः (corrected in marg. into the reading of the text) O. for धि-ते; अनुभवात् noticed by Com. for its own अनुभवान् ; तद् for त्वद् E. K1.

२१०. सहनयस्तयां च दिवसः स विध्वंसतां A.E.N. सह न यस्तया च दिवसोऽपि स ध्वंसतां Bh. न सह यस्तयाच दिवसोऽपि सर्वःसतां(corrected in marg. into the reading of the text) O.; योऽपि दिवसोऽत्र for यो-पि K2.; भाति for याति B.

२११. प्रमोह for प्रमोद N.; या मानुषे A. E. O. ( corr. in marg. into या जायते) का मानुषी Bh. का मानुषे N. for या जायते.

मक० । अये उन्मादमोहान्तरितोपि मां प्रति कुतश्चिद्व्यञ्जनात्प्रबुद्ध एवास्य सहजस्नेहसंस्कारः । तदसंनिहितमेव मां मन्यते । पुरः स्थित्वा । एष पार्श्वचर एव ते मकरन्दो मन्द-
२१५ भाग्यः ।

माध० । प्रियवयस्य संभावय परिष्वजस्व माम् । प्रियां तु मालतीं प्रति निराशः परिश्रान्तोस्मि । इति मूर्छति ।

मक० । सहर्षम् । एष संभावयामि जीवितेश्वरम् । विलोक्य सकरुणम् । हा कष्टम् । आविर्भूतमत्परिष्वङ्गोत्कण्ठ

---

तामपि धिक् । युवाभ्यां विना दैवान्मे हर्षोप्याभासीभूत इति भावः । अत एव प्रमोदस्य मृगतृष्णाया रूपकेणालीकत्वमुक्तम् ।

२१२-२२१ उन्माददशायामनिश्चयाद्यतः कुतश्चिदित्युक्तम् । व्यञ्जकात्संस्काराभिव्यञ्जकात् । प्रबुद्ध उद्बुद्धः । संभावय पालय । भ्रमाद्वैराग्याच्च मूर्छेत्येतदर्थं निराश इत्युक्तम् । जीवितेश्वरमित्यनेन

---

२१२. अहो for अये; अनुकूलयति for प्रति O.; संप्रत्ययं मां प्रत्यप्रतिकूलः यतः कुतश्चिद्यञ्जकात् A. मां प्रत्यविकलः यतः कुतश्चिद्यंजनात् C. संप्रत्ययं यतः कुतश्चिद्यंजकात् E. मां प्रत्यविक यतः कुतश्चिद्यञ्जनात् K1. प्रत्ययः कुताश्चिद्यञ्जकात् K2. for मां-न्यत् .

२१३. बुद्ध for प्रबुद्ध Bh.; सहजः for सहज K2. तत्संनिहितमेव मां न मन्यते for तद-ते N.

२१४. पुरतः for पुरः K2. O. स after ते N.; वयस्य before मक० B.

२१५. दैवः for भाग्यः B.

२१६. हा before प्रिय Bh.; परिष्वजस्व संभावय Bh. परिष्वज्य संभावय N. for सं-स्व; मां before परिष्वजस्व instead of after, O.

२१७. B. om. तु; निराशपरिभ्रमसंवृत्तोस्मि B. निराशः संवृत्तोस्मि Bh. K1. K2. निराश एव संवृत्तोस्मि N. for नि-स्मि; E. O. om. इति; मूर्छितः पतति for इति-ति B. Bh. om. इति-ति.

२१८. A. N. om. सहर्षम् ; स्थाने before एष N.; एवं for एष A. E.; जीवेश्वरं for जी-रम्. Bh.

२१९. आः for हा Bh.; कष्टम् twice Bh.; कथम् before आविर् Bh. N.

एव निश्चेतनः संवृत्तः। तत्कृतमिदानीमाशाव्यसनेन। सर्वथैव २२०
मे नास्ति वयस्य इति युक्तः परिच्छेदः। हा वयस्य

यत्स्नेहसंज्वरवता हृदयेन नित्य-
माबद्धवेपथु विनापि निमित्तयोगात्।
त्वद्व्यापदो गणयता भयमन्वभावि
तत्सर्वमेकपद एव मम प्रशान्तम्॥ २२५

---

तुल्या जीवनसामग्र्युक्ता। निश्चेष्टः प्रलययुक्तजनाकृतिः। परिच्छेदो निश्चयः।

२२२–२२५ यत्स्नेहेत्यादि। स्नेहरूपसंतापवता हृदा विनापि भयकारणेन सकम्पं भयं नित्यमन्वभाव्यनुभूतं यत्तत्सर्वं मम भयं त्वदीयविपत्तीर्गणयतः संभावयत एकस्मिन्क्षणे परिसमाप्तम्। कदा ते किं स्यादित्यादिभयं प्रकृतदशया प्रशान्तमिति भावः। एतत्पक्षे गणयतेति पाठे विधिनेत्यर्थात्। यद्वा। त्वव्यापदो गणयता हृदा यद्भयमनुभूतं तदधुना गतमित्यर्थः। तथा च त्वन्निमित्तमधुना तु सहेतुकैव विपदिति भावः।

---

२२०. निश्चेष्टः for निःश्चेतनः B.; वृत्तः for संवृत्तः A. E.; किम् for कृतम् A. Bh. E.; Bh. om. इदानीं; B. Bh. N. om. एव.

२२१. नास्ति प्रियवयस्यो मम for मे-स्य N.; नास्ति मे for मे नास्ति Bh.; प्रिय before वयस्य: Bh. C.

२२४. त्वय्या° for त्वद्व्या° A. Bh. E. O.; °यतो for °यता B. Kl.; त्वय° for भय° N.

२२५. प्रणष्टं for प्रशान्तम् N.

सखे वरं त एवातिक्रान्ता मुहूर्तास्तथाविधमपि भवन्तं येषु चेतयमानमनुभूतवानस्मि । इदानीं तु

भारः कायो जीवितं वज्रकीलं
काष्ठाः शून्या निष्फलानीन्द्रियाणि ।
२३० कष्टः कालो मां प्रति त्वत्प्रयाणे
शान्तालोकः सर्वतो जीवलोकः ॥

---

२२६-२३१ वरं मनागिष्टे ॥ मनागिष्टे वरं यत्तु कश्चिदाह तदव्ययमिति शाश्वतः॥ अव्ययानामनेकार्थत्वादुक्तोर्थः सुलभ एव । चेतयमानं चेतनावन्तम् । भार इत्यादि । कायो भारो धर्तुमशक्यः। धारणाशक्यतया व्याधिः । जीवनं वज्रकीलकमनुच्छेदात् । अनेन मर्मच्छेदः । मर्मच्छेदेन चिन्ता । दिशः शून्या इति जडता । इन्द्रियाणि नेत्रादीन्यफलानि कार्याक्षमाणि । बाह्यविषयाग्रहणैन्यम् । कालः कष्टो दुःखदः । दैन्येन जीवनाक्षमता । संसारः सर्वत्र प्रशान्तदर्शनः । तथा च त्वां विना न मज्जीवनमिति भावः । त्वत्प्रयाणे तव गमने विनाश इति यावत् । सतिसप्तमीयम् । मां प्रतीति सर्वत्र योज्यम् । यद्वा । पृथिव्यादिद्रव्यनवके प्रधानद्रव्य-दूषणेन दोषमाह । तत्र काय इति पृथिव्या जीवनमित्यात्मनः

---

२२६. अथवा परतो for स-एव N.; वतावत् before त Bh.; तावन्त for त A. E.; °क्रान्तवन्तः C. °क्रान्तवतो O. for °क्रान्ता; दिवस before मुहूर्ताः B.; येषु before तथा° instead of after भवन्तं Bh.; C. om. भयन्तं.

२२७. चेत्यमानम° Bh. चेतयानम° N. for चेतयमानम°; अहं for अस्मि C. K1.; B. O. om. अस्मि; मम before इदानीं B.; N. om. इदानीं—लोकः; मम after तु Bh. O.

२२८. शल्यभूतं for वज्रकीलं B. O. (marg.); कीली Bh. कीलः C. K1. K2. O. for कीलं.

२२९. काष्ठा for काष्ठाः Bh.

२३०. काष्ठा for कष्टः Bh., संप्रति for मां प्रति. Bh.

विचिन्त्य । तत्किं नु खलु माधवास्तमयसाक्षिणा मया भवितव्यमिति जीवामि । भवत्वमुष्माद्गिरिशिखरात्पाटलावत्यां निपत्य माधवस्य मरणाग्रेसरो भवामि । किंचित्परिक्रम्य सकरुणं निवृत्यावलोक्य च । कष्टं भोः कष्टम् । २३५

तदेतदसितोत्पलद्युति शरीरमस्मिन्नभू-
न्ममातिदृढपीडनैरपि न तृप्तिरालिङ्गनैः।

---

काष्ठा इति दिश इन्द्रियाणीतीन्द्रियाणां काल इति कालस्य लोक इति विषयाणां दोष उक्तः । शान्तालोकोऽनुपभोग्य इत्यर्थः ।

२३२–२३९ अस्तमयो विनाशः । व्याधिदशायामयम् । यदाह ।

निर्वेदश्चैव चिन्ता च दैन्यं ग्लानिः श्रमस्तथा ।
जडता मरणं चैव व्याधौ तु करुणेऽपि च ॥

पाटलावती नदीभेदः । प्रियदर्शनार्थं निवर्तनम् । मूर्छां दृष्ट्वा सकरुणम् । तादृशं दृष्ट्वा सखेदमाह । तदित्यादि । सखे यत्तवाङ्गं नीलनलिनश्यामं तदेतत् । अस्मिन्नङ्गे गाढासञ्जनैरप्यालिङ्गनैर्मम

---

२३२. A. B. E. om. विचिन्त्य; न for नु O.; C. om. खलु; Bh. om. °मय; B. N. O. om. मया; भवितव्यं मया for म-व्ययम् K2.

२३३. °मित्यकस्माद्गिरि (corr. in marg. into the reading of the text) for °मि-रि O.; E. K2. om. इति जीवामि; K1. om. जीवामि । भवतु; अतो after इति N.; E. has lost भवत्व-भवामि; तदस्मात् Bh. तत्तस्मात् N. for भवत्वमुष्मात्; एव A. E. उत्तुङ्ग K1. before गिरि; °खात् for °खरात् K2.; B. om. पात्यां; °वतीं for °वत्यां N.

२३४. N. om. माधवस्य; माधवमरणस्या° for मा-णा° B.; °णाग्र for °णाग्रे N.; भविष्यामि for भवामि C.; विचिन्त्य K1. इति K2. before किंचित्; A. Bh. E. N. om. किं-म्य.

२३५. परिवृत्य Bh. N. विवृत्य O. for निवृत्य; आलोक्य for अवलोक्य; A. E.; A. E. N. om. च.

२३७. °त्तमाति B. °न्ममापि Bh. O. (corr. into °न्ममाति) for °न्ममाति; पीडितैः for पीडनैः B. N.; °लिंगितैः for लिङ्गनैः B.

यदुल्लसितविस्मया बत निपीतवत्यः पुरा
नवप्रणयविभ्रमाकुलितमालतीदृष्टयः ॥

२४० आश्चर्यम् । एतस्यां तनावचरमे वयसि तावतो गुणसमाहारस्य संनिवेशः कथमिवाभूत् । सखे माधव

आपूर्णश्च कलाभिरिन्दुरमलो यातश्च राहोर्मुखं
संजातश्च घनाघनो जलधरः शीर्णश्च वायोर्जवात्
निर्वृत्तश्च फलैग्रहिर्द्रुमवरो दग्धश्च दावाग्निना
२४५ त्वं चूडामणितां गतश्च जगतः प्राप्तश्च मृत्योर्वशम् ॥

---

तृप्तिर्नाभूत् । यदङ्गं नवस्नेहविलासव्याकुलमालतीदृष्टय उपचिताद्भुताः पूर्वं निपीतवत्यो निस्यादरेणावलोकितवत्य इत्यर्थः । बत खेदे ।

२४०–२४५ अचरमे नूतने । समाहारो मेलकः । आपूर्ण इत्यादि । त्वं संसारस्य चूडामणीभूतश्च मरणं प्राप्तश्च । अत्र तुल्ययोगितया दृष्टान्तमाह । निर्मलश्चन्द्रः कलाभिः पूर्णश्च राहुग्रस्तश्च । मेघो घनाघनो वर्षुकाब्दश्च वातवेगाद्विशकलितश्च । द्रुमश्रेष्ठः फलेग्रहिः फलभारवान्निर्वृत्तो जातश्च वनाग्निना दग्धश्च । यथा त्वमपीत्यर्थः ॥ घनाघनो मत्तगजे वर्षुकाब्दमहेन्द्रयोरित्यमरमाला ॥ यद्वा । घनाघनोतिनिबिडः । घनशब्दस्यैवावृत्त्या प्रयोगाद्द्रावद

---

२३८. विभ्रमं मधु B. E. N. विस्मयं बत Bh. for वि-त.

२३९. न च for नव Bh.

२४०. आश्चर्यं twice Bh. C. एकस्याचरमे A. Bh. एकस्यां तनौ अचरमे B. O. एकत्राचरमे E. for ए-मे; तनावेतावतो for तना-तो N.; वसि for वयसि Bh.; स्थितस्य for तावतो B.

२४१. Bh. om. सखे माधव; स एष माधवः twice for सखे माधव B.

२४३. संपूर्णः for आपूर्णः K2.

२४४ °ग्रहिद्रुम for °ग्रहिर्द्रुम A. Bh. C.

२४५. गतोहि for गतश्च K1; जगतां for जगतः B.; प्राप्तोसि for प्राप्तश्च A. E.; मुखं for वशं B. C. O.

तत्परिष्वजे तावदेवं गतमपि वयस्यम् । अर्थितश्चानेन संप्रत्येवायमर्थः । परिष्वज्य । हा वयस्य विमलविद्यानिधे गुणगुरो मालतीस्वयंग्राहजीवितेश्वर कामन्दकीमकरन्दानन्दनमुखचन्द्र माधव अयमत्र ते जन्मन्यपश्चिमः पश्चिमावस्थाप्रार्थितो मकरन्दबाहुपरिष्वङ्गः । सखे संप्रति मुहूर्तमपि २५० मकरन्दो जीवतीति मैव मंस्थाः ।

---

इतिवत् । फलेग्रहिर्निपातनात् । फलानि गृह्णाति धारयतीति फलेग्रहिः ॥ स्यादवन्ध्यः फलेग्रहिरित्यमरः ॥

२४६–२५१ एवं गतं मूर्छितम् । अयमर्थ आलिङ्गनरूपः । मया सहेति शेषः । अपश्चिमो दुर्लभः । पश्चिमावस्था शेषावस्था । आजन्मेत्यादि । हे पद्मास्य जन्मन आरभ्य मयैव समं तुल्यगृहतया मातुः स्तन्यं पीत्वाधुना त्वमेको निवापसलिलं प्रेतोदकाञ्जलिं

---

२४६. विचिन्त्य before तत् A.; ततः for तत् Bh.; अहं after परिष्वजे B. C. O.; एनं before तावद् O.; एनं for तावत् B.; प्रिय before वयस्यं N.; प्रार्थित for अर्थितः K1. K2.; एव for च N.

२४७. अयमेव for एवायम् Bh. N.; C. om. हा; प्रिय before वयस्य N.

२४८. हा K1. महा K2. before गुण; हा before गु°, मा°, का° N.; गण after गुण Bh.; हा सौन्दर्यावीनिर्जितरतिरमणच्छाय हा कामिनीहृदयमन्मथ हा बान्धवपयोनिधिशरच्चन्द्र हा A. E. हा Bh. before काम°.

२४९. °नंदचंद्र B. Bh. नंदनचंद्रमुख C. K1. K2. °नंदमुग्धचंद्रमः N. °नंदचंद्रमुख O. for °नन्द-न्द्र; N. om. अत्र; स for अत्र B. Bh.; Bh. N. om. ज-मः; B. om. अपश्चिमः; पश्चिमः for अपश्चिमः O.; °वस्थां प्रापितो for °व-तो A. B. E.

२५०. प्रापितो for प्रार्थितो K2.; A. B. Bh. E. om. सखे स एष for संप्रति A. E.; मकरंदो मुहूर्तमपि for मु-दो Bh.

२५१. मैवं A. Bh. K2. O. एवं मा C. K1. for मैव; B. om. एव; कुतः after मंस्थाः N.

आजन्मनः सहनिवासितया मयैव
मातुः पयोधरपयोऽपि समं निपीय ।
त्वं पुण्डरीकमुख बन्धुतया निरस्त-
२५५ मेको निवापसलिलं पिबसीत्ययुक्तम् ॥

सकरुणं विमुच्य परिक्रम्य च । इयमधस्तात्पाटलावती । भगवति आपगे

प्रियस्य सुहृदो यत्र मम तत्रैव संभवः ।
भूयादमुष्य भूयोऽपि भूयासमनुसंचरः ॥

२६० इति पतितुमिच्छति ।

प्रविश्य सहसा सौदामिनी । वारयित्वा । वत्स कृतं साहसेन ।

---

बन्धुसमूहेन दत्तं पिबसीत्येतदयोग्यम् । सहपानार्थमहमप्यागच्छामीत्यर्थः ॥ निवापः पितृदेये स्यादित्यमरः ॥ आपगा नदी । प्रियस्येत्यादि । मित्रस्य संभव उत्पत्तिर्यत्र ममापि तत्रैव भूयात् ।

---

२५२. °सतया for °सितया A. O.; सदैव for मयैव B. Bh.

२५३. निपीतं for निपीय N.

२५४. तत् for त्वं N.; विसृष्ट° for निरस्त° K1. K2.

२५६. Bh. N. om. परिक्रम्य च.

२५७. °वन्गौरीपते A. E. °वत्यापगा Bh. for °व-गे.

२५८. प्रिय for प्रियस्य A.; तत्रैव मम for म-व K1. K2.

२५९. अमुत्र for अमुष्य A.

२६१. C. E. N. om. सहसा; °मनी for °मिनी K2.; सौदामिनी twice Bh. K1.; मकरन्दं before वार° K2. वारयंती for वारयित्वा B.; वत्स twice C. K1. K2. O.; कृतं twice N.; अलं for कृतं A. E.

मक० । विलोक्य । अयि कासि । किमहं त्वया प्रतिषिद्धः ।

सौदा० । आयुष्मन् किं त्वं मकरन्दः ।

मक० । मुञ्च स एवास्मि मन्दभाग्यः । २६५

सौदा० । वत्स योगिन्यस्मि मालत्यभिज्ञानं च धारयामि । इति बकुलमालां दर्शयति ।

मक० । सोच्छ्वासं सकरुणम् । आर्ये अपि जीवति मालती ।

सौदा० । अथ किम् । अपि च वत्स किमत्याहितं माधवस्य यदनिष्टं व्यवसितोसीत्याकम्पितास्मि । २७०

---

अमुत्रापरस्मिंल्लोके पुनरप्यस्यानुचरो भूयासमित्यर्थः ॥ भूयादित्यादौ प्रार्थनायां लिङ् ॥

२६९-२७० अत्याहितं प्रमोहोभूत् । प्रभञ्जनो वायुः । उभयोर्माधवमकरन्दयोः ।

---

२६३. अम्ब A. Bh. E. K1. K2. अये B. O. for अयि; किमर्थं for किम् B. Bh. N.; त्वया हंत for अहं त्वया Bh.; प्रतिहतः A. E. O. वारितः B. for प्रतिषिद्धः

२६४. आयुष्मन् after °रन्दः instead of before किं O.; Bh. N. om. आयुष्मन्; न before किं B.; अपि for किं Bh. N.

२६५. मुंच twice C. K1. K2.; मां after मुञ्च B.; अहं after अस्मि E.

२६६. सौदामनी for सौदा° K2.; C. om. च; चावधारयामीति A. च जानामि । इति B. चावधारयेति E. for च-ति.

२६७. Bh. N. O. om. इति; इति after ब-लां instead of before K2.; च before दर्श° Bh.

२६८. सोछ्वासकरुणं for सो-णम् C. K1. K2. O.; च after °णम् N.; A. Bh. E. N. om. आर्ये; अयि for अपि A. E. Bh.

२६९. सौदामनी for सौदा° K2.; A. Bh. E. N. om. अपि च °मित्या° for °मत्या° K1.; त्वरते मे चेतः after वत्स B.

२७०. °तोसीत्याशंकितास्मि B. °तोसि भीत्याकंपितास्मि C. °तोसीति भीताकंपितास्मि K1. °तं । भीत्याकंपितास्मि O. for °तो-स्मि; A. E. om. इत्या-स्मि; कम्पि° for आकम्पि° K2.; अथ माधवः; क at the end A. B. E.

मक० । आर्ये तमहं प्रमुग्धमेव वैराग्यात्परित्यज्यागतस्त-
देहि तूर्णं संभावयावः । इति त्वरितं परिक्रामतः ।

माध० । आश्वस्य । अये प्रतिबोधित एवास्मि केनापि ।
विचिन्त्य । नूनमस्यायमभिनवजीमूतजलबिन्दुवाहिनः प्रभ-
२७५ ञ्जनस्यानपेक्षितास्मदवस्थो व्यापारः ।

मक० । विलोक्य । दिष्ट्या पुनः प्रत्यापन्नचेतनो वयस्यः ।

सौदा० । विलोक्य । संवदत्युभयोर्मालतीनिवेदितः शरी-
राकारः ।

माध० । भगवन् पौरस्त्यपवन ।

---

२७९-२८३ मूर्छयैव तं सोपालम्भमाह । भगवन्निति ।
पौरस्त्येत्यनेन भिन्नदेशकथनम् । तेन सहजकृत्रिमवैरशङ्का नि-

---

२७१. भगवति for आर्ये B.; E. om. आर्ये; मधन for तमहं प्र° Bh.; B. om. वैराग्यात्; N. gives तदेहि &c. to सौदा°.

२७२. त्वरितं for तूर्णं B. O.; A. Bh. E. N. O. om. इति; उपसर्पतः for परिक्रामतः N.

२७३. द्विपादिकया before आश्वस्य B.; Bh. N. omit this speech here and put it before भगवन् पौरस्त्य; आश्चर्यं for आश्वस्य N.; अर्थ for अये; आश्वासित B. बोधित C. for प्रतिबोधित; °धितास्मि for °धि-स्मि K1.; इवास्मि Bh. °वानास्मि N. for एवास्मि.

२७४. उत्थायोपविश्य विलोक्य B. उत्थायोपविश्यावलोक्य O. before विचिन्त्य; A. E. om. विचिन्त्य; च after विचिन्त्य O.; नूनमयमस्य नवजलधरपवनस्यानेवक्षितास्मदवस्थो for नू-स्थो N.; A. E. O. om. अयम्; °नवः for °नव Bh.; बहल before जीमूत B. O.; जलधर for जीमूत Bh.; कण for बिन्दु Bh.; A. E. om. बिन्दु.

२७५. °स्यापेक्षि° for स्यानपेक्षि Bh.; °वस्थोयं for °वस्थो A. E.

२७६. दृष्ट्वा सोच्छ्वासं for विलोक्य B. O.; A. Bh. E. om. विलोक्य.

२७७. अव° for वि° O.; संभवति for संवदति B. O.; अनयोः for उभयोः Bh. N.; वासरा° for शरीरा Bh.

२७९. वायो for पवन N.

भ्रमय जलदानम्भोगर्भान्प्रमोदय चातका- २८०
न्कलय शिखिनः केकोत्कण्ठान्कठोरय केतकान् ।
विरहिणि जने मूर्छां लब्ध्वा विनोदयति व्यथा-
मकरुण पुनः संज्ञाव्याधिं विधाय किमीहसे ॥

एस्ता । तव विरहिदुःखमेव न कृत्यम् । अपि त्वन्यदपीत्याह ।
भ्रमयेत्यादि । जलपूर्णान्मेघांश्चालय । कोकिलान्हर्षय । केकयोत्क-
ण्ठान्नुद्वेगलान्सेच्छान्वा मयूरान्कलय नर्तय । कलेरनेकार्थत्वात् ।
केतकान्केतकीवृक्षान्कठोरय कोरकितान्कुरु । कोरकितत्वेन भि-
न्नोन्नततया कठोरत्वम् । केतक्यामपि केतक इति शब्दभेदः ।
अत एव केतकाधानहेतोरिति मेघदूते । यद्वा । केतकीपुष्पाणि
कठोरय विकासय ॥ तत्करोतीति णिच् । अस्मिन्पक्षे लिङ्गमशिष्यं
लोकाश्रयत्वाल्लिङ्गस्येति लिङ्गव्यत्यय इत्यवधेयम् ॥ विरहिजने मूर्छां
प्राप्य व्यथां स्फाटयति सति पुनः संज्ञाव्याधिं चेतनारूपं रोगं
कृत्वा किं त्वमिच्छसि । महता दुःखितदुःखशान्तिः क्रियते । त्वं
प्रबोध्य दुःखयसीत्यनर्हम् । अत एवाकरुण इत्युक्तम् । प्रमोदय
चातकानित्यपि पाठः । प्रथमपाठे तु कोकिलप्रमोदो वर्षास्वपि
कविसंप्रदाये वर्ण्यत इत्यवधेयम् ।

२८०. अम्तर् for अम्भो Kl.; Bh. omits the portion from प्रमोदय to अतः स्वागतं भवत्याः; कोकिलान् or मौलिकान् N. कोकिलान् (corr. into चातकान्) O. for चातकान्.

२८१. केतकं for केतकान् N.

मक० । सुवृत्तमखिलजन्तुजीवनेन मातरिश्वना ।

२८५ माध० । देव वायो तथापि भवन्तमेवं प्रार्थये ।

विकसत्कदम्बनिकुरुम्बपांसुना
सह जीवितं वह मम प्रिया यतः ।
अथ वा तदङ्गपरिवासशीतलं
मयि किंचिदर्पय भवान्हि मे गतिः ॥

२९० कृताञ्जलिः प्रणमति ।

---

२८४-२८९ मातरिश्वा वायुः । वातीति वायुरित्युचितपदन्यासेन जीवनयोग्यतोक्ता । तथाप्यनिष्टकरणादपि । विकासदित्यादि । मम प्रियां यतो यत्र तं देशं मम जीवितं प्रफुल्लकदम्बरूसूहधूल्या सह प्रापय । घटय मे इति वा पाठः । सा विरहदीना म्रियेतातस्तज्जीवनाय मज्जीवितं नयेति भावः । पांशुना सहेत्यनेन परमाणुरूपं मे मनोपि तत्समूहे गमिष्यतीति न ते प्रयासोपि

---

२८४. नूनमनेनाखिलजीवनेन कृतं जीवनं for सु-ना B.; सुकृतमनेन सकल for सु-ल N.; सुकृतम् for सुवृतम् K1.; निखिल for अखिल O.; °श्वनां for °श्वना K1.; after मातरिश्वना N. adds:—

आपिच । एते कैतकसूनसौरभजुषः पौरप्रगल्भांगना-
व्यालोलालकवल्लरी विलुठनव्याजोपभुक्ताननाः ।
किं चोन्निद्रकदंबकुड्मलपुटीधूलीलुठत्षट्पद-
व्यूहव्याहतिहारिणो विरहिणः कर्षंति वर्षानिलाः ।

२८५. भगवन् before देव B. N.; एतावत् B. एव K1. K2. for एवं; तावत् after एवं O.

२८६. °रम्ब for रुम्ब A. B. O.; पांशुना for पांसुना A. O.

२८७. घटय मे for वह मम N.

२८८. अपि for अथ B. K2. O.

२८९. किंचिदीरय (corr. into किंचिदर्पय) O.; किंचिदीरय भवाशु मे गतिः for किं-तिः A. E.; मय for मयि K1.; भवांस्तु for भवान्हि N.

सौदा०। सुसमाहितः खल्वभिज्ञानार्पणस्यावसरः। अ-
ञ्जलौ मालां मुञ्चति।

माध०। साकूतविस्मयहर्षम्। कथमियमस्मद्विरचिता प्रि-
यतमास्तनोन्नाहदुर्ललितमूर्त्तिरनङ्गमान्दिराङ्गनबकुलप्रसवमा-
ला। निरूप्य सहर्षम्। कः संदेहः। तथा हि। स एवाय- २९९
मस्याः।

---

स्यादित्युक्तम्। नो वा प्रियाङ्गसदावस्थितिहिमं यत्किंचिद्वस्तु मयि तदर्पय देहि। ईरयेति पाठे प्रेरयेत्यर्थः। तदेव मे तापशान्त्यै स्यादिति भावः। अत्र हेतुमाह। यतो मम भवान्गतिराश्रयः। आश्रयस्याश्रितजीवनं युक्तमेवेति भावः। अपि वेति पाठेपिः संभावनायाम्।

२९१-३००. समाहितो युक्तः। वायुप्रार्थनाप्रकरणात्। प्रि-
याङ्गसाङ्गिमालालोकात्सहर्षत्वम्। यदाह।

प्राप्ये वाप्यप्राप्ये लब्धेर्थे प्रियसमागमे वापि।
हृदयमनोरथलाभे हर्षः संजायते पुंसाम्॥

उन्नाह उत्सेध उपरिवहनं वा। दुर्ललितातिप्रिया। अनङ्ग एव

---

२९१. सुसमीहितः C. समीहितः K1. for सुसमाहितः; अस्ति after खलु O.; °न दर्शनस्याव° A. E. °नस्यार्पणाव° B. for °ना-व°; माधवस्य before अञ्जलौ O.; माध-वस्यांजलौ बकुलमालां for अ-लां B.

२९२. बकुलमालामर्पयाति for मा-ति N.

२९३. विलोक्य before साकूत B. O.; °तं सविस्मयं सहर्षं च N. °तविस्मयं सहर्षं O. for त-म्; °स्मया° for °स्मय K2.; स before हर्षम् C.; सा before अस्मद K1. K2. O.

२९४. प्रियायाः A. E. प्रियतमायाः C. प्रियतमया K1. for प्रियतमा; उद्भेद A. E. उन्नाह K1. K2. उद्वहन N. for उन्नाह; °रांगण A. K1. O. °रांकण N. for °राङ्गन; बाल for बकुल E. पादपकुसुम for प्रसव N.

२९५. सत्वरं B. सम्यङ् N. before निरूप्य; B. N. O. om. सहर्षम्; एवम् for स-यम् N.; B. om. अयं.

मुग्धेन्दुसुन्दरतदीयमुखावलोक-
हेलाविशृङ्खलकुतूहलनिह्नवाय ।
दुर्न्यस्तपुष्परचितोपि लवङ्गिकाया-
३०० स्तोषं ततान विषमग्रथितोपि भागः ॥

मन्दिरमनङ्गस्य वा मन्दिरम् । मुग्धेत्यादि । अस्या मालायाः स एवायं भागो यो लवङ्गिकाया अपि संतोषमकरोत् । अपिपदान्मालत्या अपीत्यर्थः । विषमं ग्रथितं ग्रन्थना यत्र सः । विषमेण ग्रथित इति वा । अत्र हेतुमाह । मुग्धं मनोज्ञमिन्दुकान्तं यन्मालतीमुखम् । यद्वा । विरहात्क्षामत्वादिना बालेन्दुवत्कान्तं यत्तदास्यं तदालोके सति हेलया शृङ्गारचेष्टया विशृङ्खलं सर्वत्र वर्तमानं यत्कौतुकं तद्गोपनाय दुर्न्यस्तैः पूर्वग्रथनादन्यथा दत्तैः पुष्पै रचितः । एतत्तु प्रथमाङ्क एव व्यक्तम् । ननु हेला स्त्रीविषया । यदाह भरतः ।

यौवने त्रिदश स्त्रीणां विकारा नेत्रपातजाः ।
आदौ त्रयोङ्गजास्तेषां दश स्वाभाविकास्तथा ॥

तत्राङ्गजेषु हावहेलालक्षणम् ।

अक्षिभ्रुवोर्विकाराद्याः शृङ्गारस्य च सूचकाः ।
सग्रीवारेचका भावा हावास्तेभ्यः समुत्थिताः ॥
य एव हावः सैवासौ शृङ्गाररससंभवा ।
समाख्याता बुधैर्हेला ललिताभिनयात्मिका ॥

अतो माधवे हेलेत्युक्तम् । मैवम् । स्त्रीणामित्यस्योपलक्षणत्वात्पुरुषेपि कामावस्थासाम्याद्धेलावचनात् । यदाह ।

२९८. लीला for हेला C.
२९९. रचनो° for रचितो° A. C. E. K1. K2. O.
३००. °तैक A. E. °तो वि G. O. for °तोपि.

सहर्षोन्मादमुत्थाय। प्रिये मालति इयं वीक्ष्यसे। सकोपमिव। अयि मदवस्थानभिज्ञे

प्रयान्तीव प्राणाः सुतनु हृदयं ध्वंसत इव
ज्वलन्तीवाङ्गानि प्रसरति समन्तादिव तमः।
त्वराप्रस्तावोयं न खलु परिहासस्य विषय- ३०५
स्तदक्ष्णोरानन्दं वितर मयि मा भूरकरुणा॥

---

हेला हावश्च भावश्च व्याजो विस्रम्भभाषणम्।
चाटुः प्रेमाभिसंधानं चकितं च विलासितम्॥

तत्र रागतः सहसा प्रवृत्तौ हेतुश्चित्तोल्लासो हेलेति। यद्वा। अवलोक्यत इत्यवलोकः॥ कर्मणि घञ्॥ इन्दुसुन्दरमालतीमुखेवलोक्या दृश्या या हेला तया विशृङ्खलं यन्माधवस्य कुतूहलं तद्गोपनायेत्यर्थः।

३०१–३०६ संकल्पलिखितप्रियादर्शनाद्धर्षः। दर्शनाप्राप्त्या पुनराह। नन्विति। अत्राप्यलाभादुपालभ्यतेयीति। परिहासाददर्शनमाशङ्क्य तदनवसरमाह। प्रयान्तीत्यादि। प्राणाः प्रयान्तीव सर्वतःशून्यत्वात्। हे सुतनु मनो ध्वंसत इव। मोहात्। अङ्गज्वलनमतिदाहात्। एतेन व्याधिरुक्तः। सर्वतस्तमः प्रसरतीव। अनेन जडता। सकलेन्द्रियाणामग्रहात्। जडतानन्तरं मरणशङ्कायामाश्वास एव युक्त इत्याह त्वरेति। खलु निश्चये। यत एवं ततो नेत्र-

---

३०१. सहसा सोन्मा° for सहर्षोन्मा° O.; चंडि for प्रिये N.; ननु before इयं B.; विलोक्यसे for वीक्ष्यसे N.; नन्वियं वीक्ष्यसे after वीक्ष्यसे O.

३०२. अये for अयि K1. K2.; प्रिये before मद° K1. K2. मदनाव° for मदव° B.

३०५. प्रिये for त्वरा B. O. (in margin).

३०६. भूदकरुणा for भूरकरुणा N. O. (corrected into भूर°).

सर्वतो दृष्ट्वा सनिर्वेदं । कुतोत्र मालती । बकुलमालामुद्दिश्य । अयि प्रियाप्रणयिनि बकुलमाले उपकारिण्यसि । अतः स्वागतं भवत्याः ।

३१० निष्प्रत्यूहाः प्रियसखि यदा दुःसहाः संबभूवु-
र्देहोद्दाहव्यसनगुरवो मन्मथोन्माथवेगाः ।
तस्मिन्काले कुवलयदृशस्त्वत्समाश्लेष एव
प्राणत्राणं प्रगुणमभवन्मत्परिष्वङ्गकल्पः ॥

सकरुणं निर्वर्ण्य ।

---

प्रीतिं देहि । स्वं दर्शयेत्यर्थः । मद्विषये निर्दया मा भविष्यसि । यद्वा । अकरुणा मा भून्न भवसि ॥ माङि लुङिति कालसामान्ये लुङ् ॥ पूर्वकरुणेदानीमपि निर्वाह्यतामित्यर्थः । इवशब्द उत्प्रेक्षायाम्

३१०-३१४. निरित्यादि । यदा मालत्याः पद्माक्ष्याः कामोन्मादोद्वेगा निर्विघ्ना अत्यर्थं दुःसहा अङ्गदाहदुःखमहान्तस्तद्दुःखोपदेशाकाराः संबभूवुः संभूयोद्गतास्तत्र काले तस्यास्त्वदालिङ्गनमेव शीघ्रं प्राणरक्षकमभूत । अत एव मदालिङ्गनतुल्यः । उन्माथ उन्मथनमुद्वेग इति यावत् । प्रगुणमिति पाठे प्रकृष्टगुणमित्यर्थः । क्रियाविशेषणं वा । कामदुःखोद्वेगस्य प्रियसङ्गस्यालाभादविघ्नत्वम् ।

---

३०७. इति दिशोवलोक्य for स-ष्ट्वा B.; विलोक्य सकरुणं for दृ-म् O.; उपविश्य बकुलावलीम् C. K1. उपविश्य बकुलमालाम् K2. for बकुलमालाम् ; प्रति for उद्दिश्य B. N. O.

३०८. N. om. अयि-भवत्याः; अये for अयि C.

३०९. यतः before अतः A.; यतस्तत् K1. K2. यतः O. for अतः; B. om. अतः C. om. अतः-त्याः

३१०. °त्यूहं for त्यूहाः A.

३११. देहोन्मादप्रथन B. देहे दाहव्यसन E. for दे-न; व्यथन for व्यसन K2. O. noticed by Com.; °न्माद for °न्माथ N.

३१२. त्राण for त्राणं O.; प्रगुणनमभून् A. E. त्वरितमभवन् B. for प्र-वन्.

आनन्दमिश्रमदनज्वरदीपनानि ३१५
गाढानुरागरसवन्ति तदा तदा च।
स्नेहाङ्कनानि मम मुग्धदृशश्च कण्ठे
कष्टं स्मरामि तव तानि गतागतानि॥

इति हृदये निधाय मूर्छति।

मक०। उपसृत्य वीजयन्। सखे समाश्वसिहि समाश्वसिहि। ३२०

माध०। आश्वस्य। मकरन्द किं न पश्यसि कुतोपि सहसैव मा-

---

मालतीप्रणयित्वात्प्रियसखि इति। दुःसहत्वमधृतिकरणात्। उद्दाह उद्गतदाहः। व्यसनस्थाने व्यथन इति पाठे व्यथनं पीडा। अधुना मालां विनास्याः कथं जीवनं भविष्यतीति भावः। निर्वर्ण्य निरूप्य।

३१५–३२४ आनन्देत्यादि। मम मालत्याश्च कण्ठे तव तानि गतागतानि स्मरामि। स्मरणस्यातिदुःखदत्वात्कष्टम्। तदा तदा तस्मिंस्तस्मिन्काले। तत्र चौरिकाविवाहात्पूर्वं मालतीकण्ठगतेति गतं लवङ्गिकाबुद्ध्या माधवकण्ठमागतेत्यागतमित्येकम्। चौरिकाविवाहे मालत्या माधवकण्ठे नीतातो गतमथ तन्मुखदर्शनात्स्वकण्ठेऽर्पितेत्यागतमिति द्वितीयम्। पुनस्तत्र प्रणयवशान्माधवेन मालत्यै

---

३१५. आनंदमंद B. आनंदनानि Bh. N. for आ-श्र.

३१६. च तस्याः for तदा च E.

३१७. स्नेहाकराणि A. E. स्नेहाद्रहंति Bh. स्नेहादुनानि G. स्नेहोत्कटानि K1. K2. for स्ने-नि; स्नेहाकामिश्रितममुग्ध for स्ने-ग्ध B.

३१९. A. Bh. E. N. O. om. इति; विधाय E. निदाय K1. for निधाय; मूर्छितः पतति for मूर्छति B.

३२०. वीजयति for वीजयन् B.; वयस्य for सखे B.; K1. om. one समाश्वसिहि.

३२१. निश्वस्योपविश्य B. समाश्वस्य O. for आश्वस्य; Bh. om. आश्वस्य; सखे before मक° B.; वयस्य for मकरन्द Bh. N.; त्वं after पश्यसि B.; K2. om. कुतोपि; Bh. om. अपि; A. E. om. सहसैव.

लतीस्नेहं वहतो बकुलदाम्नो लाभः । तत्कथं नु मन्यसे कुत एतदिति ।

मक० । वयस्य इयमार्या योगीश्वर्यस्य मालत्यभिज्ञान-
३२९ स्योपनेत्री ।

माध० । विलोक्य सकरुणं कृताञ्जलिः । आर्ये प्रसीद कथय जीवति मे प्रियतमा ।

सौदा० । वत्स समाश्वसिहि जीवति सा कल्याणी ।

माधवमकरन्दौ । समुच्छ्वस्य । आर्ये यद्येवं तत्कथय क
३३० एष वृत्तान्त इति ।

---

दत्तेति गतमिदानीं तु सौदामिन्या मालतीसकाशादानीय दत्तेति त्रीणि गतागतानि । अत एव बहुवचनम् । कीदृशानि । तद्दशायामन्तरा-न्तरा हर्षलाभादानन्दमिश्रितकामतापप्रकाशनानि । दृढानुरागरसयोगीनि । स्नेहस्याकरो येषु तानि । स्नेहं प्रीतिमाकुर्वन्ति व्याकुर्वन्तीति

---

३२२. स्नेहस्य हस्तलाभः A. E. K1. K2. स्वहस्तलाभः Bh. स्नेहवहलो बकुलमालाधाम्नो लाभः C. स्नेहस्वहस्तस्य लाभः N. for स्ने-भः; तत्कथं मन्ये B. तत्कथं मन्यसे Bh. तत्कथयन्तु मन्यसे K1. तत्कथय त्वमय मे K2. तत्किं मन्यसे N. for त-से; न for नु A.; O. om. नु; किम् for कुतः A. Bh. N. O.

३२४. B. om. वयस्य; योगे° for योगी° A. B. C. K1. K2.; N. om. अस्य.

३२५. A. om. उप.

३२६. Bh. om. विलोक्य; B. om. सकरुणं; अंजलिं बद्ध्वा for कृ-लिः Bh. N.; N. om. प्रसीद; प्रसीद twice B.; कथं for कथय Bh.

३२७. अपि before जीवति B.; प्रिया for प्रियतमा A. B. E. N.

३२८. सौदामनी for सौदा° K2.; भद्र for वत्स K1. K2.; ननु before समा° K1.; वत्स नन्वाश्वसिह्याश्वसिहि जी° C. वत्स नन्वाश्वसिहि जी° E. O. for व-जी°; O. om. सा; कल्याणिनी for कल्याणी A. Bh. C. E. K1. O.

३२९. माध° । for मा-न्दौ B.; B. om. समुच्छ्वस्य; दृष्ट्वोच्छ्वस्य A. E. समाश्वस्य Bh. for समुच्छ्वस्य; N. om. आर्ये; Bh. N. om. तत्; सर्वतः Bh. C K1. O. सर्वं नः N. after कथय; कथम् for कः A. E.

३३०. O. om. इति.

सौदा०। पुरा किल करालायतने मालतीमुपहरन्नघोरघण्टः करवालपाणिर्माधवेन व्यापादितः।

माध०। सावेगम्। आर्ये विरम विरम विज्ञातो वृत्तान्तः।

मक०। सखे क इव।

माध०। सखे किमन्यत्। सकामा कपालकुण्डलेति। ३३५

मक०। आर्ये अप्येवम्।

सौदा०। एवं यथा विदितं वत्सेन।

मक०। कष्टं भोः कष्टम्।

---

स्नेहाकराणि ॥ कृञो हेत्वित्यादिना टप्रत्ययः ॥ तदा तदा चेति चकारात्कालान्तरपरिग्रहः। आर्या मान्या।

३३५–३४२ सकामा मदपकारेण सिद्धप्रतिज्ञेत्यर्थः। कुमुदेत्यादि। कुमुदसमूहेन यदि शरच्चन्द्रचन्द्रिका सौन्दर्यगुणार्थं संगता प्राप्ता तत्सुकृतं शोभनकरणमस्तु। द्वयोरपि रम्यत्वात्। अयं पुनः कः प्रकारः कुत्सितप्रकारो वा यदकालमेघपङ्क्तिर्व्ययूयुजद्वियो-

---

३३१. सौदामनी for सौदा° K2.; हि before किल B. O.; A. Bh. E. N. om. किल; आहरन् for उपहरन् Bh. N.; नवा after हरन्° K1.; कृपाणपाणिरघोरघंटो for अघो-णिर् Bh.

३३२. कृपाण for करवाल N. O.; पाणिना for पाणिर् A. E.

३३३. सोद्वेगं for सावेगम् A.; E. om. सावेगं; अये for आर्ये N.; A. Bh. E. om. one विरम; परिज्ञातो A. ज्ञातो Bh. K1. K2. N. for विज्ञातो; अयं before वृत्तान्तः Bh. K1. K2.

३३४. A. E. om. सखे; कम् for क Bh.

३३५. Bh. om. सखे; सकोपा कराल for सका-ल O.; Bh. om. इति.

३३७. सौदामनी for सौदा° K2.; °था निवेदितं A. E. °दाविदितं K1. °दावेदितं K2. for °था विदितं.

३३८. भोः कष्टम् B. C. कष्टं भोः Bh. O. कष्टं भोः twice N. for कष्टं भोः कष्टम्.

कुमुदाकरेण शरदिन्दुचन्द्रिका
३४० यदि रामणीयकगुणाय संगता ।
सुकृतं तदस्तु कतमस्त्वयं विधि-
र्यदकालमेघविततिर्व्ययूयुजत् ॥

माध० । हा प्रिये मालति कष्टमतिबीभत्समापन्नासि ।

कथमिव तदाभवस्त्वं
३४५ कमलमुखि कपालकुण्डलाग्रस्ता ।
उत्पातधूमलेखा-
क्रान्तेव कला शशधरस्य ॥

---

जयामास विच्छेदं कृतवतीत्यर्थः । ध्वनिनात्र कुमुदाकरो माधव-श्चन्द्रिका मालती मेघसंततिः कपालकुण्डलेत्युक्तम् ।

३४३-३४७ अतिबीभत्समिति । उद्वेगहेतुकपालकुण्डला-दर्शनाद्बीभत्सः । यदाह ।

उद्वेजनैश्च बहुभिर्बीभत्सरसः समुद्भवति ॥

कथमित्यादि । तत्कवलिता हे पद्ममुखि तदा त्वमपि कथमभवः । भयात्कथं त्वमासीः किं त्वयोक्तं कस्ते त्राताभूदित्यादिज्ञापनाय कथमिति सामान्यनिर्देशः । केतुकवलिता चन्द्रकलेव । एतदुपमया बीभत्सजविषादसंभवा ग्लानिरप्युक्ता । यदाह ।

---

३३९. कुसुमा° for कुमुदा° Bh.
३४०. गुणेन for गुणाय N.; य सागता for °य-ता Bh.
३४१. सुकृते यद् for सु-तद् C.
३४२. °तिर्व्ययूयुजत् B. °तिं त्वयूयुजत् N. for ति-त्.
३४३. B. om. हा; B. O. om. कष्टमति; कथम् for कष्टम् K1. K2.
३४४. अपि for इव B.; तदा भवेस्त्वं for त-स्त्वं C.
३४६. उत्थान for उत्पात Bh.; रेखा for लेखा N.
३४७. भ्रांतेव for क्रांतेव, B.

भगवति कपालकुण्डले

निर्माणमेव हि तदादरलालनीयं

मा पूतनात्वमुपगाः शिवतातिरेधि। ३५०

नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा

मूर्ध्नि स्थितिर्नमुसलैरवताडनानि॥

---

अपस्मारस्तथोन्मादो विषादो मद एव च।

मृत्युर्व्याधिर्भयं चैव भावा बीभत्ससंभवाः॥

३४८-३५२ स्त्रीबालं नैव घातयेदिति निजधर्मं जानत्या त्वया सा घातितेति सोत्कुण्ठमाह भगवति इति। निर्माणमित्यादि। तन्निर्माणं मालतीरूपादिकमेव तदादरेण रक्षणीयं भवति। रम्यत्वादेव। पूतनात्वं राक्षसीत्वं तन्नाशेन मोपगा मा गमिष्यसि। यद्वा। मांसं मे ततो भक्षयितव्यं किमिति चिन्तकत्वं पूतनात्वम्। पूतनत्वमिति पाठे राक्षसत्वमित्यर्थः॥ पूतना राक्षसीभेदे हरीतक्यां च पूतनेति विश्वः॥ शिवतातिः कल्याणकर्येधि भव। शिव इत्यबोधीरिति पाठे तन्निर्माणं शिवे कल्याणनिमित्तमित्यज्ञासीः। शिवतामुपैतीति पाठेतन्निर्माणम्॥ कर्तृ॥ शिवतां कल्याणत्वं गच्छति।

---

३४८. भवति for भगवति K1. O. (corrected into भग°).

३४९. तदा तव माननीयं A. E. तदा तव लालनीयं N. for त-यं.

३५०. मां for मा K1.; °तनत्व° for °तनात्व° Bh. G. K1. K2.; °मुदगाः शिवतातिरेव for °मु-धि N.; शिवतातिरोधि A. C. E. शिवतातिवेति Bh.; शिव इत्यबोधीः and शिवतामुपैति noticed by Com. for शि-धि.

३५१. °र्गिणी for °र्गिकी Bh.

३५२. मुशलै° for मुसलै° O.; चरणैरवताडनानि A. K1. K2. मुशलैश्च ताडनानि Bh. चरणैरवताडितानि C. for मु-नि.

सौदा० । वत्स अलमावेगेन ।

अकरिष्यदसौ पापमतिनिष्करुणैव सा ।

३५५ नाभविष्यमहं तत्र यदि तत्परिपन्थिनी ॥

उभौ । प्रणम्य । अतिप्रसन्नमार्यापादैः । तत्कथय का पुनस्त्वमस्माकमेवंविधा बन्धुः ।

सौदा० । ज्ञास्यथः खल्वेतत् । उत्थाय । इयमहमिदानीं

---

अतः पालनमस्य । भद्रवस्तुपुरस्कारः स्वभावादेवेत्याह । मनोहरस्य ख्यातस्य सुगन्धस्य वा पुष्पस्य मस्तके धृतिः स्वभावसिद्धा । न पादैः पीडनानि स्वभावसिद्धानीत्यर्थः ।

३५४-३५६ अकरिष्यदित्यादि । असौ कपालकुण्डला पापं तद्वधरूपमकरिष्यदेव । अतिनिष्करुणा यतः सा । यदि तत्र स्थाने वधे वा तस्या विरोधिनी नाहमभविष्यम् ॥ क्रियातिपत्तौ लृङ् ॥ बुद्धिप्रत्यक्षतयासाविति । अतिप्रसन्नं प्रसादः कृतः ।

३५८-३६० ज्ञास्यथः । युवामित्यर्थात् । गुर्वित्यादि । गुरुचर्या गुरुसेवा गुर्वी चर्या विशिष्टमनुष्ठानम् । तपश्चान्द्रायणादि । तन्त्रं मण्डलवर्तनादि । मन्त्रस्ताराप्रभृतिदेवीनां तन्त्रस्य वागमस्य वा

---

३५३. सौदामनी for सौदा° K2.; N. O. om. वत्स.

३५४. यतो B. इति K1. K2. for अति; °णेव for °णैव K1.

३५५. मा for ना° A.

३५६. माधवमकरन्दौ for उभौ A. E.; यद् before अति N.; यदि for अति Bh.; चरणैः for पादैः A. E.; Bh. om. तत् ; कथं पुनस्त्वमेवास्माकं बन्धुः for का-न्धु A.; Bh. om. पुनः.

३५७. अकारण B. एव Bh. एवं विधो K2. एक O. for एवं विधा; N. om. विधा.

३५८. सौदामनी for सौदा° K2.; ज्ञास्यथ Bh. C. E. K1. K2. ज्ञास्यते N. for ज्ञास्यथः; स्वल्पेनैतत् for खल्वेतत् K1.; इदानीमहं for अह-नीं Bh. K1. K2.

गुरुचर्यातपस्तन्त्रमन्त्रयोगाभियोगजाम् ।
इमामाक्षेपिणीं सिद्धिमातनोमि शिवाय वः ॥ २६०

इति समाधवा निष्क्रान्ता ।

मक० । आश्चर्यमाश्चर्यम् ।

व्यतिकर इव भीमस्तामसो वैद्युतश्च
क्षणमुपहतचक्षुर्वृत्तिरुद्भूय शान्तः ।

विलोक्य सभयम् । २६५

कथमिह न वयस्यस्तत्किमेतत् । विचिन्त्य । किमन्य-
त्प्रभवति हि महिम्ना स्वेन योगीश्वरीयम् ॥

---

मन्त्रः । योगः समाधिः । एष्वभियोगादभ्यासाज्जातामिमामाक-
र्षणीं सिद्धिं युष्माकं कल्याणाय विस्तारयामि ।

२६३-२६८ व्यतिकर इत्यादि । मालतीवार्ताया अप्यज्ञाना-
दयं तामसोऽन्धकारजः । अत एव भीमः । तज्जीवनज्ञानाद्वै-
द्युतश्चायं विद्युत्संबन्धी । व्यतिकरः संपर्कः । अत एवानन्दाश्रुसंभारे-
णोपहतनेत्रवृत्तिः । कीदृशः । क्षणमुद्भूय शान्तः । अत एव विद्यु-
द्विद्योतवितर्कः । कथमिहस्थाने वयस्यो माधवोपि नास्ति ।

---

२५९. चर्याभियोगतः C. सिद्ध्यभियोगजां N. for योगा-म्.

२६०. °माक्षेपर्णीं for °माक्षिपिणीं Bh.; °माक्षेपर्णीं विद्यामातनोमि A. E. °माक्षेपिर्णीं विद्यां विदधामि B. °माकर्षिणीं सिद्धिमातनोमि N. for °माक्षे-मि.

२६१. N. O. om. इति; सौदामिनी after समाधवा N.

२६२. Bh. K1. N. om. one आश्चर्यम्.

२६४. °मुपगत for मुपहत N.

२६५. K2. om. विलोक्य सभयम्.

२६६. इव for इह Bh.; एतद्विचित्रम् । विचिन्त्य । for एतत् ।—न्यत् B.; K2. om. विचिन्त्य.

२६७. विभ° for प्रभ° O.; किमन्यत्स्वेन योगे° for म-गी° E.; योगे° for योगी° A. B. K1. K2.

सवितर्कम् । किमयमर्थोऽनर्थ इति संप्रति प्रमुग्धोऽस्मि ।
अपि च । अस्तोकविस्मयमपस्मृतपूर्ववृत्त-
१७० मुद्भूतनूतनभयज्वरजर्जरं नः ।
एकक्षणत्रुटितसंघटितप्रमोह-
मानन्दशोकशबलत्वमुपैति चेतः ॥

---

तत्किमिदं क्व गतः केन वा स नीत इति विचिन्त्येत्यर्थः। निर्णय-माह । अन्यत्किम् । यत इयं योगीश्वरी निजतपःप्रभावेण प्रभवति । अनया नीत इति भावः । संशय्याह किमयमिति । सौदामिनीनय-नेऽर्थः प्रयोजनं कपालकुण्डलानयनेऽनर्थ इति भावः ।

३६९-३७४ अस्तोकेत्यादि । अस्माकं चित्तम् ॥ कर्तृ ॥ हर्ष-शोकाभ्यां शबलत्वं मिश्रत्वं गच्छति । कीदृशम् । अनल्पाश्चर्यम् । एकदैव नानारससंभवात् । अपस्मृतं विस्मृतं पूर्ववृत्तं मालतीहरणरूपं यत्र । अत एवानन्दः । उद्भूतं नवं भयं माधवापकारशङ्काकृतं तेन ज्वरेण जीर्णम् । अत एव शोकः । यद्वा । माधवानवलोकनेनोद्भूतनव-शङ्काज्वरजर्जरतया शोकः । एकक्षण एव त्रुटितो घटितश्च प्रमोहो यत्र तत् । मालतीलाभसंभावनया त्रुटितो माधवापकारसंभावनया घटित इति भावः । अत एवात्याश्चर्यम् । स्तोकशब्दोऽल्पपर्यायः ।

---

३६८. तत् before किम् B.; एवम् for अयम् Bh.; A. E. om. अर्थः; संप्रमुग्धोऽस्मि for सं-स्मि K1. K2. O.; C. om. संप्रति; मुग्धोऽस्मि A. मूढोऽस्मि Bh. N. संमुग्धोऽस्मि C. for प्र-स्मि.

३६९. किं for अपि N.; विचिन्त्य after च N.; °मुप° Bh. °मवि° N. for °मप°.

३७०. भयं Bh. for भय; जर्झरं for जर्जरं N.; °रांतः for °रं नः Bh.

३७१. प्रमोद B. प्रबोध N. for प्रमोह.

३७२. सब° for शब° Bh.

तदत्र कान्तारगहने सहास्मद्वर्गेण प्रविष्टां भगवतीमन्विष्य तस्या वृत्तान्तमेनं कथयामि । इति निष्क्रान्तः ।

॥ मालत्यन्वेषणं नाम नवमोङ्कः ॥　१७५

---

अस्मद्वर्गेण मदयन्तिकालवङ्गिकाभ्याम् । विप्रनष्टामिति कस्मिंश्चित्पुस्तके पाठो दृश्यते तत्रादृश्यमानामित्यर्थः । भगवतीं कामन्दकीम् । अनेनाग्रिमाङ्कावतारस्यापि सूचनादङ्कावतारोयम् ।

प्रासूत यं रत्नधरोतिविद्यो विद्योतिविद्या दमयन्तिकापि ।
जगद्धरं तत्कृतटिप्पणेङ्कोगलन्नवीने नवमोनवद्यः ॥

॥ इति नवमोङ्कः ॥

---

१७३. एत्र after अत्र A. E.; विप्रकृष्टं Bh. विप्रनष्टां O. (corrected into प्रविष्टां) noticed by Com. for प्रविष्टां; अनुसृत्य Bh. उपसृत्य N. उपेत्य O. for अन्विष्य.

१७४. मालतीमाधव B. तयोः K1. for तस्याः; Bh. N om. तस्याः; एतत् Bh. एनां K1. for एनं; कथयिष्यामि A. E. निवेदयामि B. for कथयामि; °मेति for °मि इति K1.; निष्क्रान्ताः सर्वे for निष्क्रान्तः Bh. C.; सर्वे च B. इति निष्क्रान्ताः सर्वे O. after निष्क्रान्तः

१७५. A. Bh. C. E. N. O. om. मा—नाम; इति K1. श्रीमालतीमाधवे K2. before मालत्यन्वेषणं; सौदामिनीदर्शनो for मा-णं B. इति मालतीमाधवे before नव°.A; समाप्तिमगात् after अङ्कः C.

# ॥ दशमोऽङ्कः ॥

ततः प्रविशति कामन्दकी लवङ्गिका मदयन्तिका च ।

काम० । सकरुणं सास्रम् । हा वत्से मालति मदङ्गालंकारिणि क्वासि देहि मे प्रतिवचनम् ।

आ जन्मनः प्रतिमुहूर्तविशेषरम्या-
५ ण्याचेष्टितानि तव संप्रति तानि तानि ।
चाटूनि चारुमधुराणि च संस्मृतानि
देहं दहन्ति हृदयं च विदारयंति ॥

---

१–७ सहास्मद्वर्गेणेत्यव्यवधान एव सूचनात्तत्प्रवेशमाह । तत इति । मालतीविश्लेषं श्रुत्वा विलपति हेत्यादि । आ जन्मन इत्यादि । जन्मन आरभ्य प्रतिक्षणाधिक्यमनोज्ञानि तव तानि तानि पूर्वानुभूतान्याचेष्टितानि विनयादीनि संस्मृतानि सन्ति मेऽङ्गं दहन्ति चित्तं च दारयन्ति । अनेन बाह्या मानसी च पीडोक्ता । तथा चाटूनि वाक्कौशलानि स्मृतानि दाहादिकं कुर्वन्ति । विनयादीनामद्वेषकारितया

---

१. °शंति कामंदकीमदयंतिकालवंगिकाः for °श-च B.; मदयंतिका लवंगिका च for ल–च Bh. O.

२. A. E. om. सकरुणं; N. om. सक-स्रम्; Bh. C. K1. K2. om. सास्रम्; हे for हा Bh.; हा before मद° N.; मदलंकारकारिणि A. B. C. K1. मदंकालंकारकारिणी Bh. मदंग (marg. क.) लालिते O. for म-णि.

३. क्वापि for क्वासि K1.; N. om. प्रति.

४. आजन्म यानि सविशेषमुहूर्तरम्या° for आ-म्या° Bh.; प्रभृति यानि विशेष B. प्रतिविशेषमुहूर्ते (corrected into प्रभृति यानि विशेष) O. for प्र-ष.

५. वचनानि च चारुनेत्रे for तव संप्रति तानि तानि E.

६. चाति for चारु N.

अपि च । पुत्रि

अनियतरुदितस्मितं विराज-
त्कतिपयकोमलदन्तकुड्मलाग्रम् ।　　१०
वदनकमलकं शिशोः स्मरामि
स्खलदसमञ्जसमुग्धजल्पितं ते ॥

इतरे । सास्रम् । हा पिअसहि सुप्पसण्णमुहअन्दसुन्दरि कहिं गदासि को वा सिरीसकुसुमसुउमारस्स दे सरीरस्स देव्वदु-

रम्यत्वम् । चाटूनि कीदृशानि । चारूणि शोभावन्ति मधुराण्यनुल्व-णानि च । यदाह ।

सर्वावस्थाविशेषेषु दीप्तेषु ललितेषु च ।
अनुल्वणत्वं चेष्टानां माधुर्यमिति संज्ञितम् ॥

९–१२ अनियतेत्यादि । बालायास्तवास्यपद्मं स्मरामि । कीदृशम् । अस्थिरे क्रन्दनहास्ये यत्र तत् । शोभमानकिंचिन्मृदु-दशनकलिकाग्रम् । सम्यक्स्थानप्रयत्नाभावात्स्खलत् । तत्त्वहान्या-समञ्जसं संख्यातिक्रमादज्ञानाद्वासमञ्जसम् । मुग्धमर्थाभावात् । जल्पितं मन्दोक्तिर्यत्र तत् । सर्वत्र शैशवमेव हेतुः ॥ कमलकमि-त्यत्राल्पार्थे कन् ॥ सम्यगञ्जसा तत्त्वेन वर्तत इति समञ्जसमिति ॥

८. आकाशे before अपि च A. E.; C. N. om. पुत्रि.

९. रुचिर for रुदित N.

१०. कुट्मला° for कुड्मला° A. K1. K2. N.

१२. मञ्जु जल्पितं तत् A. मुख्यजल्पितं ते Bh. मञ्जु गुंजितं ते E. for मु–ते; च for ते O

१३. मदयन्तिकालवङ्गिके A. E. K2. इतरा: K1. N. for इतरे; Bh. C. K1. N. om. सास्रम्; आकाशे after सास्रम् A. E. K2.; सहि सुहि for हा-हि Bh.; प्रिय for पिअ O.; °सण for °सण्ण Bh.; चन्द for अन्द A. K2.

१४. Bh. N. om. गदा; को दे सरीरअस्स Bh. को वा दे सरीरअणस्स विहिदुव्विलास N. for को-णअ; सुकु° for सुउ° C. K1. K2.; C. om. सरीरस्स; °रसरीरस्स दे K1 °रस्स सरीरस्स दे K2. O. for °रस्स-स्स; °रीरस्साअं for °रीरस्स A.; दुइ C. इत्ति E O. इव (?explained as इमिति ) K1. before देव्व; दिव्व for देव्व K2.

१९ व्विणअपरिणामो एक्कलिआए उवणदो । महाभाअ माहव उवत्थि-
दत्थमिदमहूसओ दे जीअलोओ संवुत्तो । (क)

कामं० । सविशेषखेदम् । हा वत्सौ ।

अभिनवरागरसोयं भवतोः कृतकौतुकः परिष्वङ्गः ।
लवलीलवङ्गयोरिव नियतिमहावात्ययाभिहतः ॥

(क) हा प्रियसखि सुप्रसन्नमुखचन्द्रसुन्दरि क्व गतासि को वा शिरीषकुसुमसुकुमारस्य ते शरीरस्य दैवदुर्विनयपरिणाम एकाकिन्या उपनतः । महाभाग माधव उपस्थितास्तमितमहोत्सवस्ते जीवलोकः संवृत्तः ।

अञ्जसा तत्त्वतूर्णयोरिति विश्वः ॥ मञ्जु जल्पितमिति पाठे मञ्जु मनोहरम् ।

१९-२० अत्रैकाकिन्या एकमात्रस्वरूपायाः । आदावुपस्थितोथास्तमितो महोत्सवो यत्र सः । अभिनवेत्यादि । अभिनवे रागेनुरागे रस इच्छा यत्र । यद्वा । अभिनवरागो नूतनासक्ती रसः शृङ्गारो यत्र । कृतं कौतुकं हर्षो नर्मोत्सवो वा यत्र । सोयं भवतोर्युवयोः परिष्वङ्ग आलिङ्गनं नियतिर्दैवं सैव महावात्या तयाभिहतः । लवली लताभेदः । लवङ्गो वृक्षभेदः । तयोः परिष्वङ्गः संपर्क

१५. °व्विलास for °व्विणअ O.; अक्केलिआए A. अक्केलिआए E. एक्कलाए B. एक्कलिओऐ K1. for एक्कलिआए; गदो for णदो A. Bh.; हा before महा Bh. C. K1. K2. N.; °णुभाअ B. भाग E. °णुभाय O. for भाअ; माघ° for माह° O.; उप for उव A. E.; ट्ठिअ N. ट्ठिद O. for त्थिद.

१६. °त्थमिद Bh. त्थिामिद C. °त्तामिद K2. °त्थमिअ N. स (marg. अस्त) मिद O. for त्थमिद; °सवो for °सओ Bh. K1. K2. N. O.; °वो जीवंतो सं° for °ओ-सं Bh.; जीव for जीअ N. O.

१७. B. Bh. om. सविशेषखेदम् ; वत्से for वत्सौ K1.

१८. रसोयं for रसोयं B.; K1. om. °यं; भवता for भवतोः Bh.

१९. नियत for नियति Bh.; विहत; A. E. N. °भिहितः Bh. निहतः O. for °भिहतः.

लव० । सोद्वेगम् । हदास वज्जमअ सव्वहा णिसंसासि २०
हिअअ । ( क ) इति हृदयमाहत्य पतति ।

मद० । सहि लवङ्गिए णं भणामि क्खणमेत्तअं वि दाव
समस्सस ) ( ख )

---

( क ) हताश वज्रमय सर्वथा नृशंसमसि हृदय ।

( ख ) सखि लवङ्गिके ननु भणामि क्षणमात्रमपि तावत्समा-
श्वसिहि ।

---

इव । अभिनवौ लौहित्यरसौ यत्र सः । रस आर्द्रता । कृतं कौतुकं
कुतूहलं द्रष्टृणां येन सः ॥ रागोनुरागे लौहित्य इति विश्वः । शृङ्गा-
रादौ द्रवे चापीच्छायामप्ययं रस इति धरणिः । कौतुकं त्वभिलाषे
स्यादुत्सवे नर्महर्षयोः । कुतूहलेपि तत्प्रोक्तमिति मेदिनीकरः ॥
तदिहाचेतनोपमया तयोरपि बालयोर्वृक्षविवाह इव मया विवा-
होप्यकारि दैवेन स न सोढ इत्युक्तम् । देशान्तरनयनान्नियते-
र्वास्यया सह रूपकम् । अत्र नृशंसं नाशकम् ।

---

२०. बाल for लव° Bh.; सविगं for सोद्वेगम् B. Bh. N. O.; हा before हदास B. O.; °मय for °मअ Bh.; हिअअ before सव्व° instead of after °सि Bh.; सव्वधा for सव्वहा A. E. O.; दाणीं before णिसं° K1. K2.; णिसंसोसि A. Bh. C. K1. K2. णिरासोसि E. निसंसोसि O. for णिसंसंसि.

२१. हद before हिअ° B. K1. K2.; हिदअ for हिअअ K1.; O. om. हिअअ; O. om. इति.

२२. सास्त्रं after मद° Bh. C. K1. K2. O.; Bh. N. om. सहि; °ङ्गिके for ङ्गिए A.; खण for क्खण Bh. K1.; °त्तकम्मि दा° A. E. °त्तं किं पि दा° B. °त्तकन्दा° K1. °त्तकम्पि दा° K2. O. for °त्तअं वि दा°; पि for वि. Bh.

२३. समसस्स E. समास्सस K2. समस्ससिहि N. for समस्सस.

लव० । सहि किं करेमि दिढवज्जलेवपडिवद्धणिच्चलं विअ
२५ जीविदं ण मं परिच्चअदि ( क )

काम० । वत्से मालति जन्मनः प्रभृति वल्लभा ते लवङ्गिका । तत्किमेनामुज्जिहानजीवितां वराकीं नानुकम्पसे । इयं हि ।

उज्ज्वलालोकया स्निग्धा त्वया त्यक्ता न राजते ।
मलीमसमुखी वर्तिः प्रदीपशिखया यथा ॥

---

( क ) सखि किं करोमि दृढवज्रलेपप्रतिबद्धनिश्चलमिव जीवितं न मां परित्यजति ।

---

२४ अत्र प्रतिबद्धं घटितमत एव निश्चलम् ।

२७–३१ उज्जिहानमूर्ध्वं गतम् । कण्ठोपगतमिति यावत् । उज्ज्वलेत्यादि लवङ्गिकामुद्दिश्य । त्वया त्यक्तेयं न शोभते प्रदीपशिखया त्यक्ता वर्तिरिव दशेव । उज्ज्वल आलोको दर्शनं यस्यास्तया । शिखापक्ष आलोक उद्द्योतः । स्निग्धा प्रीता । स्नेहवती च तैलादियोगात् । मलीमसं म्लानं मुखमाननं यस्याः सा । मलीमसं दग्धतया श्यामं मुखमग्रं यस्याः सा च । प्रगुणीकृता-

---

२४. मदअंतिए for सहि Bh. N.; करोमि for करेमि A. Bh. K1. N. O.; दढ for दिढ C. K2.; लेप for लेव Bh. E.; पडिवद्धं B. O. पडिवंध N. णिबद्ध K1. for पडिबद्ध; B. O. om. विअ; मम A. E. इव Bh. व C. K1. for विअ.

२५. विअं for °विदं N.; मण for णमं Bh.; N. om. मं; °च्चअइ Bh. K2. °त्व-अदि K1. for °च्चअदि.

२६. आ जन्मनः प्रभृति वल्लभतमा for ज-भा B.; जन्मतः for जन्मनः A. Bh.; ते वल्लभतरा for वल्लभा ते O. वल्लभतमा Bh. दुर्लभतरा N. for वल्लभा.

२७. B. N. om. एनां. एतां for एनां Bh. C. E.; अनुमन्यसे for अनुकम्पसे C.

कथं च कल्याणि कामन्दकीं परित्यजसि । नन्वकरुणे म- ३०
दीयचीवरोष्मणैव ते प्रगुणीकृतान्यङ्गानि ।

स्तन्यत्यागात्प्रभृति सुमुखी दन्तपाञ्चालिकेव
क्रीडायोगं तदनु विनयं प्रापिता वर्धिता च ।
लोकश्रेष्ठे गुणवति वरे स्थापिता त्वं मयैव
स्नेहो मातुर्मयि समधिकस्तेन युक्तस्तवापि ॥ ३५

---

न्यृजूकृतानि । उत्पत्त्यनन्तरं नाडीनां शुद्धद्रव्येणर्जुकरणात् । यद्वा । प्रगुणता पुष्टिः ।

३२–३५ स्तन्येत्यादि । तेन हेतुना मातुः सकाशादधिकः स्नेहोयं मयि तव युक्तः । यद्वा । तेन हेतुनायं वियोगस्तव युक्त इति सोल्लुण्ठम् । यतः स्तनपानत्यागादारभ्य क्रीडायोगं खेलम् । यद्वा । क्रीडा कला योगो विद्याप्रयोगस्तं प्रापिता । ततः पश्चाद्विनय-मनौद्धत्यं प्रापिता । वृद्धिं प्रापिता च । दन्तपाञ्चालिकेव दन्तमय-कृत्रिमपुत्रिकेव । जनेषु श्रेष्ठे शोभादिगुणयुक्ते जामातरि त्वं स्थिरी-कृता । परिणयात् । मयैव न तु पित्रादिनेत्यर्थः । बाल्य एव का-न्तिमत्त्वात्सुमुखीत्युक्तम् ॥ पाञ्चालिका पुत्रिकायामिति विश्वः ॥ पाञ्चालिकापि क्रीडादिकं कार्यत इति प्रसिद्धमेव । विद्याभ्यासो बाल्य एव स्त्रीणाम् । यदाह ।

बाल्येधीयीत विद्यां स्त्री कामशास्त्रादिकं पुनः ॥

---

३०. तत् before कथं Bh.; A. E. om. च; कल्याणिनि for कल्याणि Bh.; जहासि A. E. त्यजसि B. N. for परित्यजसि; नान्य° for नन्व° K1.

३१. चीवरांचलो° Bh. चीरो° E. शरीरो° K2. चीरा[illegible]° N. for चीवरो°; °ष्मणैश्च for ष्मणैव Bh. अंगानि (corrected into अंगकानि ) O.

३२. सुखिनी B. सुमुखे K1. for सुमुखी; पंचा° for पाञ्चा° Bh. K2.

३५. मम for मयि B. Bh.; तथा for तव Bh. E.

सवैक्लव्यम् । चन्द्रमुखि संप्रति निराशास्मि ।

अकारणस्मेरमनोहराननः

शिखाललाटार्पितगौरसर्षपः ।

तवाङ्कशायी परिवृत्तभाग्यया

४० मया न दृष्टस्तनयः स्तनंधयः ।

लव०। भअवदि पसीद णीसहम्हि संपदं जीविदुव्वहणेण ।

---

( क ) भगवति प्रसीद* निःसहास्मि सांप्रतं जीवितोद्वहनेन ।

---

पुरुषगुणा अपि भरते ।

शोभा विलासो माधुर्यं स्थैर्यं गाम्भीर्यमेव च ।

ललितौदार्यतेजांसि पौरुषेया गुणा अपि ॥

३६–४० करुणस्नेहार्द्रिकृवता। अकारणेत्यादि । विगत भाग्यया मया तव पुत्रो न दृष्टः। कीदृशः। अकारणेनालक्षितहेतुतया स्मेरमीषद्धसनं मनोज्ञं मुखं यस्य सः। शिखायां ललाटे च दत्तश्वेतसर्षपः। एतत्तु रक्षायै । क्रोडे सुप्तः । स्तनपायी च ।

४१–४६ अत्र जीवितेति । तां विना जीवनमनर्हमिति भावः।

---

३६. हा before चन्द्र Bh. N.; °शासि for °शास्मि. E.

३७. स्नेह for स्मेर K1.; रमा° for हरा° O.

३८. शिला for शिखा C.; शेखरः for सर्षपः G.

३९. अङ्कगामी A. अंगशायी Bh. अंगगामी E.

४१. मद° for लव° N.; प्पसीद for पसीद O.; ण सहामि B. N. ण सक्कम्हि Bh. असमत्थाम्हि C. असमत्थाम्हि K1. K2. ण समत्थाम्हि O. for णी–म्हि; जीवणुव्वहणे A. जीवितुव्वहाणसहासेण C. जीवणुव्वहणस्स E. जीवदुव्वहणसाहसेण K1. जीविदुव्वहणसाहसेण K2. O. जीविदं दुव्वहणं N. for जी–ण; °णेन for °णेण Bh.

* प्रसीद twice Com.

साहं इमादो गिरिसिहरादो अत्ताणअं अवधुणिअ णिव्वुदा भविस्सं । तहा मे भअवदी आसिसं करेदु जेण जम्मन्तरे वि पिअसहिं पेक्खिस्सं । (क)

कामo । ननु लवङ्गिके कामन्दक्यपि नातः परं वत्सावियोगेन जीविष्यति समश्वायमुत्कण्ठावेग आवयोः । ४५

---

* साहमस्माद्गिरिशिखरादात्मानमवधुत्य† निर्वृता भविष्यामि । तथा मे भगवत्याशिषं‡ करोतु येन§ जन्मान्तरेपि प्रियसखीं प्रेक्षिष्ये ।

---

निर्वृतेति । मरणे तद्वियोगदुःखापनयादिति भावः । उत्कण्ठेति । जन्मान्तरे तां द्रक्ष्यामीत्युत्कण्ठा ममापीत्यर्थः । तत्कथं मयापि स्वतोसिद्धतया त्वय्याशीर्दातव्येति भावः ।

---

४२. ता before साहं K2.; ता for साहं A. K1.; गिरिवरादो Bh. E. गिरिशिखरादो C. गिरिप्पवादादो N. गिरिकंदरादो O. for गि–दो; अत्ताणं for अत्ताणअं B. Bh. N.; ववधूणिअ Bh. अवधूणिअ K1. K2. N. for अवधुणिअ; णिवुत्ता K2. णिवुदा O. for णिव्वुदा.

४३. ता before तहा Bh. C. K1. O.; N. om. तहा–स्सं and has instead प्रपातादात्मानं क्षेप्तुकामा; तह Bh. तधा E. K2. for तहा; अ for मे K2.; आसिप्पसादं A. आसीसं B. O. अविसं C. E. for आसिसं; पसादीकरेदु for करेदु B. K2.

४४. °रेण for °रे O.; पि E. दाव O. for वि; दाव before पिअ Bh. C. E. K1. K2.; सहीं for सहिं A. B. C. N.; पक्खिस°K2. पिक्खिस° O. for पेक्खिस°.

४५. N. om. काम° । ननु—उत्तिष्ठति; B. om. ननु; °मन्दक्यापि ना° A. E. K1. K2. O. मंदक्या ना° Bh. for °मन्दक्यपि ना°; Bh. om. परं.

४६. जीवितव्यं for जी-ति A. Bh. E. K1. K2. O.; O. om. सम-किं च (l. 47); समानश्वायमावयोरुत्कंठाप्रसंगः B. समश्वावयोरुत्कंठायोगः Bh. समानश्वायमुत्कण्ठायोग आवयोः K1. K2.; °ण्ठावियोगः for °ण्ठावेगः C.

* तदस्माद् for साहमस्माद् Com. † पातयित्वा for अवधुत्य Com. ‡ आशीःप्रसादं for आशिषं Com. § यथा for येन Com.

किं च । संगमः कर्मणां भेदाद्यदि न स्यान्न नाम सः ।
प्राणानां तु परित्यागे संतापोपशमः फलम् ॥

लव० । जहा तुम्हे आणवेध । (क) उत्तिष्ठति ।

५० काम० । सदयं वीक्ष्य । वत्से मदयन्तिके ।

(क) यथायूयमाज्ञापयथ ।

४७–४८ संगम इत्यादि । कर्मणां वैचित्र्यादस्माकं मालत्या सह संगमो न स्यात् । अनागमो निर्युक्तिको यतः सः । मालत्या मम च कर्मणां साम्ये मानाभावाज्जन्मान्तरे संगमो निर्युक्तिक इति भावः । तर्हि प्राणत्यागेनालमत आह । प्राणत्यागः पुनस्तापशान्तिफलकः । तथा च तदर्थं स क्रियत इति भावः । संगमाभावे तु मानं ।

मृतोपि मानुषः शक्तो नानुगन्तुं मृतं जनम् ।
जायावर्जं च सर्वस्य याम्यः पन्था विभिद्यते ॥

इति स्मृतिः ।

४७. ममापि खलु for किं च K2.; योगात्रहि सः स्यादनागमः for भे–सः B.; न स्यादनागमः A. न स्यान्न सोस्तु नः Bh. न स्यात्ततोस्तु मा C. न स्यात्ततोस्तु नः K1. K2. हि स्यान्न नाम तत् O. for न स्यान्न नाम सः; तत् for सः E.; text with G.

४८. सन्तापोपरमः A. E. संगतापशमः C. for सं–मः.

४९. जह Bh. जधा O. for जहा; इत्युत्तिष्ठंति B. उत्तिष्ठंति Bh. for उ-ति; E. om. उत्तिष्ठति.

५०. मदयंतिकां for सदयं B.; मदयंतिकां before वीक्ष्य O.; °दन्ति° for °दयन्ति° K1.

मद०। किं आणवेध । अग्गेसरी होहि त्ति । अवहिदम्हि ।(क)

लव० । सहि पसीद विरम एत्तो अत्तणो वावादणादो । मा एदं जणं विसुमरेसि । (ख)

मद० । सकोपमिव । अवेहि णम्हि दे वसंगदा । (ग)

काम० । हन्त निश्चितं वराक्या । ५५

(क) किमाज्ञापयथ । अग्रेसरी भवेति । *अवहितास्मि ।

(ख) सखि प्रसीद† विरमैतस्मादात्मनो व्यापादनात् । ‡मैतं जनं विस्मरसि ।

(ग) अपेहि नास्मि ते वशंगता§ ।

५१–५८ भाविवाक्यमुन्नीयाह किमिति । अत्राग्रेसरी मरणे प्रथमा । अवहिता मर्तुम् । [लव० वा०] अत्राहं म्रिय इत्याशयः । अत्र वशंवदायत्ता । ते वचो न करिष्यामीत्यर्थः । निश्चितं निश्चयः कृतः । स्वगतं गुरुसमीपे प्रियस्मरणस्यायुक्तत्वात् । अत्र जन्मान्तरेऽप्ययं

५१. E. divides the speech as follows :—मद° । किं आणवेध । काम°। अग्रेसरी भवेति । मद° । अवहिदह्मि ।; Bh. om. किं; अग्रसरी होहोत्ति Bb. अग्गोहित्ति (Sk. rend. अग्रेसरी भव इति) K1. अग्गे होत्ति (Sk. rend. अग्रेसरी भवेति) K2. अग्गे सकामा होमि त्ति N. for अ-त्ति; होदुत्ति ता जाव अव° for हो-व° A.; भोदु for होहि O.; ता K1. ता इयम् O. before अव;° Bh. om. अवहिदह्मिः °ताह्मि K1. °दाम्मि K2. for °दम्हि.

५२. Bh. om. सहि; प्प° for प° A. O. विरम twice Bh. N.; N. om. एत्तो; एतो for एत्तो C. E.; एत्तो अ° torn off in K2.; अत्ताणअ B. अत्ताण Bh. O. for अत्तणो; अणअप्पवाहादो N. पव्वाहा (वादण added in margin) दो O. for वावादणादो

५३. °रदि Bh. °रेसु C. for °रेसि.

५४. B. K2. om. इव; अपे° for अवे° N.; णहि Bh. ण अम्हि K1. K2. for णम्हि; दे णात्थि for णम्हि दे E.; वदा for गदा A. E. K1. O.

५५. स्वगतं after काम° A. E.; आत्मपथे C. आत्मवधे K1. K2. before निश्चितं; विनि° for नि° B. O.; व्यवसितं व° Bh. व्यवसितं किं व° N. for नि–व°.

* इयमव° for अव° Com. † प्रसीद twice Com. ‡ मा खल्वेनं जनं विस्मरिष्यसि Com. § वशंवदा Com.

मक० । स्वगतम् । णाह मअरन्द णमो णमो दे । (क)

लव० । भअवदि अअं जेव्व मधुमदीसोत्तसंदाणिदपवित्तमेहलो महीहरविडङ्को । (ख)

काम०।कृतमिदानीं प्रस्तुतान्तरायेण । सर्वाः पतितुमिच्छन्ति ।

६० नेपथ्ये । आश्चर्यमाश्चर्यम् ।

व्यतिकर इव भीमस्तामसो वैद्युतश्च

क्षणमुपहृतचक्षुर्वृत्तिरुद्भूय शान्तः ।

काम० । विलोक्य । साद्भुतहर्षम् ।

---

(क) नाथ मकरंद नमो नमस्ते।

(ख) भगवति अयमेव मधुमतीस्रोतःसंदानितपवित्रमेखलो महीधरविटङ्कः ।

---

प्रियः स्यादिति तत्कालेऽस्य स्मरणमिति भावः । अत्र मधुमती नदी । संदानितं बद्धम् । विटङ्को निर्गतोन्नतप्रदेशः ॥ विटङ्क उन्नते देश इति रत्नकोशः ॥

---

५६. णाध for णाह K1.; नाथ मअरंदअ B. णाध मयरंद twice O. for णा-न्द; णमो दे twice for णमो णमोदे Bh. K1. N.

५७. °दिए स एव्व महुमदीसोअसंदाणिअ for °दि-णिद Bh.; एव्व for जेव्व N.; महु for मधु B. °मती for °मदी O.; सोतः for सो-त्त K2.; संवाद for संदाणिद O.; °णिअ for °णिद A. E.

५८. महि for मही K1.; °धर Bh. °यर O. for °हर; विटङ्को A. विडओ B. विटंओ E. for विडङ्को.

५९. सुकृत° for कृत° C.; इति before सर्वाः B.; पतितुमिच्छन्ति सर्वाः for स-न्ति O.

६०. Bh. om. one आश्चर्यं.

६१. Bh. om. इव; सीमः for भीमः Bh.

६२. गत for हत N.; °द्भूत for °द्भूय K2.

६३. B. om. विलोक्य; सहर्षाद्भुतं Bh. साद्भुतं सहर्षं च N. साकूतहर्षं O. for सा-म्.

कथमिह मम वत्सस्तात्किमेतत्
प्रविश्य मकरन्दः। किमन्यत्　　६५
प्रभवति हि महिम्ना स्वेन योगीश्वरीयम्॥

नेपथ्ये। कथमतिदारुणो जनसंमर्दो वर्तते।

मालत्यपायमधिगम्य विरक्तचेताः
सांसारिकेषु विषयेषु च जीवितेषु।
निश्चित्य वह्निपतनाय सुवर्णबिन्दु-　　७०
मभ्येति भूरिवसुरित्यधुना हताः स्मः॥

---

६८–७१ सकरुणः कश्चिद्वनेचर आह। मालतीत्यादि। भूरिवसुर्निश्चित्य निश्चयं कृत्वा वह्निपतनायाग्निं प्रवेष्टुं सुवर्णबिंदुं शिवं लक्षीकृत्यागच्छति। कीदृशः। मालतीमरणं ज्ञात्वा संसारविषयेष्वैश्वर्यादिषु जीवितेषु प्राणधारणेषु च विविक्तं विवेकशालि। निर्विण्णमिति यावत्। चेतो यस्य सः। विरक्तेति पाठः सुगम एव। जीवितेष्विति बहुवचनं प्राणधारणक्रियाणां बहुत्वात्। अधुना भूरिवसुवियोगे सति हताः स्मः।

---

६४. पुनर्नेपथ्ये before कथमिह A.; न वयस्यः A. वयस्यः E. मम वत्सा O. for मम वत्सः

६६. योगे° for योगी° A. B. E. K1. K2. O.

६७. पुनर् before नेपथ्ये K2.; जनावमर्दस्संप्रति व° for ज॰व° N.; सम्वर्तो for संमर्दो A. E.; °र्दः संप्राति व° for °र्दो व° Bh.

६८. °मव for °मधि O.; °गत्य for °गम्य K1.; विविक्त for विरक्त N. Com.; चेतः for चेताः Bh. K2.

६९. °विते च Bh. N. O.; °वनेषु K2. for °वितेषु.

७१. °सुमि° for °सुरि° Bh.; हताशः E. हतोस्मि K1. for हताः स्मः.

मदयन्तिकालवङ्गिके । झत्ति मालदीमाहवाणं दंसणब्भुदओ झत्ति अच्चाहिदं । (क)

कामन्दकीमकरन्दौ । दिष्ट्या । हा धिक्कष्टम् । आश्चर्यमाश्चर्यम् । ७५

किमयमसिपत्रचन्दनरसच्छटासारयुगपदवपातः ।
अनलस्फुलिङ्गकलितः किमयमनभ्रः सुधावर्षः ॥

(क) झटिति मालतीमाधवयोर्दर्शनाभ्युदयो*झटित्यत्याहितम् ।

७३–७७ अत्रात्याहितं महाभीतिः । किमित्यादि । असयः खड्गाः पत्राणि यस्य वृक्षस्य । दारकत्वात् । चन्दनरसच्छटा आश्चर्यात् आसारो वृष्टिः । तयोरेकदावपातः पतनं किमयम् । भूरिवसुगतानर्थश्रवणादसिपत्रपातः । मालतीमाधवयोर्जीवनाच्चन्दनरसासार इति भावः । किमयं मेघहीनोमृतवर्षोग्निस्फुलिङ्गमिश्रः ।

७२. अह्महे C. K1. O. अम्महे K2. before झत्ति; A. om. झत्ति; सहि B. झति Bh. झगि K2. for झत्ति; °ती for °दी Bh. O.; माध° for माह° C. O.; °णं दणब्भुअओ for °णं–ओ Bh.; महूसवो A. बुदओ K1. °ब्भुदयो N. for °ब्भुदओ.

७३. जादो before झत्ति E.; B. om. झत्ति; इग (?) ति K1. झगिति K2. for झत्ति; आच्चा° for अच्चा° Bh.; °हितं for °हिदं K2.; अ A. N. च C. after °हिदं.

७४. सहर्षं A. E. सहर्षखेदंBh. after °रन्दौ ।; Bh. om. दिष्ट्या-र्यम् ; A. E. om. दिष्ट्या; कष्टं भोः कष्टम् for हा धिक्कष्टम् N.

७६. कथम् for किम् B.; °सितप° for °सिप° Bh.; छटा for च्छटा Bh.; छटाभिसार for च्छ-र C.; °रयोर्युग for °रयुग A. B. E.; °दापातः for °दवपातः O.

७७. दहन for अनल K2.; °लसस्फु° for लस्फु° Bh.; कलिलः Bh. कवलितः K2. कलिलं O. for कलितः; किमिदमनभ्रं सुधावर्षं for कि-र्षः O.; °मवम° for °मयम° Bh.

* महोत्सवो for अभ्युदयो Com.

संजीवनौषधिविषव्यतिकरमालोकतिमिरसंभेदम्।
अद्य विधिरशनिशशधरमयूखसंवलनमनुकुरुते ॥

नेपथ्ये। हा ताद विरम विरम दंसणूसुअम्हि दे वअणकमलस्स। ८०
पसीद संभावेहि मं। कधं मम कारणादो समत्तलोआलोअन्त-
रालविक्खादणिम्मलकुलेक्कमङ्गलप्पदीवभूदं अत्ताणअं परिच्च

[क] हा तात विरम विरम*दर्शनोत्सुकास्मि ते वदनकमलस्य। प्रसीद संभावय माम्। †कथं मम कारणात्समस्तलोकालोकान्तराल‡विख्यातनिर्मलकुलैकमङ्गलप्रदीपभूतमात्मानं परित्यजसि। मया

७८-८३ समित्यादि। संजीवनौषधेर्विषस्य च व्यतिकरं मेलकं तेजसस्तिमिरस्य च मेलकं वज्रस्य चन्द्रकरस्य च मिलनं विधाताद्य सदृशीकरोतीत्यर्थः। आर्याच्छन्दः। अत्र लोको जगत्। अलोकः स्वर्गः। तयोर्मध्य इत्यर्थः। मङ्गलं श्रेयः। अनार्यया

७८. अपि च। before संजी° B. O.

७९. °लम° for °लनम° K2.; इह for अनु O.

८० A. B. om. one विरम; °द विरम ड्सुअह्मि दे वअणकमलदंसणण संभविहि मं पसीद कहं मह कालणादो for °द-णादो N.; आह्म वदणकमलदंसणे for दे-स्स Bh.; °णुत्सुकाह्मि B. °णुस्सुअह्मि C. °णुसुअह्मि E. °णोसुअह्मि K2. °णुस्सुयह्मि O. for °णू-ह्मि.

८१. पसीद twice C.; प्पसीद for पसीद O.; कहं for कधं A. Bh. E. O.; च B. Bh. K1. O. अ K2. before मम; समत्थ A. C. E. K1. समग्ग O. for समत्त; K1. om. लोआ°; लोका° for लोआ° Bh.; °लोआन्त° A. अंत° E. for °लोअन्त°.

८२. Bh. om. विक्खाद; विख्खंत B. विक्खम्भ C. विअम्भमाण K1. विक्खम्भ K2. विख्विभ N. विख्वाभ O. for विख्खाद; °म्मलकुल C. °म्मलेक्क K1. N. O. (corrected in margin of O. to °म्मलकुलेक्क) for °म्मलकुलेक्क; °लेक for °लेक्क K2.; Bh. om. मङ्गल; पदीव A. E. दीव Bh. for प्पदीव; °दीभू° for °दीवभू° K2.; °तं for °दं O.; अत्तार्णं for अत्ताणअं K1. K2. N.

* संदर्शनसमुत्सुकास्मि Com. † कथं च मम Com. ‡ विजृंभमाण for विख्यात Com.

असि । मए उण अणज्जाए णिरणुक्कोसा तुम्हे त्ति संभाविदं आसि । (क)

८५ काम० । हा वत्से

जन्मान्तरादिव पुनः कथमपि लब्धासि यावदयमपरः ।
उपराग इव शशिकलां कवलयितुमुपस्थितोनर्थः ॥

इतराः । हा पिअसहि (ख)

ततः प्रविशति प्रमुग्धां मालतीं धारयन्माधवः ।

---

पुनरनार्यया निरनुक्रोशा यूयमिति संभावितमासीत् ।
(ख) हा प्रियसखि ।

---

बालया । निरनुक्रोशा निर्दयाः । नन्दनाय दानोपक्रमात् ।

८६-९२ जन्मेत्यादि । उपरागो राहुग्रहः । यथा कृष्णपक्षाज्जन्मान्तराच्चन्द्रस्यैका कलोपलभ्यते तां च कवलयितुं राहुरुपस्थितस्तथा तावकीनमिदं वृत्तान्तस्वरूपमिति भावः । प्रमुग्धां पितृशोकजनितमोहाम् । अनर्थपरंपरायोगादतिकष्टम् । एषेत्यादि । इयं मालती प्रवासमतीतापि राक्षसीहस्तमतिक्रान्तापि पुनरन्यथैव कथं संशयं प्राप्ता । पितृशोकात् । अत्रोपपत्तिमाह । फलदानाभिमुखस्य भाग्यस्य द्वाराणि सुखदुःखोपनयनानि निवारयितुं को नाम जन्तुरी-

---

८३. जाणिदं after उण C.; अल° for अण° C. N. O. (corr. in margin of O. into अण°); °क्कोसाए तुम्हे परिच्चत्ता for णि-आसि Bh. N.; ति for त्ति K1.

८४. आसी for आसि K1.; K2. ends with आसि.

८६. अपि for इव E.; तावद् for यावद् Bh.; भीरु यावदयं for या-रः A. C. E.

८७. विकलयि° B. N. O. च कलयि° Bh. कलयि° C. for कवलयि°; °मिच्छतो° for °मुपस्थितो° Bh.

८८. लवं° । A. E. इतरे Bh. C. O. for इतराः E. om. हा; प्पिअ B. अपि Bh. प्पिय O. for पिअ.

८९. मुग्धां for प्रमुग्धां B. Bh. K1. N. O. (with प्र added in margin of O.).

माध० । कष्टं भोः कष्टम् । १०

एषा प्रवासं कथमप्यतीत्य याता पुनः संशयमन्यथैव ।

को नाम पाकाभिमुखस्य जन्तोर्द्वाराणि दैवस्य पिधातुमीष्टे ॥

मक० । सहसोपसृत्य माधवं प्रति । सखे अथ सा योगिनी क्व ।

माध० । श्रीपर्वतादिहाहं सत्वरमपतं तयैव सह सद्यः ।

करुणवनेचरवचनादनन्तरं तां न पश्यामि ॥ १९

कामन्दकीमकरन्दौ । सप्रणयमाकाशे । महाभागे पुनस्त्राय-स्व नः किमर्थमन्तर्हितासि ।

---

ष्टे समर्थो भवति । अपि तु न कोपीत्यर्थः ॥ प्रवासः परहस्ते च परदेशेपि कथ्यत इति नानार्थः ॥ नामानवक्लृप्तौ । द्वाराणीति बहुत्वेन निवारणेशक्यतोक्ता ।

१४–१९ श्रीपर्वतादिति । श्रीपर्वतादहमिह सत्वरमतिशीघ्रमपतमागतोस्मि । तया मालत्या सह । करुणाप्रधानवनेचरवचनादनन्तरं तां मालतीं न पश्यामि । मालत्यपायमधिगम्येत्यादि करुणवनेचर-

---

१२. का for को A.; जन्तुः for जन्तोः A. E. N.

१३. N. om. सह-ति; O. also but supplies सहसोपसृत्य in margin; उपेत्य क्व सा योगिनी for उपसृ-क्व B.; Bh. om. माधवं प्रति; अथ सा क्व योगिनी Bh. क्व सा योगिनी N. अथ क्व सा योगिनी O. for अ-क्व.

१४. श्रीपर्वतादागतां तामनुयान्तौ सद्यः करुणवनचरवचनानांतरत्नां ( नंतरन्तां ? ) न पश्यामि for श्री-मि Bh. श्रीपर्वतादहं सत्वरमापतितस्तयैव A. E. श्रीपर्वतादिहागमममंबरपातं तयैव C. श्रीपर्वतादिहाभवदम्बर पा [ त ? ] स्तयैव Kl. श्रीपर्वतादुपगतामनुयातोनयैव N. for श्री-व.

१५. °दंतरितां for °दनन्तरं N.

१६. N. om. सप्र-शे; O. also but supplies it in margin; C. om. पुनः; परित्रायस्व for त्रायस्व Bh. O.; परित्रायस्वैनं किमर्थमत्रैवांतार्हितासि for त्रा-सि B.

१७. A. E. om. नः; किमित्यंतरितासि for कि-सि N.

लवङ्गिकामदयन्तिके। साहि मालदि णं भणामि सहि मालदि त्ति।
सोत्कम्पम्। भअवदि परित्ताहि चिरणिरुद्धणीसासणिप्फुरं
१०० से हिअअं। हा अमच्च हा पिअसहि दुवे वि तुम्हे परप्परावसाणस्स कारणं जादा। (क)

काम०। हा वत्से मालति।

माध०। हा प्रिये।

मक०। हा प्रियसखि। सर्वे मोहमुपगम्य पुनः संज्ञां लभन्ते।

१०५ काम०। ऊर्ध्वमवलोक्य। तत्किमेष झटिति पाट्यमानादिवाम्बुदादम्बुनिवहः परिस्खलन्नस्मान्प्रीणयति।

---

**(क) सखि मालति ननु भणामि सखि मालति इति। भगवति परित्रायस्व चिरनिरुद्धनिश्वासनिःस्फुरमस्या हृदयम्। हा अमात्य हा प्रियसखि द्वावपि युवां परस्परावसानस्य कारणं जातौ।**

---

वचनम्। आर्याच्छन्दः। सखि मालति ननु भणामि सखि मालति इति प्रलापक्रमोयम्। अत्र निःस्फुरं चलनशून्यम्।

१०५-११२. सौदामिनीप्रभावकृतवृष्टयाश्चर्यमाह। किमिति।

---

९८. मदयंतिकालवंगिके for ल-के Bh.; Bh. om. 1st सहि मालदि; ण for णं Kl.; भणामो for भणामि N.; A. C. E. Kl. om. 2nd सहि; C. om. त्ति.

९९. सोत्कण्ठं for सोत्कम्पम् A. E.; परित्ताअहि Bh. परित्ताहि twice C. परित्ताअहि N. परित्ताय O. for परित्ताहि; णिव्वणं Bh. णिफुरं Kl. णिठ्ठुरं O. for णिप्फुरं.

१००. प्पिय for पिअ O.; द्वौवे for दुवे Bh.; पि for वि B.; परोप्प° Bh. C. Kl. परुप्प° E. for परप्प°; °सासणस्स for °वसाणस्स N.

१०१. जादं B. जाद Bh. जाता Kl. for जादा.

१०२. B. om. हा.

१०४. इति before सर्वे C. Kl.; °गत्य for °गम्य B.; A. Bh. E. om. पुनः.

१०५. Bh. C. Kl. N. om. ऊर्ध्वमवलोक्य; B. Bh. om. तत्; कथम् for किम् C.; किमेख ल्टि° for कि-टि° Bh.; तत् for एष N.; पात्यमान इवांबु° for पाटाम्बु° N.; दंबुवाहः for °दि-हः B.

१०६. अंबुद for अम्बु Bh.; °स्खन्न° for °स्खलन्न° Kl; परिस्खवन्नस्मान्प्रीणाति for परि-ति A. E.; प्राणयति for प्रीणयति Bh.

माध० । सोच्छ्वासम् । अये प्रत्यापन्नचेतना मालती । तथाह्यस्याः

भवति विततश्वासोन्नाहप्रणुन्नपयोधरं
हृदयमपि च स्निग्धं चक्षुर्निजप्रकृतौ स्थितम् । ११०
तदनु वदनं मूर्छाच्छेदात्प्रसादि विराजते
परिगतमिव प्रारम्भेह्नः श्रिया सरसीरुहम् ॥

नेपथ्ये । अविगणय्य नृपं सहनन्दनं
चरणयोर्नतमभिमुखे पतन् ।

---

मेघाभावाद्वृष्टेराश्चर्यहेतुतयेवकारः संगच्छते । प्रत्यापन्नं पुनरायातम् । भवतीत्यादि । अस्य नासा दीर्घश्वासा भवति । चलनादेव । प्रसन्नस्तनं हृदयमपि भवति । चक्षुश्च स्निग्धं सन्निजप्रकृतिस्थिरं भवति । तदनु तत्पश्चान्मुखम् ॥ कर्तृ ॥ मूर्छापगमात्प्रसन्नं शोभते प्रभाते शोभया सर्वतो व्याप्तं पद्ममिव । परिणतमिति पाठे विकासितमित्यर्थः । विततश्वासोन्नाहप्रणुन्नपयोधरमिति पाठे दीर्घश्वासस्योन्नाहेनोद्गमेन प्रेरितौ स्तनौ यत्र तदित्यर्थः ।

११३–१२२ अवीत्यादि । तत्क्षणं मद्वाण्यामात्यो निवर्तते । कीदृशः । नन्दनसहितं नृपं पादनतमपि तिरस्कृत्याभिसमूहे पतन् ।

---

१०७. सहर्षं for सोच्छ्वासम् Kl.; °स (corr. into प) न्न for °पन्न O.

१०८. त्वस्याः for ह्यस्याः Kl.

१०९. विततश्वासा नासा प्रसन्न A. विदितः श्वासो नासा प्रणुन्न B. विततस्वास (?) नासप्रणु° Kl. for वि-न्न.

११०. तः for च Bh.; निजे for निज C.

१११. °जतो for °जते Kl.

११२. परिणतमिव for परिगतमिव noticed by Com.

११३. अव for अवि C. Kl. O.; ससुहृज्जनं for स-नं C.

११४. चये नयत् for मु-न् Bh.; चये for मुखे N. O.

११९ सपदि भूरिवसुर्विनिवर्तितो
मम गिरा गुरुसंमदविस्मयः ॥

माधवमकरन्दौ । ऊर्ध्वमवलोक्य सहर्षम् । भगवति दिष्टचा वर्धसे ।

सा योगिन्यम्बरतो विघटितजलदाभ्युपैत्ययं यस्याः ।
१२० वागमृतजलासारो जलदजलासारमतिशेते ॥

काम० । प्रियं नः प्रियं नः ।

माल० । दिट्ठिआ पच्चुज्जीविदम्हि । ( ख )

---

( क ) दिष्टचा* प्रत्युज्जीवितास्मि ।

---

गाढहर्षाश्चर्येत्यर्थः । सहभावस्य विकल्पात्सहनन्दनमिति । सेत्यादि । सेयं योगिनी भिन्नमेघा संप्रत्यायाति यस्या अयं वागमृतजलासारो वचनामृतजलधारा जलधरजलधारामप्यतिक्रामति । सौहित्यादिना ततोऽप्यधिका भवतीत्यर्थः । अत्र चिरस्य बहुकालेन ।

---

११५. विनिवारितो B. विनिवर्तते E. K1. N. for विनिवार्तितो.

११७. Bh. om. सहर्षम् ; सविस्मयं A. E. हर्षं K1. for सहर्षम् .

११९. योगेश्वरीयं B. योगिनीयमातिरय Bh. N. O. योगीश्वरीयं C. योगिनीश्वरीयं K1. for यो-तो; °पेत्यस्याः B. °पैति नो वयस्या O. for °पै-स्याः; नो Bh. नौ N. for अयं.

१२०. जल for जला° Bh.; °मधि for °मति E.

१२१. सहर्षं before प्रियं C. K1.; C. E. K1. om. one प्रियं नः; प्रियं नः प्रियं A. प्रियं प्रियं नः B. प्रियं नो O. for प्रियं नः प्रियं नः.

१२२. मालत्यादयः for माल° A. B.; चिरस्स C. चिअस्स K1. after दिट्ठिआ; पच्च° (Sk. rend. प्रत्यु°) for पच्चु° K1.; °दम्ह A. B. O. °अम्हि N. for °दम्हि.

* चिरस्य after दिष्टया Com.

काम०। सहर्षं सबाष्पं च। एह्येहि पुत्रि मालति।

माल०। कधं भअवदी। (क) इति पादयोर्निपतति।

काम०। उत्थाप्यालिङ्ग्य मूर्ध्न्याघ्राय। १२५

जीव जीवितसमाय जीवितं देहि जीवतु सुहृज्जनश्च ते।

अङ्कैस्तुहिनसङ्गशीतलैः पुत्रि मां प्रियसखीं च जीवय॥

माध०। वयस्य मकरन्द संप्रत्युपादेयो माधवस्य जीवलोकः संवृत्तः।

मक०। सहर्षम्। एवमेतत्। १३०

(क) कथं भगवती।

१२६–१२७ जीवेत्यादि। हे पुत्रि त्वं जीव। ततो वल्लभाय जीवितं देहि। त्वज्जीवनाद्बन्धवोपि ते जीवन्तु। प्रशस्ताङ्कैः॥ प्रशस्तार्थे कन्॥ हिमसंबन्धशीतलैर्मां लवङ्गिकां च जीवय। अज्ञातिवृत्तमतिक्रान्तम्। संभावय योजय। कपालेत्यादि। अनया

१२३. सहर्षबाष्पं Bh. C. N. O. सहर्षं बाष्पं Kl. for सह-च; E. om. सबाष्पं च; मालतीं प्रति एह्येहि पुत्रि Bh. मालतीं प्रति। एहि पुत्रि E. for एह्ये-ति; मे before पुत्रि C. Kl.; A. N. O. om. मालति.

१२४. कहं for कधं Bh. E. N. O.; A. B. Bh. O. om. इति; पतति A. E. निपत्य रोदिति B. O. for निपतति; B. breaks off here.

१२५. उत्थाय for उत्थाप्य Kl.; मूर्ध्नि° Kl. शिरस्या° O. for मूर्ध्न्या°; उपाघ्राय for आघ्राय Bh. N.; च after °घ्राय Bh. G.

१२६. एहि for जीव A. C. G. E.; C. om. जीवितसमाय; °वितुं for °वितं G.

१२७. खंड for सङ्ग O.; °खीः च for °खीं च Kl.

१२८. A. E. om. माधवस्य; °धस्य for °धवस्य Kl.

१३०. धम् for एवम् Bh.; °मेवैतत् for °मेतत् G.

मदयन्तिकालवङ्गिके । पिअसहि मणोरहातिक्कन्तदंसणे संभावेहि अम्हे परिस्सङ्गेण । (क)

माल० । हा पिअसहिओ । (ख) उभे आलिङ्गति ।

काम० । वत्सौ किमेतत् ।

११५ माधवमकरन्दौ । भगवति

कपालकुण्डलाकोपदुर्जातजनितापदः ।
वयमभ्युद्धृताः कृच्छ्रान्निर्बन्धादार्ययानया ॥

काम० । कथमघोरघण्टवधविजृम्भितमेतत् ।

---

(क) प्रियसखि मनोरथातिक्रान्तदर्शने*संभावयावां परिष्वङ्गेन ।
(ख) हा प्रियसख्यौ ।

---

सौदामिन्या कपालकुण्डलारोषाद्दुर्जातं मालत्यपहरणरूपं तज्जनितविपत्तेः सकाशात्कृच्छ्रात्संकटान्निर्बन्धेनातिप्रयत्नेन वयमुद्धृताः ।

---

११३. इतरे Bh. O. इतराः K1. N. for म-के; प्पिय for पिअ O.; मालदि after सहि G.; मनोरहाछिन्त (corr. into तिक्कांत) for मणो-न्त O.; °हांतरिद A. °हातिरित्त Bh. E. °धातत्तरिद G. °हादिरित्त N. for °हातिक्कन्त; कंत for क्कन्त C.

११४. अम्ह C. अम्हि G. अम्हेहि K1. अम्हो O. for अम्हे; °सङ्गे° for °स्सङ्गे° K1.

११४. C. G. om. हा; प्पिय for पिअ O.; सहि Bh. सहीओ K1. O. for सहिओ; आलिंगतः for आ-न्ति Bh.

११५. मकरंदमाधवौ for मा-न्दौ Bh. O.; K1. om. भगवति; कपालकुंडलाकोपविजृंभितमेतत् after °वति E.

११६. काय for कोप Bh.

११७. वयमतिबंधनात्कृच्छ्रादुद्धृता आ° for व-दा° Bh.; °मप्यु° for °मभ्यु° A. G. N.; कृच्छ्र for कृच्छ्रात् N.; °बन्धेन for °बन्धाद् A.

११८. E. K1. O. om. वध; बंध Bh. वधू N. for वध.

* दर्शनेन Com.

मदयन्तिकालवङ्गिके । अह्हो अच्चरीअं पुणरुत्तदारुणस्स परिणामरमणीज्जत्तणं विहिणो । (क) १४०

प्रविश्य सौदामिनी । उपसृत्य । भगवति कामन्दकि स एष वश्चिरन्तनोन्तेवासी जनः प्रणमति ।

काम० । अये भद्रा सौदामिनी ।

माधवमकरन्दौ । सविस्मयम् । कथमियं भगवत्याः पक्षपातस्थानमाद्यशिष्या सौदामिनी । तत्सर्वमधुना संगच्छते । १४५

काम० । एह्येहि भूरिजनजीवितदानपुण्य-

---

(क) अहो आश्चर्यं पुनरुक्तदारुणस्य परिणामरमणीयत्वं विधेः ।

---

१३९-१४९ अत्र पुनःक्लेशकारितया पुनरुक्तदारुणत्वम् । प्रतिकूलस्यैव विधेरधुनानुकूलत्वमित्याश्चर्यम् । एहीत्यादि मालतीरक्षणेन बहु जनरक्षणजन्यपुण्यनिवहधारिके हे चिरेण त्वं दृष्टासि । अतो हेतोस्त्वमेह्यागच्छ । हन्त हर्षे । ममाङ्गमालिङ्ग्य हर्षय ।

---

१३९. लवंगिकामदयंतिके for म-के Bh. O.; A. om. अह्हो; अच्चरिअं Bh. Kl. अछरीयं twice G. अच्चरिअं twice N. अछरियं twice O.; पुनरु° for पुणरु° A. E. N. O.

१४०. रामणिज्जयं for र-णं O.; परमणीय° for रमणीज्ज° Bh.; °णिज्जअं for णीज्जत्तणं Kl.; °णीज्जं विहिणो विलसिदं for °णी-णो A.; विहुणो for विहिणो Bh.

१४१. सौदामिनी again before उप° Bh.; N. O. om. उपसृत्य; C. has lost उपसृत्य-सौदामिनी (l.143).

१४२. G. O. om. वः; °नोन्ती° Kl. °नांते N. for °नोन्ते; वासि for वासी A. G.; °सिनः for °सीजनः Bh.

१४३. भद्रे सौदामिनि for भ-नी. N.

१४४. G. om. this speech; Kl. om. माधव-मिनी (l. 145); N. O. om. सविस्मयम्; C. om. कथमियम्; सा after °मियं Bh. N. O.

१४५. आद्या A. अग्र C. for आद्य; यत् E. N. यतः O. for तत्; यतः सर्वमाद्य for त-ना Bh.

१४६. एही° for एह्ये° Kl.; बहु for जन A. Bh. C. N.; दारु for दान Bh.

संभारधारिणि चिरादसि हन्त दृष्टा ।
दत्तप्रमोदमपि नन्दय मे शरीर-
मालिङ्ग्य सौहृदनिधे विरम प्रणामात् ॥

१५० अपि च । वन्द्या त्वमेव जगतः स्पृहणीयसिद्धि-
रेवंविधैर्विलसितैरतिबोधिसत्त्वैः ।
यस्याः पुरापरिचयप्रतिबद्धबीज-
मुद्भूतभूरिफलशालि विजृम्भितं ते ॥

---

शरीरं कीदृशम् । दत्तानन्दमपि मालतीदर्शनेनेति भावः । हे सौहृदाश्रये नतेर्विरम । त्वमेव नमस्या यतः ।

१५०-१५३ तदेवाह । वन्द्येत्यादि । त्वमेव संसारस्य नमस्या । एवंविधैर्विलसितैर्दिव्यक्रमाद्यैः श्लाघनीयसिद्धिस्त्वं यतः । कीदृशैः । बोधिसत्त्वा जीमूतवाहनादयः । तानप्यतिक्रामन्ति तैः । तेषामेकैकजीवनात्त्वया त्वनेकजीवनादतिशय इति भावः । यद्वा । बोधिसत्त्वो बुद्धविशेषः । तदतिक्रमवर्तिभिः । अनेकपुण्यकारित्वात् । यस्यास्तव विजृम्भितं चेष्टितं पूर्वपरिचयेन प्रतिबद्धं कलितं बीजं कारणं यत्र तत् । उद्भूतप्रचुरफलयुक्तं च भवति । तथा च त्वदुपकरणेन कृतार्थास्मीति भावः । अन्यदपि कलमाद्यङ्कुररूपं विजृम्भितं पूर्वप्रतिबद्धबीजमुद्भूतप्रचुरफलशालि भवतीति ध्वनिः ।

---

१४७ चिराय मयासि दृष्टा for चि-ष्टा A. E.

१४८. अभि for अपि Kl.; जीवय for नन्दय Bh.

१५०. जगतां A. जगति C. O. for जगतः.

१५१. °धिबोधि E. °विरोधि G. °पिबोधि Kl. °विबोधि O. for °तिबोधि.

१५२. बंधि E. बोध G. for बद्ध.

१५३. सालि for शालि Bh.; °तेन Bh. N. °तं नः G. for °तं ते.

मदयन्तिकालवङ्गिके। इअं सा अज्जा सौदामिणी। (क)
माल०। बाढं। इमाए क्खु भअवदीसंबन्धपक्खवादिणीए १५५
णिब्भच्छिअ कवालकुण्डलं अत्तणो आवसधं उवणीअ भअ-
वदीसिणेहणिव्विसेसं समासासिदम्हि। किं च केसरावलीसा-
हिण्णाणहत्थाए इह आगन्तूण सव्वे तुम्हे संधारिदा। (ख)

(क) इयं *सार्या सौदामिनी।

(ख) बाढम्। अनया खलु भगवतीसंबन्धपक्षपातिन्या निर्भ-
र्त्स्य कपालकुण्डलामात्मन †आवसथमुपनीय भगवती‡स्नेहनिर्विशेषं
समाश्वासितास्मि§। किं च केसरावली‖ साभिज्ञानहस्तयेहागत्य**सर्वे
यूयं संधारिताः।

१५७-१५९ अत्र समासादिता प्रापिता। केसरावली ब-
कुलमाला सैवाभिज्ञानं प्रत्ययचिह्नं हस्ते यस्याः। तया संधारिता रक्षिता
मज्जीवनेनेति भावः। अत्र त्वज्ज्येष्ठा कामन्दकी यथास्माकं सुप्र-

१५४. लवंगिकामदयंतिके for म-के Bh.; मद°। लवंगिके इ° for म-इ° O.; इयं for इअं Bh.; सोदा° for सौदा° G. Kl. N.; °मिनी for °मिणी Bh.

१५५. एमाए G. इमा Kl. for इमाए; E. G. om. क्खु; खु Bh. खु O. for क्खु; A. E. om. संबन्ध; °दीणिव्विसेसवद्धपक्खवादाए Bh. °दीणिव्विसेसं बद्धपक्खपादाए N. for °दी-णीए.

१५६. त्थिअ for °च्छिअ Bh.; कपाल for कवाल Bh. O.; °ण्डलां for °ण्डलं A.; °सउच्छव for °सधं उव Bh.; उअणीअ G. उवणिअ N. उवणयिय O. for उवणीअ; मं after °णीअ A. C. E.; N. om. भअ-सेसं.

१५७. A. Bh. E. Kl. O. om. सिणेह; णिव्वि° for णिव्वि° O.; समस्सादि° for समासासि° Bh.; °सादिदम्हि for °सा-म्हि G. Kl.; अ for च N.; °वलि for °वली Bh.; अहि° for साहि° A.

१५८. °भिणा Bh. °भिणाण for Kl. °हिण्णाण; इहागतूण Bh. एत्थागदुअ G. इहागन्तूण N. for इ-ण; संभाविदा for सं-दा Bh.; सव्वे तुह्मे संधारिदम्हि C. सावसेसं धारिदा E. सव्वे संधारिदा तुह्मेत्ति G. सव्वे सम्भारिदा तुह्मे वि Kl. सव्वे एव्व वारिदि (?) मरणादो तुह्मे O. for स-दा; A. C. E. om. तुह्मे; after °रिदा A. has मरणादो सा एसा जीविदप्पदायिणी सौदामिणी; E. with A. but has सोदा° for सौदा;° C. has मरणादो ता एसा तादजीविद &c., as in A. E.

* Com. om. सा. † °मात्मनोवसथ° Com. ‡ Com. om. स्नेह. § समासादितास्मि Com. ‖ °वल्यभिज्ञान Com. ** सर्वे संधारिता मरणात्पूर्वं Com.

मदयन्तिकालब्धिके । सुप्पसण्णा णो कणिट्ठा भअवदी । (क)

१६० माधवमकरन्दौ । अहो नु खलु भोः ।

अपि चिन्तामणिश्चिन्तापरिश्रममपेक्षते ।
इदं त्वचिन्तितं मन्ये कृतमाश्चर्यमार्यया ॥

सौदा० । स्वगतम् । हन्त लज्जयति मामत्यन्तसौजन्यमेषाम् । प्रकाशम् । भगवति एतत्प्रहृष्टनन्दनाभिनन्दितेन

१६५ राज्ञा पद्मावतीश्वरेण भूरिवसोः प्रत्यक्षमभिलिख्य पत्रमायुष्मतो माधवस्य प्रेषितम् । लेखमर्पयति ।

---

( क ) सुप्रसन्ना नः कनिष्ठा भगवती ।

---

सन्ना तथा त्वमपि भवेत्यर्थः । सौदामिनीज्येष्ठत्वादपि भगवत्या गुरुत्वात्तस्यामत्यादरसूचनम् । यद्वा । सौदामिन्या एव भगवतीकनिष्ठत्वेनादर उक्तः ।

१६१–१६४ अपीत्यादि । चिन्तामणिरपि चिन्तारूपं परिश्रममपेक्षते । अचिन्तितप्रदाने चिन्तामणित्वव्याघातादिति भावः । इद पुनराश्चर्यं मन्ये यदार्यया सौदामिन्याचिन्तितं कृतमिति । तथा चात्रानुकारोऽपि नेति भावः । अत एवात्यन्ताश्चर्यम् । नन्दने प्रहर्षो मकरन्दमदयन्तिकानुरूपघटनात् ।

---

१५९. इतरे Bh. O. इतरा Kl. इतराः N. for म-के; सुप° for सुप्प° O.; °सणा for °सण्णा Kl.; Kl. om. णो; णि (?) for णो O.

१६०. माधवः for मा-न्दौ Bh.

१६१. परिग्रह [or भ्रम] for परिश्रम N.

१६२. इदं त्वकृतमन्येन कृताश्चर्यमचिन्तितं for इ-या A. E.; इदं त्वकृतमन्येन for इ-न्ये Bh. G.

१६३. आत्म for त्व Bh.; एवं for अत्यन्त A. E.

१६४. Kl. om. एतत्.

१६५. Bh. om. भूरि; आलिख्य for अभिलिख्य Bh.; A. E. om. पत्रम्; अस्मत्तो for आयुष्मतो E.

१६६. इति before लेख° G.; इति पत्रम् A. लेखम् Bh. लेखपत्रम् E. for लेखम्.

काम० । गृहीत्वा वाचयति । स्वस्त्यस्तु वः । परमेश्वरः समाज्ञापयति यथा

श्लाघ्यानां गुणिनां धुरि स्थितवति श्रेष्ठान्वये च त्वयि
प्रत्यस्तव्यसने महीयसि परं प्रीतोस्मि जामातरि । १७०
तेनेयं मदयन्तिकाद्य भवतः प्रीत्यै तव प्रेयसे
मित्राय प्रथमानुरागघटिताप्यस्माभिरुत्सृज्यते ॥

माधवमुद्दिश्य । वत्स श्रूयताम् ।

माध० । श्रुतम् । इदानीं सर्वतः कृतार्थोस्मि ।

---

१६९–१७४. वरगुणानाह । श्लाघ्यानामिति । यदिह त्वयि जामातर्येत्यर्थे प्रीतोस्मि तेनेयं मदयन्तिका तव प्रीत्यै त्वत्प्रीतिं कर्तुं भवतः प्रेयसे मित्राय प्रिय सुहृदे मकरन्दायाद्यास्माभिरपि दीयते । पूर्वमनुरागेण दत्ता । प्रीतिहेतुमाह । सच्चरितानां गुणिनां च गणनायां स्थिते प्रशस्तवंशे । पाठान्तरे ख्यातवंशे । प्रत्यस्तं क्षिप्तं व्यसनमशुभं यत्र तत्र । सातिशये । प्रत्युत्पन्नमताविति पाठेभिनवोत्पन्नबुद्धौ प्रतिभावतीत्यर्थः । कृतार्थता नृपनन्दनाविरोधात् ।

---

१६७. माध॰ for काम॰ Bh.; K1. om. गृहीत्वा वाचयति; N. om. स्व–यथा; O. also but in margin supplies the words up to ॰यति.

१६८. Bh. K1. om. यथा.

१६९. ॰न्वयेपि A. Bh. ॰न्ववाये N. for ॰न्वये च.

१७०. प्रत्युत्पन्नमतौ for प्र-ने noticed by Com.

१७१. भवत् for तव Bh.

१७२. ॰यास्मा॰ for ॰प्यस्मा॰ E.

१७३. कामंदकी । सहर्षं before माध॰ Bh.; सहर्षं after उद्दिश्य N. O. श्रुतं श्रुतं for व-म् N.; श्रुतं for श्रूयताम् Bh. K1. O.

१७४. K1. om. माध॰ |; तु Bh. च K1. O. after इदानीं; इदानीमेव कृतार्थः संवृत्तोस्मि for इ-स्मि G.

१७५ माल०। दिट्ठिआ एत्ताहे अवहदं हिअअस्स आसङ्कासल्लं। (क)

लव०। संपदं णिरवसेसं माहवसिरिणो मालदीए अ फलिदा मणोरहा। (ख)

मक०। पुरोऽवलोक्य। कथमवलोकिताबुद्धरक्षिते कलहंसकेन सह प्रमोदनिर्भरं नृत्यन्त्यावित एवागच्छतः।

१८० ततः प्रविशतोऽवलोकिताबुद्धरक्षिते कलहंसकश्च। विविधं नृत्यं

---

(क) दिष्ट्येदानीमपहृतं *हृदयस्याशङ्काशल्यम्।

(ख) सांप्रतं निरवशेषं श्रीमाधवस्य मालत्याश्च फलिता मनोरथाः।

---

१७५-१८५ अत्रैत्ताहे इदानीम्। आशङ्का विरोधादिविषया। मर्मभेदित्वाच्छल्यम्। अत्र श्रीमाधवस्येति प्राकृते पूर्वनिपातानियमत्वात्। फलिता मनोरथाः। एतयोरायतिशुद्धविवाहादिति भावः। [सर्वथा०]

---

१७५. एदं वि दाव अगअं for दा-दं N.; एत्ताहि Bh. संपदं E. एकाहेज्जेव O. दाणिं G. for एत्ताहे; C. om. एत्ताहे; अपहदं A. ववगदं Bh. G. गदं E. O. for अवहदं; णो before हिअ° A. Bh. E.; णो after °स्स O.; संका for आसङ्का G.

१७६. K1. om. लव०।; णिसेसं C. E. निरवसेसं K1. for णिरवसेसं; णिरवसेसा पूरिदा माहवस्स मणोरहा Bh. निरवसेसा माहवस्स मणोरहा पूरिदा N. for णि-हा; माह—वस्स फलिया for माह-दा O.; समं before अ E.; C. K1. om. अ; समं after अ A.; फुरिदा for फलिदा E.

१७७. मनो for मणो K1.; °रथा for °रहा G.

१७८. N. O. om. पुरोऽवलोक्य; कथं बुद्धरक्षितावलोकिताकलहंसाः दूरतः समुदितास्मान्वीक्ष्य तत्रैवहर्षनिर्भरं प्रनृत्ताः for क—तः N.; °क्षिता कलहंसकश्च दूरतः प्रमुदितानस्मानुद्वीक्ष्य तत्रैव हर्षनिर्भरं प्रनृत्ताः (corr. in margin into नृत्यंति) for °क्षि—तः O. and adds सर्वे सस्मितं पश्यंति.

१७९. K1. om. सह—हंसकश्च (l. 180); G. om. सह; सुप्रमोदं A. सप्रमोदं G. for प्र-रं; E. om. प्र-रं; प्रमोदं नृत्यन्त्यौ for प्र-न्त्यौ Bh.

१८०. N. om. ततः—पश्यन्ति (l. 183); O. also but supplies it in the margin; ततः प्रविशंति अवलोकिताबुद्धरक्षिताकलहंसाः for ततः-कश्च G.; यथानिर्दिष्टे after प्रविशतः C.; °क्षिता for °क्षिते O.; °संश्च for °सकश्च A.; नृत्तं for नृत्यं K1.

* हतं नो हृद° Com.

